श्री न ला य न म्

कु बे र पु रा णं

भावनगरस्थश्रीयशोविजयजैनग्रन्थमालात.
प्राकाश्यं नीतम् ।



भावनगरस्थश्रीमहोदयमुद्रणालयाधिपतिना
श्रेष्ठीश्रीलल्लुभाईतनूजेन गुलाबचन्द्रेण मुद्रितम् ।

Yashovijaya Jain Publication Series No 141

# NALĀYANAṀ

## ( KUBERAPURĀNAṀ )

By

SHRI MĀNIKYA DEV SŪRI OF VATAGACHHA

*Vir Era 2464* *Dharma Era 16* *Vikram Era 1994* *Christian Era 1938*

Price Rs. 9-0-0



नमः प्रभुश्रीविजयधर्मसूरिगुरुभ्यः ।

# प्रस्तावना

अत्रैव भारतेऽभवन्ननेके बुद्धिधनपराजिताशेषधनधारिणो ज्ञानवैभवाः श्रीमन्तः कविशिरोमणयः सजाताः, यैर्न केवलं ग्रन्था एव निर्मिताः किन्तु स्वकीयकाव्यकर्तृत्वनैपुण्येन महतामशेषदिक्चक्रचक्रवर्त्तिनामुपरि संपूर्णतया धर्मप्रभावोऽपि सुचारुरूपेण निहितः । अस्मिन् जगति कियन्तः कवीश्वराः सजाताः, केन केन कविना च के के ग्रन्थाः केषु केषु विषयेषु निर्मिता इति यद्यपि निर्णयो नास्ति तथापि ये प्राचीनतराश्चरितग्रन्था भाण्डागारेषूपलभ्यन्ते तेषामवलोकनेनावगम्यत एवैतद् यन्महाराजनलनृप आसीत् । तस्य च बहुभिर्गारतपुराणे कविभी रामचन्द्र–हरिश्चन्द्रचरितवच्चरितमलिखितं तद्द्यावधि तत्तद्देशीयभाषासु विलोक्यते तथापि कवित्ववैचित्र्यादतीव प्राचीनत्वादस्माभिर्मुद्रितेषु ग्रन्थेषु समावेशाभावाच्च श्रीमाणिक्यसूरिनिर्मित नलायननामकं नलचरितं प्रकाश्यते ।

अस्माभिस्तिस्रः प्रतयोऽस्यावलोकिताः, तासु चैका भावनगरस्थपन्यासगम्भीरविजयज्ञानभाण्डागारादधिगता, द्वितीया चोग्रसेन-(आगरा)पुरीयश्रीविजयधर्मलक्ष्मीज्ञानमन्दिराच्चोपलब्धा, तृतीया च मुम्बापुरीस्थ–रॉयल–एशियाटिकसोसाइटीसंस्थायाः प्राप्ता ।

उपरितनेषु त्रिषु पुस्तकालयेषु यानि पुस्तकानि विद्यन्ते तानि सर्वाण्यतीव शुद्धानि ।

# नलायनम्

पुण्यश्लोकचरितरूपमिदं नलायन दशस्कन्धान्तर्गतैकोनशतसर्गात्मकमत्युत्तमम्। तत्र प्रथमे स्कन्धे पञ्चदश सर्गास्तेषु चतुर्विंशत्यधिकषट्शतसंख्याकाः श्लोकाः ६२४, द्वितीये स्कन्धे षोडश सर्गाः, एकसप्तत्यधिकचतुःशतसख्याकाः श्लोकाः ४७१, तृतीये स्कन्धे नव सर्गाः, एकोननवत्यधिकद्विशतसख्याकाः श्लोकाः २८९, चतुर्थे स्कन्धे त्रयोदश सर्गाः, द्व्यूनसप्तशतसख्याकाः श्लोकाः ६९८, पञ्चमे स्कन्धे एकविंशतिः सर्गाः, नवत्रिंशदधिकनवशतसंख्याकाः श्लोकाः ९३९, षष्ठे स्कन्धे सप्त सर्गाः, चतुःपञ्चाशदधिकत्रिशतात्मकाः श्लोकाः ३५४, सप्तमे स्कन्धे षट् सर्गाः, अष्टाशीत्यधिकद्विशतसंख्याकाः श्लोकाः २८८, अष्टमः स्कन्धः चतुःसर्गात्मकः त्रिषष्ठ्यधिकैकशतश्लोकात्मकश्च १६३, नवमः स्कन्धः चतुःसर्गात्मकोऽष्टादशाधिकशतश्लोकमयः ११८, दशमस्तु स्कन्धश्चतुःसर्गात्मकः षडधिकैकशतश्लोकसंख्यश्च १०६। एवमेकोनशतसर्गात्मकं पञ्चाशदधिकचतुःसहस्रश्लोकसंख्यकमिदं नलायनम्।

इदं च विस्तृतं नलायनं श्रीनल–दमयन्त्योश्चरितात्मकं द्वादशवर्षपर्यन्तं दम्पत्योर्वियोगवर्णनेन महदद्भुतं, द्यूताऽऽसक्तजनानां या या दुर्दशा परिवर्त्तन च यादृशं भवति तेनातीव हृदयग्राहि, प्रासंगिकोदाहरणेन मनोहरं च वरीवर्त्ति।

अस्मिन् ग्रन्थे शाकुन्तलाख्यानकं, कलावत्याः तिलकमञ्जर्याश्चावान्तरकथा अपि विद्यन्ते।

## नलायनप्रशंसा

निदाघे चन्दनं हृद्यं, हृद्या वर्षासु मालती। पिकध्वनिर्मधौ हृद्यः, सदा हृद्यं नलायनम्॥ २१ ॥ प्र० स्कं १ स०।
अमीमं भीमसयुक्तममरालं मरालवत्। न कस्य विस्मयं दत्ते, वाच्यमानं नलायनम् ॥ २५ ॥ प्र० स्कं० १ स०।

## नलप्रशंसा

यत् पुण्य जाह्नवीस्नानाद् यत् पुण्य गुरुपूजनात् । यत् पुण्यं प्राणिना त्राणात् तत् पुण्यं नलकीर्तनात् ॥ २० ॥ प्र० स्क० १ स० ।

## नलकीर्तने नलनामग्रहणे च फलम्

यथा श्रेयस्कर दान यथा पापहरं तपः । यथा शौचकरं शीलं तथैव नलकीर्तनम् ॥ २२ ॥ प्र० स्क० १ स० ।

प्रकृत. शकुनाः सर्वे सुप्रशान्ताः फलप्रदा' । कार्यकाले नलस्यैकं नामग्रहणमन्यत ॥ २३ ॥ प्र० स्क० १ स० ।

भरतश्चार्जुनश्चैव वैण्यश्च पृथिवीपतिः । नलश्च नैषधो राजा यात्राया सिद्धये स्मृताः ॥ २४ ॥ प्र० स्क० १ स० ।

निर्मल भीरल्ललित विशाल विश्वविश्रुतम् । पुण्यश्लोकस्य राजर्षे' कीर्तनं कलिनाशनम् ॥ २६ ॥ प्र० स्क० १ स० ।

## अन्यस्मिन् ग्रन्थे च नलादीनां स्तुतौ फलप्रदर्शनम्

कर्कोटकस्य नागस्य, दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षे. कीर्तनं कलिनाशनम् ॥ १ ॥

## ग्रन्थेऽस्मिन् शब्दानुप्रामः, अन्ये चालङ्काराः—

कलाकेलिकल्लोलिनीलब्धपार' कुले वीरसेनस्य धर्मावतारः । जयश्रीवधूकण्ठशृङ्गारहार' सदा नैषध । त्व सदाचारसारः ॥६॥ स्कं० ३ स० १ ।

कलुष' कुटिलः कुण्ठः कितवः क्रोधन. कुधी । कृतघ्नः कृपणः क्रूरः कठोर' कोऽपि नाभवत् ॥ ४१ ॥ प्र० स्क० १ स० ।

सपारिजातस्य सपारिजात निरञ्जनस्यापि घनाञ्जनौघम् । तथापि राजन् ' न तवापि हर्षं वन विघ्चामवनप्रियस्य ॥११॥ स्क० २ स० ७ ।

जितपुष्करं सकलरुद्धपुष्करं निनदन्नुदारमनुदारमुत्सुकः । इह शीतलं समवगाह्य पुष्करं प्रतिपुष्करं क्षिपति पुष्करं करी ॥२५॥ प्र० स्कं० ७ स०। लोलानिलेनाननुनूननुन्ना नानालिलीलोल्लललं लुलाना । नूनेन नूनं नलिनाननेन नलेन लीना ललने ! ललालम् ॥४९॥ प्र० स्कं० १४ स०।

**पद्मबन्धः**

सहसारिकृतत्रासः सत्रात त्वं कलारसः । सरलाशयताभासः सभातारोरुसाहसः ॥ ४८ ॥ स्क० १ स० २ ।

एवं स्थाने स्थाने शब्दानुप्रासैः, यमकैः, श्लेषादिभिश्चालङ्कारैः परिपूर्णं चेदम् ।

**ग्रन्थकर्तुः परिचयः**

प्रत्येकस्कन्धान्ते ग्रन्थकर्त्रा स्वप्रशस्तिः स्वयमेव प्रदत्ता । तत्र च ' माणिक्यसूरिः ' इति स्वनाम लिखितम् । परमनेन कविरत्नेनायं ग्रन्थः कदा निर्मित इति समीचीनरीत्या निर्णयं कर्तुमस्माकं समीपे यद्यपि पुष्कलं साधन न विद्यते तथापि यानि कानिचिद् विश्वसनीयानि साधनानि उपलभ्यन्ते तान्येवात्र प्रकटीक्रियन्ते—

स्व० आचार्यबुद्धिसागरसूरिणा प्रणीते ' जैनप्रतिमालेखसङ्ग्रह–' नाम्नि ग्रन्थे प्रथमे भागे षड्विंशतितमे पत्रे सप्तत्रिंशदधिकशतसंख्यके लेखे लिखितम्—

" सं. १३२७ फा. शु. ८ ..पलीवालज्ञातीय....कुमरसिंघभार्या कुमरदेविसुत सामंतभार्या सिंगारदेवि पित्रोः पुण्यार्थं....विक्रमसिंह ठ० लूणा ठ० सागाकेन श्रीमहावीरबिम्बं का० प्र० वडगच्छे कूत्रडे ...श्रीपडोचंद्रसूरिशिष्य–श्रीमाणिक्यसूरिभिः ॥ "

द्वितीयं प्रमाणमुपर्युक्तस्य पुस्तकस्य षट्सप्तत्यधिकशततमे पृष्ठे एकाशीत्यधिकनवशतसङ्ख्याके लेखे लिखितम्—

"सं. १३७५ वर्षे माघ शुदि ५ शनौ श्रीओसवालज्ञा०श्रे०....भा० पाल्हश्रेयसे पु० सिंहेन श्रीपार्श्वनाथबिम्बं प्र० श्रीमाणिक्यसूरिभिः।"

अनेन कविनाऽन्येऽपि बहवो ग्रन्था रचितास्तेष्वेको जामनगरनिवासिना श्राद्धरत्नेन हंसराजात्मजेन पण्डितवर्येण हीरालालेन स्वीयमुद्रणालये मुद्रापितस्तस्य नाम खलु यशोधरचरित्रम्। तदवलोकनेनैतद् निर्णीयते यद् अयं ग्रन्थकारः कलिकाल–सर्वज्ञ–विद्वच्छिरोऽवतंस–आचार्यश्रीमद्हेमचन्द्राचार्यानन्तरमभवत्। यशोधरचरित्रस्याऽऽदौ मङ्गलार्थमेतच्छन्दः—

'करामलकवद्विश्वं कलयन् केवलश्रिया। अचिन्त्यमाहात्म्यनिधिः सुविधिर्बोधयेऽस्तु वः॥'

इदं नलायनं यशोधरचरित्रनिर्माणकालात् पश्चाद् निर्मितमिति तेनैव कविरत्नेन नलायनस्य प्रत्येकस्कन्धान्तवर्त्तिन्या प्रशस्तौ प्रतिपादितम्—

'एतत् किमप्यनवमं नवमङ्गलाङ्कं, श्रीमद्यशोधरचरित्रकृता कृतं यत्।
तस्यार्यकर्णनलिनस्य नलायनस्य स्कन्धो जगाम रसवीचिमयस्तृतीयः॥'

## नलायन–यशोधरचरित्रयोरेककर्तृत्वम्

अस्मिन् विषये प्रमाणरूपा इमे श्लोका. सन्ति—

"अराजकमहो विश्व ही भो निःशरण जगत्। दुर्बलो बलिभिः कस्माद् हन्यते बालिशैः पशुः॥"

नलायने नवमे स्कन्धे द्वितीये सर्गे श्लोकः ८।

यशोधरचरित्रे च द्वितीयसर्गे श्लोकः ३३।

" अन्तःपुरं पुरं वापि किं राज्ञां श्वापदैः क्ष(क्र)तम् । विनाऽपराधं तत्तेषा वधमाधाय का गतिः ॥ "

नलायने नवमे स्कन्धे सर्गे द्वितीये श्लोकः ६ ।

यशोधरचरित्रे च द्वितीयसर्गे श्लोकः ३४ ।

' नान्दोलिताः कपिकुलैरपि वृक्षशाखाः, दुःखेन वेणुभिरपि क्वणितं निरस्तम् ।
मुद्रा मुखे विघटिता न विहंगमाना—मङ्गीकृतं न च तृणं हरिणाङ्गनाभिः ॥ '

नलायने पञ्चमे स्कन्धे प्रथमे सर्गे श्लोकः २९ ।

यशोधरचरित्रे च त्रयोदशे सर्गे श्लोकः ७८ ।

उपर्युक्ताः समश्लोकाः यादृशाः प्रमाणरूपा अस्माभिः प्राप्तास्तादृशा एव प्रदर्शिताः । अनेन कविवर्येण अन्येऽपि बहवो ग्रन्था निर्मितास्तेषां यानि नामान्यस्माभिः प्राप्तानि तानि चैतानि—

१–२ मुनि–मनोहरौ । ३—यशोधरचरित्रम् । ४—अनुभवसारविधिः ।

५—पञ्चनाटकम् । ६—नलायनम् ।

उपरितनेषु ग्रन्थेषु अस्माभिर्यशोधरचरित्रं नलायनं चोभौ ग्रन्थावुपलब्धौ मुद्रितौ च । अन्ये ग्रन्थाः कुत्रापि सन्ति न वा एतद्विषये किमपि वक्तुं न शक्यते। किञ्च—एतानि नामानि अनेनैव ग्रन्थकारेण अस्य नलायनस्य प्रत्येकस्कन्धस्यान्तिमे भागे उल्लिखितानि।

## प्रशस्तिः

अस्य नलायनस्य दश स्कन्धाः सन्ति, तेषां प्रत्येकस्कन्धाना समाप्तौ अनेनैव ग्रन्थकर्त्रा स्वप्रशस्तिर्दर्शिता । यथा—

एतत् किमप्यनवमं नवमङ्गलाङ्कं माणिक्यदेवमुनिना कृतिना कृत यत् ।
तस्यार्यकर्णनलिनस्य नलायनस्य स्कन्धोऽयमुत्तमतमः प्रथमः समाप्तः ॥

प्रथमः स्कन्धः, पञ्चदशः सर्गः, श्लोकः २४, पृष्ठम् ३० ।

एतत् किमप्यनवमं नवमङ्गलाङ्कं, यद् निर्ममे मुनि-मनोहरयोर्विधाता ।
तस्यार्यकर्णनलिनस्य नलायनस्य, स्कन्धो जगाम रमणीयरुचिर्द्वितीयः ॥

द्वितीयः स्कन्धः, षोडशः सर्गः, श्लोकः २५, पृष्ठम् ५४ ।

एतत् किमप्यनवमं नवमङ्गलाङ्कं, श्रीमद्यशोधरचरित्रकृता कृतं यत् ।
तस्यार्यकर्णनलिनस्य नलायनस्य, स्कन्धो जगाम रसवीचिमयस्तृतीयः ॥

तृतीयः स्कन्धः, नवमः सर्गः, श्लोकः ४०, पृष्ठम् ६९ ।

एतत् किमप्यनवमं नवमङ्गलाङ्कं, माणिक्यदेवमुनिना कृतिना कृतं यत् ।
तस्यार्यकर्णनलिनस्य नलायनस्य, स्कन्धो जगाम चतुराभिमतश्चतुर्थः ॥

चतुर्थः स्कन्धः, त्रयोदशः सर्गः, श्लोकः ३६, पृष्ठम् १०१ ।

एतत् किमप्यनवमं नवमङ्गलाङ्कं, चक्रे तदत्र **वटगच्छनभोमृगाङ्कः** ।
तस्यार्यकर्णनलिनस्य नलायनस्य, स्कन्धः प्रपञ्चचतुरोऽजनि पञ्चमोऽयम् ॥

पञ्चमः स्कन्धः, एकविंशतितमः सर्गः, श्लोकः ८२, पृष्ठम् १४३ ।

एतत् किमप्यनवमं नवमङ्गलाङ्कं, यद् निर्ममे कितवचक्रशिरोऽवतंसः (?) ।
तस्यार्यकर्णनलिनस्य नलायनस्य, स्कन्धो जगाम गुहमस्तकसह्य एषः ॥

षष्ठः स्कन्धः, सप्तमः सर्गः, श्लोकः ५४, पृष्ठम् १५८ ।

एतत् किमप्यनवम नवमङ्गलाङ्कं, यद् निर्ममे**ऽनुभवसारविधेर्विधिज्ञः** (?) ।
तस्यार्यकर्णनलिनस्य नलायनस्य, स्कन्धः समाप्त इह सप्तमसङ्ख्ययाऽयम् ॥

सप्तमः स्कन्धः, षष्ठः सर्गः, श्लोकः ५३, पृष्ठम् १७० ।

एतत् किमप्यनवमं नवमङ्गलाङ्कं, यत् कौतुकैकरसिकः सुकविश्चकार ।
तस्यार्यकर्णनलिनस्य नलायनस्य, स्कन्धो महारसमयोऽभवदष्टमोऽयम् ॥

अष्टमः स्कन्धः, चतुर्थः सर्गः, श्लोकः ४२, पृष्ठम् १७७ ।

एतत् किमप्यनवमं नवमङ्गलाङ्कं, यत् **पञ्चनाटक**कविर्वितताम नव्यम् ।

तस्यार्यकर्णनलिनस्य नलायनस्य, स्कन्धो जगाम नवमो रमणीय एष ॥

नवमः स्कन्धः, चतुर्थः सर्गः, श्लोकः ३६, पृष्ठम् १८३ ।

एतत् किमप्यनवमं नवमङ्कलाङ्कं, साहित्यसारविदुषा कविना कृतं यत् ।
तस्यार्यकर्णनलिनस्य नलायनस्य, स्कन्धो जगाम दशमः शमसभृतोऽयम् ॥

दशमः स्कन्धः, चतुर्थः सर्गः, श्लोकः २३, पृष्ठम् १८८ ।

प्रतीनां लेखनसमयः

याः प्रतयोऽस्माकं समीपे विद्यन्ते तासामवलोकनेन ज्ञायते यद् उग्रसेनपुरीया विजयधर्मलक्ष्मीज्ञानमन्दिरतः प्रतिः प्राप्ता या, तस्यां 'वैक्रमीये १४९३वर्षे मार्गशीर्षे शुक्ले पूर्णिमायां तिथौ चन्द्रवासरे तालध्वजे दुर्गे पं० गुणकीर्तिगणिपार्श्वस्थितेन पं० कृपासागरगणिना लिखिता आत्मार्थं श्रेयार्थं' इति लिखितम् ।

द्वितीया प्रतिः भावनगरस्थपं०गंभीरविजयभाण्डागारीया, सा च वैक्रमीये १४७५ वर्षे भाद्रपदमासे श्रीडूङ्गरपुरे लिखिता निम्बाकेन ।

तृतीया प्रतिः मुम्बापुरीस्थरॉयलएशियाटिकसोसायटीसंस्थाया उपलब्धा । तत्र चायमुल्लेखः—

श्रीजीवराजशिवराजकोविदाभ्यामसौ प्रतिर्मुमुचे । चित्कोशे पुण्यार्थं पंडितनीकर्षिशिष्याभ्याम् ॥ १ ॥

चतुर्थी प्रतिस्तु वटपद्रग्रामस्थओरियन्टलसोसाइटीनाम्न्या संस्थया प्रकाशिते जेसलमेरुभण्डारसूचीपत्रे सूचितासु चतसृष्वन्यतमा तदनु-

सारेण तत्रस्था भाण्डागारा दृष्टाः किन्तु तत्र तिस्रः प्रतयो नोपलब्धाः, केवलमेकैव विद्यते, सूचीपत्रकर्त्रा च तस्य ग्रन्थकारस्य सेतुनाटककर्तृत्वं प्रतिपादितं न तु-पञ्चनाटककर्तृत्वम्, उपलब्धासु पूर्वासु तिसृषु प्रतिषु पञ्चनाटककर्तृत्वं लिखितं, जेसलमेरुभंडारसूचीपत्रे सेतुनाटककर्तृत्वं लिखितमिति संदेहे जातेऽस्माभिः जेसलमेरुस्थतपागच्छभण्डारस्था प्रतिः सम्यगवलोकिता किन्तु तत्र नाटकशब्दाग्रे.... इति त्रुटिचिह्नं दत्त परं न किञ्चिदपि लिखितमतः सम्यग्निर्णेतुं न शक्यते । अस्यां प्रतौ "१६५९ वर्षे तपागच्छाधिराजभट्टारकश्री १९ श्रीआनन्दविमलसूरीश्वरशिष्यपण्डितश्रीवानरगणिशिष्य पं. आनन्दविजयगणिभिर्नलायनं काव्यं जेसलमेरुभाण्डागारे मुक्तम्" इति लिखितम्।

एवं प्रथमे द्वे प्रती पञ्चदशशताब्दीये, तृतीयायास्तु समयो नोपलभ्यते, चतुर्थ्यास्तु सप्तदशशताब्दीयो लेखनसमयो ज्ञायते ग्रन्थकारस्य विद्यमानता चतुर्दश्यां शताब्द्यामासीदिति च निर्णीयते ।

## नलायने विशेषः

नानाविधैः चित्ताकर्षकरसवच्छन्दोभी रसोर्मियुक्तालङ्कारैरनुप्रासादिभिर्ग्रन्थकर्तुः खलु स्वग्रन्थरचने प्रौढत्वं श्रोतॄणां चित्ताऽऽह्लादकत्वं, पिपठिषूणां चोच्चाऽऽदर्शशिक्षाप्रदत्व चाभिव्यज्यते । एतच्च पूर्वोद्धृतैः श्लोकैः परीक्ष्यते ।

कीदृशस्य नायकस्य चरित्रं वर्णनीयमिति जिज्ञासायाम्—

## नायकाश्चतुर्विधाः साहित्ये वर्ण्यन्ते—

धीरोदात्ताः, धीरोद्धताः, धीरललिताः, धीरप्रशान्ताश्च। तत्र धीरोदात्तः खलु अविकत्थनः, धैर्यवान्, अतीव गम्भीरः, महासत्त्वो हर्षशोकयोः समस्वभावः, विनयच्छन्नगर्वः, दृढव्रतः, प्राणविनाशेऽप्यङ्गीकृतपालकः, एभिर्गुणैरस्य चरितनायकस्य धीरोदात्तत्वं ज्ञायते ।

## कतिपयानि नलविषये चरित्राणि

पुण्यश्लोकस्य पुण्यजनस्य श्रीमतो नैषधस्य नलभूपतेः प्राचीनतरैरर्वाचीनैर्बहुभिर्गीर्वाणवाण्युपासकैर्भारतीयैः कृतज्ञैः संस्कृत-प्राकृतादिभाषासु काव्य-कथा-चम्पू-नाटकादिभिर्भिन्नभिन्नसंक्षिप्त-विस्तृतरीत्या विरचितानि चरितान्युपलभ्यन्ते ।

सतीशिरोमणिभूताया भीमपुत्र्या दमयन्त्याः पातिव्रत्येन पवित्रीकृतानि सुचरितानि, दोषयुक्तानि द्यूतादिव्यसनानि च जिनोपासकैरितरैश्च कैः कैः कोविदैः कं कं निबन्धं विधाय प्रदर्शितानीति जिज्ञासया गवेषणायां प्रथम—

जैनविदुषां नलविषये संस्कृतप्राकृतकृतयः प्रदर्श्यन्ते—

१—गायकवाड्ओरियन्टलसीरीज़संस्थया प्रकाशितं नलविलासनाटकं कलिकालसर्वज्ञ—आचार्यशिरोमणिश्रीमद्धेमचन्द्राऽऽचार्य-शिष्यवर्यपण्डितप्रवररामचन्द्रसूरिविरचितम् ।

२—भावनगरस्थया जैनधर्मप्रसारकसभया प्रकाशितं त्रिषष्टिशलाकापुरुषचरित्रान्तर्गतम् अष्टमे पर्वणि तृतीयसर्गे नलचरितं महा-राजकुमारपालभूपालप्रतिबोधक—कलिकालसर्वज्ञ—हेमचन्द्राऽऽचार्यनिर्मितम् ।

३—भावनगरस्थयशोविजयजैनग्रन्थमालातः प्रकाशितप्रस्तुतं नलायनं महाकाव्यम् ( कुबेरपुराण—शुकपुराणापरनामकम् ) महाकविमाणिक्यदेवसूरिनिर्मितम् ।

४—नलचरितम्—भावनगरस्थया आत्मानन्दसभया प्रकाशितं प्राकृतगद्यं धर्मसेनगणिविरचितवसुदेवहिण्डीमध्यमखण्डान्तर्गतम् ।

५—नलोपाख्यानम्—देवप्रभसूरिविरचितपाण्डवचरितान्तर्गतं यशोविजयग्रन्थमालायां प्रकाशितम् ।

६–**नलचरितम्**—देवविजयगणिरचितपाण्डवचरितान्तर्गतम्, एतच्च अम्बालान्तर्गताऽऽत्मानन्दसभया प्रकाशितम्।

७–**नलचरितम्**—गुणविजयगणिविरचित–गद्यनेमिनाथचरितान्तर्गतम्। इदं च पण्डितवर्येण अमरचन्द्राऽऽत्मजेन अमृतलालेन (ए. एस्. एण्ड कम्पनीतः) प्रकाशितम्।

८–**दवदंतीचरितम्**—सोमप्रभाचार्यविरचितकुमारपालप्रतिबोधान्तर्गतं गायकवाडओरियन्टलसीरीज़संस्थया प्रकाशितम्।

दवदंतीचरियं—पत्तनभाण्डागारीयप्राकृतसूचीपत्रे सूचितम्।

दमयन्तीप्रबन्धः (गद्यरूपः) जैनग्रन्थावल्यां सूचितः।

दमयन्तीप्रबन्धः (पद्यरूपः) जैनग्रन्थावल्यां सूचितः।

दवदन्तीकथा—सोमतिलकसूरिविरचितशीलोपदेशमालावृत्त्यन्तर्गता जामनगरनिवासिना श्रावकपण्डितहंसराजाऽऽत्मज–हीरालालेन जैनभास्करोदयमुद्रणालयात् प्रकटिता।

दवदन्तीकथा–जिनसागरसूरिविरचितायां कर्पूरप्रकरटीकायाम्। सा च भावनगरस्थया जैनधर्मप्रसारकसभया प्रकाशिता।

दमयन्तीकथा—शुभशीलगणिविरचितभरतेश्वर–बाहुबलिवृत्त्यन्तर्गता राजनगर(अहम्मदावाद)स्थया जैनविद्याशालया गूर्जरभाषानुवादरूपा प्रकाशिता।

उपरितनेभ्यो ग्रन्थेभ्योऽन्यत्रापि हरिवंशपुराणे, पाण्डवपुराणे, नेमिनाथपुराणे, त्रिषष्टिलक्षणपुराणे, नलोपाख्याने, नैषधीयचरिते, नल–दमयन्तीकथा–चम्प्वां, नलोदयकाव्ये, नलाभ्युदये, नलचरितनाटके, नलानन्दनाटके, नलवर्णनकाव्ये, नलभूमिपालरूपके, नल-

निकषनाटके, नलचरितकाव्ये, सहृदयानन्दे, राघवनैषधीये, नल–यादव–पाण्डव–राघवीये, नलस्तोत्रे, दमयन्तीपरिणयकाव्ये, भैमी-परिणयनाटके, पुण्यश्लोकोदयनाटके, नल–दमयन्तीये जैननैषधीयचरिते, कथाकोषे, कथावल्यां, नेमिनाथचरिते, वसुदेव–कनकवत्यादि-कथान्तर्गतस्वतन्त्रकथाचरितरूपे च नल–दमयन्त्याख्यानम् उपलभ्यते ।

प्राय एते सर्वे ग्रन्था मुद्रिताः सन्ति ।

---

प्राय इतरजैनग्रन्थेऽस्माभिर्नलचरितविषये यो भेदोऽवलोकितः सोऽपि प्रकटीक्रियतेऽत्र–

| | [illegible] | नलविलासे– | नलचरिते– | त्रिषष्टिशलाकापुरुषचरित्रान्तर्गते– | देवविजयगणिविरचिते पाण्डवचरित्रान्तर्गते नलोपाख्याने– |
|---|---|---|---|---|---|
| [illegible] | वीरसेनः | निषधः | निषधः | | निषध–वीरसेनौ |

| | | | | |
|---|---|---|---|---|
| नलभ्रातुर्नाम– | पुष्कर–कूबरौ | युवराज–कूबरौ | कूबरः | कूबरः |
| नलस्य देश – | कोशल–निषधौ | निषधः | निषधः | कोशल–निषधौ |
| नलभार्याया नाम– | दमयन्ती | दमयन्ती | दवयन्ती | दमयन्ती–दवदन्त्यौ |
| नल-दमयन्त्योरनुरागकारणम्– | हंसपक्षी | कलहंससंज्ञकः नलवयस्यः | किञ्चिदपि न वर्णितं किन्तु स्वयंवर एव | स्वयम्वरमहोत्सवः |
| नलसन्तति – | इन्द्रसेनः, इन्द्रसेना च | ( उपेक्षितम् ) | इन्द्रसेनः, इन्द्रसेना च | ……… |
| दमयन्त्या. कामुक – | कलिः | कलचूरिपतिः चेदिपतिः चित्रसेनः | ( न वर्णितम् ) | ……… |
| दमयन्त्या मातुरभिधा– | पुष्पदन्ती | पुष्फवती ( पुष्फवदी ) | पुष्पदन्ती | प्रियङ्गुमञ्जरी |

कठिनमप्येतं तिसृणां प्रतीनामाधारेण यथाशक्ति सावधानतया संशोधिते, प्रस्तावना-विषयसूचीप्रभृतिभिर्यथौचित्यमुद्दीपितेऽप्यस्मिन् ग्रन्थे मतिमान्द्यात् अनवधानतया दृष्टिदोषेण वा यत्र कुत्रचन जाताः स्थिता वा याः स्खलनास्ताः सज्जनाः सम्मार्जयिष्यन्तीत्याशासते—

व्यवस्थापकाः

श्रीयशोविजयजैनग्रन्थमालायाः

# आभारप्रदर्शनम्

वटगच्छनभोमणेः श्रीमतः माणिक्यसूरेर्विरचितस्य संपूर्णस्यास्य ग्रन्थस्य परमात्मनोऽनुग्रहेण मुद्रापणे श्रेष्ठिवर्यश्रीयुतवाडीलाल दौलतराम, गाधी वाडीलाल चतुर्भुज, भावनगरस्थ हीराचन्द देवीचन्द वर्धाजी, राजमलजी, लखमाजी तलाजी, हिन्दूजी हकमाजी, हकमाजी मोतीजी, अन्दाजी सवाजी, श्रीमती लीलावती देवी, गिरधरलाल त्रीकमलालप्रभृतिभिः श्रावकरत्नैर्निजद्रव्यसहायता दत्ता, अतस्तेषामुपकृतिः स्वीक्रियते ।

एतन्मुद्रणसमये तिसृणां पूर्वोक्तसंस्थानां व्यवस्थापकैर्यैर्यैः सज्जनशिरोवतंसैर्यानि यान्यादर्शपुस्तकानि दत्तानि तेषामप्युपकारः स्वीक्रियते—

वीरसंवत् २४६५ धर्मस. १६
ज्येष्ठवदि ७ सोमवार
**भावनगर** ( काठियावाड )

व्यवस्थापकैः
**श्रीयशोविजयजैनग्रन्थमालायाः**

ॐ अर्हम् ।

# श्रीनलायनस्य विषयानुक्रमणिका ।



॥ ॐ अर्हम् ॥

शास्त्रविशारद–जैनाचार्यश्रीविजयधर्मसूरिगुरुवरेभ्यो नमः ।

श्रीमाणिक्यदेवसूरिप्रणीतं

# नलायनम् ।

( कुवेरपुराणेत्यपरनामकम् )

---

जयति जगति देवः केवलज्ञानमूर्त्तिर्मदमदनविजेता शाश्वतो वीतरागः ।
जयति कुमुदशुभ्रा भारती भूरिभावा जयति कविकुलानां कोमलो वाक्प्रपञ्चः ॥ १ ॥
दुरितदलनमल्लः सज्जनोद्धारधीरो धनवितरणवीरो धर्मविश्रामशाखी ।
जयति जगति नित्यं निश्चलो निष्कलङ्कः सकलकलुषहारी लोकपालः कुबेरः ॥ २ ॥
सुस्निग्धैर्नवदुग्धमुग्धमधुरैः शुभ्रैर्यशोभिर्जगद् यश्चक्रे कलिकालकल्मषमषीविक्षेपिभिर्निर्मलम् ।
स श्रीमानलकापतेर्भगवतः पूर्वावतारः कृती नित्यं मङ्गलमातनोतु भवतां राजा नलो नैषधः ॥ ३ ॥

तस्यैवेदं भुवनविदितं चारु चित्रं चरित्रं भैमीभर्त्तुर्ललितमखिलं निस्तुषं नैषधस्य ।
आचन्द्रार्कं कलिमलहरं श्रूयतां सावधानैः सा सान्निध्यं सृजतु जननी सर्वदा सारदा वः ॥ ४ ॥

अत्रैव भरतक्षेत्रे भरतान्वयभूषणः । अभूत् कालेऽवसर्पिण्यां निषधेषु नलो नृपः ॥ ५ ॥
समग्रगुणसम्पूर्णः सर्वावयवसुन्दरः । निःशेषपुरुषार्थज्ञो निखिलागमपारगः ॥ ६ ॥
धनुर्धरगुणोत्तंसो राजर्षिकुलदीपकः । पृथिवीतलशृङ्गारो दुर्जनौघदवानलः ॥ ७ ॥
पयोधिर्गुणरत्नानां पर्जन्यः सूक्तिविप्रुषाम् । पवनः शत्रुवृक्षाणां पतङ्गः शस्त्ररोचिषाम् ॥ ८ ॥
मनोभूरिव सौभाग्ये मघवानिव शासने । मृगेन्द्र इव सोमत्वे मार्त्तण्ड इव तेजसि ॥ ९ ॥
सुमेरुरिव शैलानां चिन्तामणिरिवाश्मनाम् । कल्पद्रुरिव वृक्षाणां प्रधानः पृथिवीभुजाम् ॥ १० ॥
इयत्यपि गते काले ग्रामाकरपुरादिषु । अद्यापि कीर्त्तनैर्यस्य भूषितं भाति भूतलम् ॥ ११ ॥
सूर्यपाका रसवती नलाख्यं च दुरोदरम् । स चाश्वहृदयो मन्त्रो यस्याद्यापि हि विश्रुतः ॥ १२ ॥
अद्यापि यत्कृतं द्यूतं दीव्यन्ति दिवि देवताः । व्योमचर्मण्यसङ्कीर्णे कीर्णतारावराटके ॥ १३ ॥
अद्यापि यस्य शिक्षन्ते तुरङ्गमगतिभ्रमान् । नद्यश्रोत्तालवातूलैर्वात्यावर्त्तैश्च वायवः ॥ १४ ॥
यद्दिग्विजययात्रासु सैन्यसम्भारभारितः । अद्यापि वर्त्तते गात्रैः कूर्मः सङ्कोचवामनैः ॥ १५ ॥
वहत्यद्यापि यज्जैत्रयात्राभरविनम्रितः । नागराजो वपुर्दण्डं कुण्डलाकारविभ्रमम् ॥ १६ ॥

अद्यापि यत्प्रयाणेषु तुरङ्गखुरखण्डितम् । सुधांशौ दृश्यते लीनं लाञ्छनच्छद्मना रजः ॥ १७ ॥
नूनं नलसमो राजा न भूतो न भविष्यति । कोऽपि तत्तद्गुणो नान्यः श्रूयते कथमन्यथा ? ॥ १८ ॥
श्रीशान्तिरिव दुःस्वप्नं महाविषमिवेन्द्रजित् । हरत्यहरहः पापं नलः स्मरणमात्रतः ॥ १९ ॥
यत्पुण्यं जाह्नवीस्नानाद् यत्पुण्यं गुरुपूजनात् । यत्पुण्यं प्राणिनां त्राणात्तत्पुण्यं नलकीर्त्तनात् ॥ २० ॥
निदाघे चन्दनं हृद्यं हृद्या वर्षासु मालती । पिकध्वनिर्मधौ हृद्यः सदा हृद्यं नलायनम् ॥ २१ ॥
यथा श्रेयस्करं दानं यथा पापहरं तपः । यथा शौचकरं शीलं तथैव नलकीर्त्तनम् ॥ २२ ॥
ग्रहाः शकुनाः सर्वे सुप्रशान्ताः फलप्रदाः । कार्यकाले नलस्यैकं नामग्रहणमन्यतः ॥ २३ ॥
भरतश्चार्जुनश्चैव वैण्यश्च पृथिवीपतिः । नलश्च नैषधो राजा यात्रायां सिद्धये स्मृताः ॥ २४ ॥
अभीमं भीमसंयुक्तममरालं मरालवत् । न कस्य विस्मयं दत्ते वाच्यमानं नलायनम् ॥ २५ ॥
निर्मलं धीरललितं विशालं विश्वविश्रुतम् । पुण्यश्लोकस्य राजर्षेः कीर्त्तनं कलिनाशनम् ॥ २६ ॥
मध्ये धर्मस्य शान्तेश्च चतुर्थे च तथारके । वीरसेनसुतो राजा नलो राज्यमपालयत् ॥ २७ ॥
वहन् निहितनिश्वासं वयः षोडशवार्षिकम् । वपुषा वृषभस्कन्धः स प्रजानां प्रियोऽभवत् ॥ २८ ॥
रूपनिर्जितनामन्ये मलयवादिनि राजनि । तस्मिन् मनोरथातीतं प्रजाः सौख्यं प्रपेदिरे ॥ २९ ॥
साम्येन च समृद्ध्या च सौराज्येन शिवेन च । आर्यावर्त्तः परां कोटिं देशो देशेषु लब्धवान् ॥ ३० ॥

वापीकूपप्रपाराममठप्रासादसाधकैः। जनानां जग्मुरारम्भैर्धर्मार्थैरेव वासराः ॥ ३१ ॥
नानामाङ्गल्यनिर्वृत्तनान्दीनिर्घोषनिर्भराः। निरन्तरोत्सवा ग्रामा रेजुर्विपुलसम्पदः ॥ ३२ ॥
अतीत्य विषभृल्लोकमतिक्रम्य सुरालयम्। धर्मार्थकामसंपन्ना रेजे राजन्वती मही ॥ ३३ ॥
काले कृषीबलापेक्षं ववृषुर्वारि वारिदाः। स्वचक्रपरचक्रोत्थं भयं स्वप्नेऽपि नाभवत् ॥ ३४ ॥
असूत वसुधा क्षेत्रैः सस्यं रत्नानि खानिभिः। आकरैः सारभाण्डानि काननैः करिपोतकान् ॥ ३५ ॥
आसन् सप्रत्यया देवाः सप्रभावास्तपस्विनः। सविद्याः पाठकाः प्रायः सधना गृहमेधिनः ॥ ३६ ॥
धेनवः क्षीरवर्षिण्यः शाखिनश्च सदाफलाः। अक्षीणसलिला नद्यो जीवत्पुत्राश्च योषितः ॥ ३७ ॥
आरामाद् व्याकुलो नान्यो नाश्वत्थः पिप्पलात्परः। न कश्चिदितरश्चासीत् सरोगः सरसीरुहात् ॥ ३८ ॥
आसीद्बन्धस्तडागानां वाद्यानां तलताडनम्। छेदस्तु कनकस्यैव दण्डश्छत्रस्य केवलम् ॥ ३९ ॥
कौटिल्यं केशपाशेषु काठिन्यं कुचमण्डले। चञ्चलत्वं च नेत्रेषु स्त्रीणामेव व्यवस्थितम् ॥ ४० ॥
कलुषः कुटिलः कुण्ठः कितवः क्रोधनः कुधीः। कृतघ्नः कृपणः क्रूरः कठोरः कोऽपि नाभवत् ॥ ४१ ॥
वासरेभ्यो नमस्तेभ्यः सार्वभौमः स येष्वभूत्। धन्यास्तेऽपि निपीतं यैर्जनैस्तद्वचनामृतम् ॥ ४२ ॥
स कथं वर्ण्यते राजा यद्गुणग्रहणोद्यमे। प्रीतिगद्गदकण्ठानां स्खलन्ति विदुषां गिरः ॥ ४३ ॥
तस्यैव हि विराजन्ते नलस्य गुणवर्णनाः। स्वर्गभोगोपभोगानां भोक्ता भूमिस्थितोऽपि यः ॥ ४४ ॥

येनात्मरूपसम्पत्त्या सुपर्वाणोऽपि निर्जिताः । पार्थिवेषु बभूवैकः स पृथ्व्यां केवलं नलः ॥ ४५ ॥
अथवा यः सहस्राक्षः शतमन्युः शतक्रतुः । वज्रपाणिः सुनासीरो मघवा मेघवाहनः ॥ ४६ ॥
यः कल्पवृक्षलक्षाणि कामधेनुशतानि च । चिन्तामणिसहस्राणि प्रमादेन प्रयच्छति ॥ ४७ ॥
सोऽपि यस्य त्रिवर्गप्रेमपरमास्त्रं जिघत्सतः । अचिन्तितातिथीभावप्रतिपत्तिं प्रपन्नवान् ॥ ४८ ॥ (त्रिभिर्विशेषकम्)
सर्वस्वं ददताऽपि येन समरे दत्तं न पृष्ठं द्विषां कौलीनाद् बिभयांबभूव भुवने धीरेषु धुर्योऽपि यः ।
यः प्राज्ञोऽपि परापवादविषये मूर्खेषु मुख्योऽभवत् येनोच्चैःशिरसापि कीर्त्तिसमये चक्रे विनम्रं शिरः ॥ ४९ ॥
गङ्गौघैरिव चन्द्रभानुभिरिव क्षीराब्धिपूरैरिव प्रालेयैरिव कैरवैरिव बृहन्मुक्ताकलापैरिव ।
प्रत्यद्भिरिव भवेन यस्य परितः स्फीतैर्यशोभिर्जगत् पूतं द्योतितमाततं शिशिरितं संवासितं भूषितम् ॥ ५० ॥
यस्मादमोघमहसः कनकोत्करेषु प्राप्तेषु मार्गणगणैर्गणनातिगेषु ।
उन्मूतभूरिरकालमहाभरेण व्रीडानताननं इवाजनि कल्पवृक्षः ॥ ५१ ॥
अधर्मा प्रस्वेदस्तुहिनरहितः कम्पमहिमा विना दीक्षां मौनं निरुपधिविधिः स्तम्भविभवः ।
अखेदो गात्राणामनिशमवसादश्च सुतरामरीणां क्षीणां च प्रभवति यमालोक्य बलिनम् ॥ ५२ ॥
अगिनिकरकरकङ्कप्रौढपर्यङ्कपीठे मदकलकरिकर्णप्रेरितेनेव येन ।
निरवधिनिरवद्यं निर्भयं निर्विकल्पं रणभुवि विजयश्रीर्वीरवीरेण भुक्ता ॥ ५३ ॥

आदितः कथनमेव मज्ञातं हेतिशब्दमथ के कृतवन्तः ।
श्रद्धानहृदि वीरवरः सन् यत्र वै वितरणे च रणे च ॥ ५४ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने प्रथमउत्पत्तिस्कन्धे प्रथमः सर्गः ॥ १ ॥



## प्रथमे उत्पत्तिस्कन्धे द्वितीयः सर्गः ।

स दिग्विजयमुद्दामं चक्रे शैशवशेषवान् । विदधे चाक्षयं कोशं कुशलः कोशलेश्वरः ॥ १ ॥
ददौ दयितमुद्दामं दानं सततमर्थिनाम् । चकार प्रतिपूर्वाणां दानं सततमर्थिनाम् ॥ २ ॥
दूरं दर्शितवान् वीरः प्रतिपत्तिं सदा सताम् । प्रतिपाद्य विपक्षाणां प्रतिपत्तिं सदासताम् ॥ ३ ॥
विहाय देशमादेशं बलं मुक्त्वा च कम्बलम् । चरणं च रणं मुक्त्वा भेजिरे यस्य वैरिणः ॥ ४ ॥
स्वतन्त्रः कृतवान् क्रीडां न्यस्ततन्त्रः स मन्त्रिषु । सौभाग्यसुन्दरः श्रीमान् राजा भोगपुरन्दरः ॥ ५ ॥
पुरोपवनवल्लीषु वारनारीवृतः स्वयम् । कदाचिदाचरत्युच्चैः पुष्पावचयविभ्रमम् ॥ ६ ॥
इत्थं वीरविलासेन साम्राज्यं तस्य भुञ्जतः । सेवावसरवेदीव प्रावृट्कालः समाययौ ॥ ७ ॥
आसीद् गर्जति पर्जन्ये षड्जस्वरविराविणाम् । तूर्यत्रयमयी रम्या क्रीडा कापि कलापिनाम् ॥ ८ ॥

बकुलं चक्रवच्चक्रे चम्पकं तोमरोपमम् । केतकं कर्णिशरवत् पुष्पास्त्रः प्रोषितास्त्रियाम् ॥ ९ ॥
एतस्मिन् समये राजा दिने क्वचिददुर्दिने । प्रकाशकुट्टिमस्कन्धमध्यासामास नैषधः ॥ १० ॥
विद्वद्भिर्वारनारीभिर्वयस्यैर्वरवेत्रिभिः । वृत्तो वैणविकैर्विष्वक् वैतालिकविदूषकैः ॥ ११ ॥
श्रुतशीलसमानेन महामित्रेण मन्त्रिणा । महितः श्रुतशीलेन सालङ्कायनसूनुना ॥ १२ ॥
विश्वं विलोकयन् वर्षाविभूतिभरभूषितम् । ददर्श दूरतो वृद्धान् बहूनापततो मुनीन् ॥ १३ ॥
ते कडारतरोत्तुङ्गजटामुकुटमौलयः । वहन्त इव सत्राग्निं रेजिरे भस्मभूषणाः ॥ १४ ॥
द्वारप्राप्ताः कृतार्घास्ते प्रत्युद्गम्य पुरोधसा । वर्णाश्रमगुरुं द्रष्टुं प्रविशन्ति स्म विस्मिताः ॥ १५ ॥
कर्णधारैरिव द्वाःस्थैर्वेश्मकक्षान्तराणि ते । वार्द्धिद्वीपान्तराणीव दिग्मूढास्तत्र निन्यिरे ॥ १६ ॥
महत्सशिखरं शुभ्रं कैलासमिव ते परम् । प्रासादमधिरोहन्तः परिश्रान्तास्तपस्विनः ॥ १७ ॥
सशङ्कपदपातास्ते दूरं दुस्तरदर्शिनः । जग्मुर्नगनदभ्रान्त्या प्राप्य नीलाश्मकुट्टिमम् ॥ १८ ॥
कृपाणत्राणतूणीरप्रमुखान्यायुधानि च । छत्रप्रकीर्णकादीनि नरेन्द्रककुदानि च ॥ १९ ॥
सिप्राचमकभृङ्गारपारीप्रायाणि कोटिशः । पात्राणि च पवित्राणि रत्नरौप्यमयानि च ॥ २० ॥
चकोरकीरचक्राङ्गपिकपारापतादिकान् । भूपितान् भ्रमतः स्वैरं मत्तान् क्रीडापतत्त्रिणः ॥ २१ ॥
ददृशुस्तत्र दिव्यादि वस्त्वेकैकं महीपतेः । आजन्मतोऽपि नामापि यस्य स्वप्नेऽपि न श्रुतम् ॥ २२ ॥(चतुर्भिः कलापकम्)

कर्पूरगन्धरुद्धेन नीरन्ध्रागरुधूपिना । जग्मुस्ते मध्यमार्गेण श्रीखण्डक्षोदधूलिना ॥ २३ ॥
प्रत्यासन्नमिव स्वर्गं दूरस्थमिव भूतलम् । करस्थाविव चन्द्रार्कौ ते तत्रारुह्य मेनिरे ॥ २४ ॥
विकीर्य फलपुष्पाणि निषिण्णानासनेषु तान् । दत्ताशिषः स्वयं प्रोचे वर्णाश्रमगुरुर्मुनीन् ॥ २५ ॥
कच्चिद् वः कुशलं विष्वक् सशिष्याणां तपोधनाः ! । वनेषु वसतां नित्यं कुर्वतां दुस्तपं तपः ॥ २६ ॥
पुण्याश्रमद्रुमाणां च कदाचिन्नोपपद्यते । वज्रानलानिलव्यालजलादिभ्यः पराभवः ॥ २७ ॥
स्नेहेन मुनिकन्याभिः पुत्रवत्परिवर्द्धिताः । व्याललुब्धकहिंस्रेभ्यो निर्भया भवतामगाः ॥ २८ ॥
आर्याः ! प्रीतोऽस्मि युष्माकं स्वयमेवोपसर्पणात् । प्रादुर्भावात् पयोदानां छायया पथिको यथा ॥ २९ ॥
पुराणपातकध्वंसी भविष्यत्फलसूचकः । सम्भावयति नाभव्यं सर्वतीर्थमयोऽतिथिः ॥ ३० ॥
एतदेव मनुष्यत्वं संविभागो यदर्थिनाम् । स्वोदरम्भरितावर्जं किमन्यत्पशुलक्षणम् ? ॥ ३१ ॥
विभवस्य फलं धर्मो धर्मस्य विभवः फलम् । कार्यकारणयोगोऽयमन्योऽन्यं वृक्षबीजवत् ॥ ३२ ॥
बीजं क्षेत्रे धनं पात्रे वपतां वृद्धिकाङ्क्षया । केवलं कृषिधर्मोऽयं परोपकरणं कुतः ? ॥ ३३ ॥
त्रयाणां नोपसर्पन्ति गृहाण्यतिथिदेवताः । कीनाशानामभव्यानां यद्वा हत्यापवादिनाम् ॥ ३४ ॥
यौवनं विधवास्त्रीणां फलं वनमहीरुहाम् । धनं कृपणलोकानां ब्रूते वन्ध्यं विधेः श्रमम् ॥ ३५ ॥
यस्य नार्त्तपरित्राणं यस्य नातिथिपूजनम् । यस्य नात्मीयसामर्थ्यं सत्यं स पुरुषाधमः ॥ ३६ ॥

तापसानां कुशलार्थं नलस्य प्रश्नाः
मुनीनाञ्चागमात् नलस्य परितोषः ।

अद्य मे पितरः प्रीता अद्य मे श्रीः स्वयम्वरा । अद्याहं कृतकृत्योऽस्मि यौष्माकीयसमागमात् ॥ ३७ ॥
तद् ब्रूत मम के यूयं कुतो वा काननान्तरात् ? । किमर्थमयमायासः ममादेशकरे मयि ॥ ३८ ॥
इयं क्षितिरियं लक्ष्मीरिदं राज्यमिदं गृहम् । युष्मत्प्राप्तिप्रसादस्य क्रियतां केन निष्क्रयः ? ॥ ३९ ॥
ललितोदारधीरं तद् वाक्यं श्रुत्वा विशाम्पतेः । ततो वाचंयमाः प्रीताः प्रत्यवोचन् विचक्षणाः ॥ ४० ॥
निषधेन्द्र ! निषिद्धारे ! भूचन्द्र ! तव दर्शनात् । अवृत्तमपि संवृत्तं जानीहि कुशलं हि नः ॥ ४१ ॥
सदाफलस्य तुङ्गस्य सुमनोवृन्दमालिनः । तव कल्पद्रुमस्येव दुर्लभं देव ! दर्शनम् ॥ ४२ ॥
कलावान् विमलः सौम्यः सुवृत्तो दक्षदुःखहन् । देव ! त्वमिन्दुरुत्पन्नो वीरसेनकुलोदधेः ॥ ४३ ॥
कृशाग्रनिशिता वाणा बुद्धिश्च तव नैषध ! । दानशक्त्या च कीर्त्त्या च त्वयाऽऽशाः परिपूरिताः ॥ ४४ ॥
दण्डभृद् धनदो भास्वान् प्रचेताश्च त्वमेव हि । चतुर्णां लोकपालानामेकं रूपं भवान् भुवि ॥ ४५ ॥
पद्मभृत् पद्मनाभा च पद्मिनी पद्मलोचना । महापद्मप्रदा देवी पद्मानि च सति त्वयि ॥ ४६ ॥
पदपद्मयुगं शुभ्रं समुदा येन सेव्यते । स निर्धनोऽपि लक्ष्मीनां समुदायेन सेव्यते ॥ ४७ ॥
सत्त्वारिकृतनाशः सत्रात त्वं कलारसः । सरलाशयताभासः सभातारोरुसाहसः ॥ ४८ ॥ (पद्मबन्धः)
इयं शक्तिरियं भक्तिरियं प्रज्ञा च तावकी । क्षितौ कस्य नृपस्याद्य दृश्यते श्रूयतेऽथवा ? ॥ ४९ ॥
गृहिणां यतयस्तीर्थं यतीनां गृहमेधिनः । पुण्यश्लोकं समालोक्य त्वामद्य मुदिता वयम् ॥ ५० ॥

श्रृणु राजन् ! पुरा पृथ्व्यां पार्थिवौ प्रथितान्वयौ। वीरौ कच्छमहाकच्छौ मुक्तसङ्गौ मनस्विनौ ॥ ५१ ॥
भजतः स्म महाभक्त्या भगवन्तं स्मरान्तकम्। शिवं शङ्करमव्यक्तं जटामुकुटमण्डितम् ॥ ५२ ॥
दिगम्बरं दुराराध्यं महादेवं महेश्वरम्। आदिनाथं जगन्नाथं वृपस्कन्धं वृपध्वजम् ॥ ५३ ॥
तयोराराधनप्रीतः पुण्डरीको गणेश्वरः। दिदेश चतुरो वेदान् श्रेष्ठं च शिवशासनम् ॥ ५४ ॥
तौ महर्षिपु मुख्यत्वं प्रपन्नावार्यतापसौ। ययोः कुलपतिः स्वामी भगवान् वृपभध्वजः ॥ ५५ ॥
तदन्वये वयं जाताः पृथिव्यामार्यतापसाः। शीर्णपर्णफलाहारा निपधस्कन्धवासिनः ॥ ५६ ॥
अस्ति नो जाह्नवीतीरे तीर्थं नाम्ना तमोऽपहम्। सर्वपापहरं पुण्यं भरतेश्वरकारितम् ॥ ५७ ॥
तत्रास्ति नलिनीगुल्मे मेघनादवितानिनि। प्रासादे स्थापितः श्रीमान् वृपाङ्को मूलनायकः ॥ ५८ ॥
स्निग्धश्यामजटाजूटं यं प्रणम्य जगद्गुरुम्। न नृणां जातु जायन्ते नाना नरकयातनाः ॥ ५९ ॥
कीर्यन्ते जानुदघ्नानि कुसुमानि मनीपिभिः। कल्याणीभक्तिभिर्देवैर्यत्कल्याणिकपर्वसु ॥ ६० ॥
तत्रास्माकं निरातङ्कं चिरं निवसतां सताम्। दुर्दैवप्रेरितः प्राप्तः क्रौञ्चकर्णो निशाचरः ॥ ६१ ॥
विद्याधरैः स वैताढ्यान्निरस्तो वान्धवैरपि। कुविद्यासाधकः पापी नृचक्षा राक्षसाधमः ॥ ६२ ॥
महामायामयः क्रूरो दुरात्मा वञ्चनाचणः। स द्रोहेण विनास्माकं दिनमेकं न तिष्ठति ॥ ६३ ॥
अनालोकमनामोदमनध्यायमवैभवम्। संप्रत्यस्नानमध्यानमस्माकमभवद् वनम् ॥ ६४ ॥

कच्छ-महा-कच्छयोः ऋषभ-देवस्य आराधना।

ते ते मन्त्राश्च यन्त्राश्च यक्षराक्षसवारणाः । प्रतिबोधा इवाभव्ये न तत्र प्रभवन्ति नः ॥ ६५ ॥
तस्मादस्मान् समायातान् शरणं तव पार्थिव ! । त्वं रक्ष रक्षसस्तस्मात् संसारादिव संयमः ॥ ६६ ॥
नागायुतबलः क्रुद्धो मदान्धो मुद्गरायुधः । स वैरी हन्यतां वीर ! वीरसेनसुत ! त्वया ॥ ६७ ॥
दुष्टानां निग्रहो नित्यं शिष्टानामप्यनुग्रहः । अयं परम्परायातः कुलधर्मो महीभृताम् ॥ ६८ ॥
विद्वद्भिः सह सङ्गमाय सपदि स्वस्यात्मनः प्रीतये । चातुर्योपगमाय पुण्यपुरुषक्रीडोपलम्भाय च ।
अर्थानां न समर्थनाय कृतिभिस्त्वं सर्वथा दृश्यसे । नैके केचन वीरसेनतनय ! त्वद्दर्शने हेतवः ॥ ६९ ॥
द्वीपिन्योरिव जाह्नवीयमुनयोः स्थानं प्रयागः क्षितौ । लक्ष्मीशारदयोस्त्वमेकभुवनं क्ष्मामण्डलाखण्डल ! ।
तेनैवात्र मनीषितव्यतिकरं निर्दिश्य देशान्तरात् । यातायातमजस्रमाश्रममभी वर्णाश्रमाः कुर्वते ॥ ७० ॥
प्रतिदिवसमसङ्ख्यैर्धर्मकर्मोपलम्भैरुपचिनु शशिभांसि स्वैरमुच्चैर्यशांसि ।
प्रसरतु भवदीयैः कीर्त्तिकल्लोलजालैर्दशदिशि जलकेलिक्रीडितं सत्कवीनाम् ॥ ७१ ॥
श्रुत्वा तदेतदतुलं वचनं मुनीना-मङ्गीकृतव्यतिकरः परवीरहन्ता ।
श्रीमन्तमुच्चमुचितं चतुरं तुरङ्गं तुङ्गं तरङ्गतरलं त्वरयाऽऽरुरोह ॥ ७२ ॥
अथ विदितविचारः शस्त्रवानश्ववारः कृतकलुषनिकारः शत्रुसंहारसारः ।
निषधपतिरुदारः स्फारशृङ्गारभारः कतिपयपरिवारः कौतुकी सञ्चचार ॥ ७३ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने प्रथमे उत्पत्तिस्कन्धे द्वितीयः सर्गः ॥ २ ॥

## प्रथमे उत्पत्तिस्कन्धे तृतीयः सर्गः ।

स प्राप दृष्टिविष्टब्धकुट्टिमस्पर्धिवालुकाः । स्वैरनिर्झरझात्कारा: पुरीपरिसरस्थलीः ॥ १ ॥
ददृशुर्मण्डलाकारमम्भोदमिव दूरतः । शुकपिच्छच्छविच्छत्रं तस्योपरि पुरीजनाः ॥ २ ॥
स जगाम फलश्यामस्निग्धजम्बूकदम्बकम् । अकाण्डनिविडध्वान्तमचलोपान्तकाननम् ॥ ३ ॥
अथाग्रे चोग्रदुर्गन्धं समुद्धूषितमूर्द्धजम् । दंष्ट्राक्रकचदष्टौष्ठं ज्वलज्ज्वलनलोचनम् ॥ ४ ॥
सोऽपि तान् वीक्ष्य सावज्ञमट्टहासैर्भयङ्करैः । त्रस्तसत्वा दिशः कुर्वन्नूचे वचनमुच्चकैः ॥ ५ ॥
रे रे मनुष्यपशवः ! स्थीयतां स्थीयतामिह । कालाघ्राताः समायाता यूयं मद्भुजगोचरम् ॥ ६ ॥
एष वः सरसाहारः तर्षणोत्फुल्लपेशलैः । सुस्निग्धमधुरैर्मांसैर्धिनोमि जठरानलम् ॥ ७ ॥
इत्युत्थाय गिरेः शृङ्गं क्षेप्तुकामं निशाचरम् । एकाकी तं प्रतीयेष पुण्यश्लोकः परन्तपः ॥ ८ ॥
अरे रे विकृताकार ! दुराचार ! निशाचर ! । ब्रह्मस्त्रीभ्रूणगोघातः कुलधर्मस्तव ध्रुवम् ॥ ९ ॥

तथापि तव दुर्गन्धो दुःसहः सुतरामयम् । तेन त्वं कामिनां प्रीत्यै वध्यसे पातकीति च ॥ १० ॥
मुञ्च मुञ्च यथाशक्ति प्रहारं प्रथमं मयि । पश्चाज्ज्ञानासि भक्ष्यानामखाणां च विवेचनम् ॥ ११ ॥
इत्येवं धीरललितं प्रहसन्तं नलं प्रति । चिक्षेप शिखरं क्रुद्धः क्रौञ्चकर्णो निशाचरः ॥ १२ ॥
प्रलयाम्भोधरध्वानं धनुरास्फालयन् नलः । तं ततक्ष शरैस्तीक्ष्णैर्वाक्यैश्च रजनीचरम् ॥ १३ ॥
ततो वर्षन् शराजालैः शालतालैश्च राक्षसः । तीरतोमरनाराचैरर्द्धचन्द्रैश्च भूपतिः ॥ १४ ॥
अभूत् समरसंरम्भस्तयोर्भुवनभैरवः । बभूव निविडं ध्वान्तं द्वयोरप्यस्त्रवृष्टिभिः ॥ १५ ॥
अपश्यन् भुवि सामन्ता दिवि देवाश्च दूरतः । चचाल साऽचला पृथ्वी निश्चलः पवनोऽप्यभूत् ॥ १६ ॥
शरैरन्तर्हितं विश्वं शृङ्गैरन्तरिता दिशः । कदापि विजयी राजा कदापि रजनीचरः ॥ १७ ॥
धनुर्ध्वानैर्वियद् व्याप्तं फेत्कारैः कम्पिता दिशः । भूयोऽपि मुदितं वीरैर्भूयो भीतं तपस्विभिः ॥ १८ ॥
अस्मिन् व्यतिकरे घोरे राक्षसश्छलयोधनः । विप्राद्यं क्षत्रियाणां स्यादवध्यमिति चिन्तयन् ॥ १९ ॥
मुमोच तीक्ष्णशृङ्गाग्रं निशातक्षुरसम्पुटम् । गोसहस्रमयं शस्त्रं दिव्यमायामयं नले ॥ २० ॥ ( युग्मम् )
नैषधस्य विनिर्धूतं वायव्यास्त्रबलेन तत् । भम्भारवमुखं भेजे भिन्नपङ्क्ति दिशोदिशम् ॥ २१ ॥
विलोलनयनाः श्यामा विशालजघनस्तनीः । ततो नक्तञ्चरस्तत्र स्त्रियः शस्त्रीचकार सः ॥ २२ ॥
ताः परिम्लाननयनाश्छिन्नाङ्गयः श्लथकुन्तलाः । राज्ञः सम्मोहनास्त्रेण निपेतुर्भुवि मूर्च्छिताः ॥ २३ ॥

ततोऽपि व्यात्तवदनः स्फारफेत्कारदारुणः। व्याचकार मुखोल्काभिराग्नेयास्त्रं निशाचरः ॥ २४ ॥
दारिद्र्यमिव दानेन दण्डेनेवाशु दुर्नयम्। निनाय जलदास्त्रेण तदपि प्रशमं नलः ॥ २५ ॥
ज्ञात्वा दिव्यास्त्रमायानां तमयोग्यं निशाचरः। घूर्णयन् मुद्गरं घोरं प्रहर्तुं प्रत्यधावत ॥ २६ ॥
आजानेयं महौजस्कं मण्डलैः परिवर्त्तयन्। अलातचक्रवद् धुन्वन् कोदण्डं कुण्डलीकृतम् ॥ २७ ॥
अर्द्धचन्द्रैश्च भल्लैश्च क्षुरप्रैः कर्त्तरीमुखैः। नैषधस्ताडयामास शरैर्मर्मसु राक्षसम् ॥ २८ ॥ (युग्मम्)
क्षणं ह्रस्वः क्षणं दीर्घः क्षणं व्योम्नि क्षणं क्षितौ। क्षणं पुरः क्षणं पृष्ठे वामदक्षिणयोः क्षणं ॥ २९ ॥
चिरं विचित्रचारीभिर्वञ्चयन् दृष्टिगोचरम्। वपुर्विधाय वाराहं दुरात्मा द्रुतमद्रवत् ॥ ३० ॥
तमन्वधावदासिद्धं योजनानि त्रयोदश। सूकरं सादिनां मुख्यः सुपर्ण इव पन्नगम् ॥ ३१ ॥
गर्त्तागिरिसरिद्वृक्षान् नहि किञ्चिदजीगणत्। सर्वमुल्लङ्घ्य रंहस्वी ययौ पक्षीव वाडवः ॥ ३२ ॥
न तुरङ्गो न पर्याणं न सादी न च सायकाः। रेखेव केवलं दृष्टा क्रोडं तस्यानुधावतः ॥ ३३ ॥
उभयोरभवद् युद्धं पुनः कम्पितपर्वतम्। स्थित्वा दिनकरेणापि वीक्ष्यमाणं क्षणे क्षणे ॥ ३४ ॥

अथ भूमिभुजा भुजाग्रभाजा गजकुन्तेन भुवा समं स विद्धः।
सहसा विससर्ज जीवितव्यं वितताक्रन्दभयङ्करो वराहः ॥ ३५ ॥

कथञ्चन निशाचरं स विनिहत्य युद्धाङ्गणे समग्रमकुतोभयं मुनिजनं विधाय द्रुतम्।

परिश्रमसमाकुलः ममजनिष्ट देहे क्षणं बभूव सुतरां पुनर्मनसि सुस्थितः पार्थिवः ॥ ३६ ॥
तत्रावतीर्य तुरगादुरगारिवेगाल्लक्ष्मीसखं परिजनं परिपालयन्तम् ।
तं मेजिरे भुजगराजभुजं तदानीं भूमीभुजं नवभुजिष्यसमाः समीराः ॥ ३७ ॥
उत्फुल्लपल्लवितनिम्बकदम्बजम्बूजम्बीरकीरकदुकार्जुनकेतकीकाः ।
तस्याददुः श्रमशमं वपुषः समन्तादुत्तालबालकदलीपवना वनान्ताः ॥ ३८ ॥
तस्मै ददुर्मुदमुदारमयूमयूरहारीतचातकचकोरकपिञ्जलानि ।
आसन्नकिन्नरनिरन्तरगीतगानध्यानैकतानहरिणानि वनस्थलानि ॥ ३९ ॥
इति श्रीमाणिक्यदेवसूरिकृते नलायने प्रथमे उत्पत्तिस्कन्धे तृतीयः सर्गः ॥ ३ ॥

## प्रथमे उत्पत्तिस्कन्धे चतुर्थः सर्गः ।

तत्र भिक्षाचरः कोऽपि कौपीनावरणः कृशः । विद्वान् वैदेशिकः प्राप वल्लरीनद्धमूर्द्धजः ॥ १ ॥
बिभ्राणः पाणिना यष्टिं वहन् कण्ठेन मृन्मणीन् । दधानः कम्बलं स्कन्धे पात्रं च क्रमुकत्वचम् ॥ २ ॥
स विलोक्य विशांपत्युर्विशेषसुभगं वपुः । चेतसा चिन्तयाञ्चक्रे विचारचतुराशिरम् ॥ ३ ॥

उदधेरिव गाम्भीर्यं चन्द्रस्येवातिसौम्यता । गुरोरिवाभिगम्यत्वं गुरुत्वं च गिरेरिव ॥ ४ ॥
तानि तानि यथास्थानं सम्पूर्णानि स्फुटानि च । चक्रचापाङ्कुशादीनि लक्षणानि सहस्रशः ॥ ५ ॥
यथेदं लक्षणाधिक्यं यथा चायं गुणोदयः । नूनं तथास्ति कोऽप्येष भर्त्ता स जलधेर्भुवः ॥ ६ ॥ (त्रिभिर्विशेषकम्)
महीनाथा महातीर्थं महौषध्यो मुनीश्वराः । अल्पभाग्यवतां पुंसां प्रायो दुर्लभदर्शनाः ॥ ७ ॥
भवन्ति हि शुभोदर्काः सङ्गमाः सममीदृशैः । इत्युपेत्य विनीतात्मा तस्याशीर्वादमाददे ॥ ८ ॥
क्षमाधार ! क्षमाधार ! महाकर ! महाकर ! । सदानन्द ! सदानन्द ! सभाजनसभाजन ! ॥ ९ ॥
प्रोतायाः कालसूत्रेण सृष्टिश्रेणेर्विभिद्य यः । एको मणिरिवाभाति पातु स त्वां त्रिकालवित् ॥ १० ॥ (युग्मम्)
तमेवंवादिनं प्रेम्णा समालोक्य ससंभ्रमम् । अवोचत् क्रौञ्चकर्णारिः कुशलप्रश्नपूर्वकम् ॥ ११ ॥
तीर्थयात्रिक ! भद्रं ते प्रष्टव्योऽसि कुतोऽधुना ? । कानि कानि च धर्मार्थं तीर्थानि गतवानसि ? ॥ १२ ॥
इहोपविश्यतां पार्श्वे वृत्तान्तः कोऽपि कथ्यताम् । पृथ्व्यामपूर्वदृश्वानो भवन्ति हि भवादृशाः ॥ १३ ॥
अपूर्वं दर्शनं स्वल्पा प्रीतिः परिचयो नवः । इत्यस्मद्विषयं किञ्चित् क्षोभं मनसि मा कृथाः ॥ १४ ॥
एकस्मिन् भूतले वासो जातिरेकैव मानुषी । इति पश्य जगत्यस्मिन् समग्रः स्वजनो जनः ॥ १५ ॥
इत्युक्तवन्तमन्तस्तं प्रशंसन् पार्थिवं मुदा । जगाद सादरं सोऽपि विज्ञातपुरुषान्तरः ॥ १६ ॥
शृणु सर्वकलादक्ष ! दक्षिणस्यामहं दिशि । पूर्वं रिपुजनाशक्यं नाशक्यं गतवान् पुरम् ॥ १७ ॥

तत्र चन्द्रप्रभं नाम्ना धाम्ना च जगदीश्वरम् । दृष्टवानष्टकर्मघ्नमष्टमं परमेश्वरम् ॥ १८ ॥
ततोऽहं दण्डकारण्यं प्रविष्टः कष्टनिर्गमम् । दुष्टश्वापदसङ्कीर्णं गर्त्तागिरिगुहाकुलम् ॥ १९ ॥
पूर्वं हि दण्डकारण्यं दण्डकस्य महीपतेः । कुम्भकारकटं नाम्ना नगरं तद् बभूव च ॥ २० ॥
दण्डकप्रतिबोधाय स्कन्दकः समुपाययौ । आचार्यः पूर्वसंबन्धी कानने नवतत्त्ववित् ॥ २१ ॥
तं धर्मनिरतं पश्यन् तद्भक्तिप्रवणं नृपम् । न सेहे नृपतेस्तस्य पुरोधाः पालकाभिधः ॥ २२ ॥
कदाचित् कायचिन्तार्थं सशिष्ये प्रस्थिते मुनौ । तदाश्रमे स मायावी भुवि शस्त्राण्यधापयत् ॥ २३ ॥
जगाद च नृपं गत्वा राजन् ! भयमुपस्थितम् । स्कन्दको मुनिवेषोऽयमाततायी तवागतः ॥ २४ ॥
शालकस्ते च राज्यार्थी भवन्तं हन्तुमिच्छति । समं महारथैः शिष्यैर्गुप्तशस्त्रोऽस्ति दृश्यताम् ॥ २५ ॥
तथा कृते नरेन्द्रेण दण्डकेनाविवेकिना । पालकः स्कन्दकस्यैव वधार्थं प्रहितः पुनः ॥ २६ ॥
सोऽपि यन्त्रेषु निक्षिप्य मुनीननपराधिनः । तिलवत् पीडयामास पालकः पापकर्मकृत् ॥ २७ ॥
तेऽपि सर्वे दिवं जग्मुः क्षमाभाजस्तपोधनाः । शिष्यस्याथ शिशोरर्थे पालकं स्कन्दकोऽवदत् ॥ २८ ॥
पूर्वं निक्षिप मां यन्त्रे यथा ते पूर्यते रतिः । एनं नैवोत्सहे द्रष्टुं पीड्यमानं दृशोः पुरः ॥ २९ ॥
मर्मच्छेदं विदन् तेन स तं प्रत्युत तर्जयन् । बालकं पीडयामास पालकस्तस्य पश्यतः ॥ ३० ॥
ततस्तरस्विनः सूरेः स्कन्दकस्य मनस्विनः । तस्य कोपः स कोऽप्यासीद् यस्य स्वल्पमिदं जगत् ॥ ३१ ॥

मुखं ज्वालाकुलं बिभ्रन् कुर्वन् क्ष्वेडारवं मुहुः । स ददाह भृशं क्रुद्धः कुम्भकारकटं पुरम् ॥ ३२ ॥
कृत्वापि कीटपर्यन्तं भस्मसात् सकलं पुरम् । पुनरेव शशापेदं प्रदीप्तक्रोधपावकः ॥ ३३ ॥
यथा विराधको नाहं तथात्र वचनान्मम । आकल्पान्तमिदं मा भूत् कदाचन जनास्पदम् ॥ ३४ ॥
तदभूदुद्वसं तस्मान्नवद्वादशयोजनम् । जनस्थानं च तस्यैव सीम्नि पञ्चवटी कृता ॥ ३५ ॥
इत्थं तीर्थानि कुर्वाणः पूज्यमानश्च दानिभिः । स्वदेशाभिमुखं भूयो वलितः फलितोद्यमः ॥ ३६ ॥
प्रणम्याहं महालक्ष्मीं कान्त्याः प्रचलितः पथि । अध्वरोधिनि विश्रान्तः क्वचिन्न्यग्रोधमण्डले ॥ ३७ ॥
तदा तदभवत् किञ्चिन्मम लोचनगोचरम् । आजन्मतोऽपि यत्क्वापि न च दृष्टं न च श्रुतम् ॥ ३८ ॥
तदाकर्णय भद्रं ते तुल्यं तुल्याय कथ्यते । इयं हि विविधाश्चर्या रत्नगर्भा च मेदिनी ॥ ३९ ॥
तस्मिन्नवसरे तत्र प्रेरिता सुकृतैर्मम । किरातकुब्जकव्याप्ता वृता कञ्चुकिनां शतैः ॥ ४० ॥
ध्रियमाणातपत्रा च वीज्यमाना च चामरैः । निषिच्यमानमार्गा च सुगन्धिकुसुमद्रवैः ॥ ४१ ॥
उद्भिन्नयौवनारम्भा स्तोकस्तम्भितशैशवा । करेणुस्कन्धमारूढा प्रौढप्रायसखीजना ॥ ४२ ॥
कुतोऽपि क्वापि गच्छन्ती कापि भूपालबालिका । समागत्य विशश्राम मुहूर्त्तं सपरिच्छदा ॥ ४३ ॥ (चतुर्भिः कलापकम्)
वाक्ये वयसि विद्यासु नेत्रे वपुषि वैभवे । आरूढा परमां कोटिमद्वितीया धरातले ॥ ४४ ॥
ग्रामीणेनेव सोत्कण्ठमतृप्तेनेव निर्भरम् । विस्मितेन मया दृष्टा सुचिरं चारुहासिनी ॥ ४५ ॥ (युग्मम्)



दण्डक-प्रतिबोधाय स्कन्दकाचार्यस्यागमनं, शिष्याणां यन्त्रपीलनं, शापश्च ।

एकं न लक्षणं तस्याः सकलस्त्रीजनोत्तरम् । कथ्यमानमपि प्रायो जनानां न प्रतीतये ॥ ४६ ॥
भाले बिभर्त्ति सा बाला बालारुणसमप्रभम् । रूपराज्यध्वजमिव स्वभावतिलकं शुचि ॥ ४७ ॥
मातर्विश्वम्भरे ! देवि ! रत्नगर्भासि निश्चितम् । धन्यः स एव यस्यैषा भवेद् वामाङ्गमण्डनम् ॥ ४८ ॥
अदृष्टनरतद्रूपविलोकनकुतूहली । इत्यहं सन्निधौ तस्याश्चित्ते चिरमचिन्तयम् ॥ ४९ ॥ (युग्मम्)
तदा तत्र त्वयेवाहं पृच्छ्यमानस्तयापि हि । पथिकः कश्चिदौदीच्यः सप्रशंसं वदन्नभूत् ॥ ५० ॥
श्रुतं मया च तेनापि वर्ण्यमानस्य कस्यचित् । उदीचीनस्य भूभर्त्तुः श्लाघाशेषमिदं यथा ॥ ५१ ॥
त्वं सौभाग्यसुधासिन्धुः स लावण्यामृतोदधिः । युवयोर्युक्तसंयोगे कृतार्थोऽस्तु विधिश्रमः ॥ ५२ ॥
तत्र जाने स कोऽप्येवं वर्णितस्तेन वाग्मिना । पुलकस्यूतकौशेयं श्रुतः सोत्कण्ठया तया ॥ ५३ ॥
मुषितस्थगितापविद्धवृत्तिर्जडितस्तम्भितकीलितस्वरूपः ।
अथ सुभ्रुवि तत्र यातवत्यामयि ! तत्रैव वटे चिरं स्थितोऽस्मि ॥ ५४ ॥
सतत पुरतः स्थितेव तन्वी मम सा मुञ्चति मानसं न सुभ्रूः ।
अधुनापि तवानुरूपभूपप्रतिबिम्बद्विगुणीकृतेव जाता ॥ ५५ ॥
वदिह भूयो बहुनिगदितैर्दक्षिणस्यां च तस्यां देशे चास्मिन् तव परिचयात् पूर्णकामोऽस्मि जातः।
वृत्तान्तोऽयं रसिकतिलक ! व्याहृतस्ते पुरस्ताद् भद्रं भूयात् तव विसृज मां यामि कामं गृहेभ्यः ॥ ५६ ॥

इति तदीयवचांसि विचारयन्नतितरां चतुरोऽपि हि नैषधः । समजनिष्ट विशेषविशृङ्खलस्खलितमानसमानसमुच्चयः ॥५७॥
देशस्तावद् भुवि स विदितः स्त्रैणरत्नैकखानिर्नानारूपा विधिविरचना तथ्यगीरेष पान्थः ।
एतत्सर्वं तदिह घटते किन्तु कस्मादिदं मे धीरस्यापि क्षुभितमधुना मानसं तां निशम्य ॥ ५८ ॥
तावत् तस्या न किल विदितं स्थानकं वा कुलं वा पीतं नामामृतमपि न वा दर्शनं दूरतोऽस्तु ।
बाढं बाला तदपि खलु मे बोधयन्तीव सुप्तं भूयो भूयो विशति हृदये कैरवं कौमुदीव ॥ ५९ ॥
अन्तःशल्यं स्खलति सहसा यद्वदम्भोदशब्दात् मन्त्रावेशात् पुनरपि यथा पूर्यते पूर्वदृष्टः ।
तद्वत् किञ्चित् परिचयमयं मोहमुन्मीलयन्ती तद्वार्त्ता मे भवति किमियं निर्विशेषश्रुतापि ॥ ६० ॥
इह हि जगति चित्रं जन्मिनां कर्मयोगाः किमपि किमपि गूढं को हि जानाति तत्त्वम् ।
इति बहुविधमन्तश्चिन्तयन् वैरसेनिश्चिरतरमवतस्थे तेन सार्द्धं कथाभिः ॥ ६१ ॥
अथ कथमपि तस्मै निःस्पृहायापि दत्त्वा कनकखचितरत्नान्यङ्गतो मण्डनानि ।
प्रियवचनविशेषैर्गाढमावर्ज्य भव्यं सुहृदमिव नरेन्द्रः प्रेषयामास पान्थम् ॥ ६२ ॥
तदनु पुनरुपेतैरश्ववारैः परीतः पथिककथितवार्त्तामन्त्रमन्तर्दधानः ।
मुनिभिरभिमतार्थप्रीणितैः स्तूयमानः स्वभवनमभिरामं प्राप भूपालचन्द्रः ॥ ६३ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने प्रथमे उत्पत्तिस्कन्धे चतुर्थः सर्गः ॥ ४ ॥

## प्रथमे उत्पत्तिस्कन्धे पञ्चमः सर्गः ।

ततः प्रभृति तस्यासीदाशीविषविषोपमैः । अपान्थपान्थकथितैर्वृत्तान्तैर्विह्वलं मनः ॥ १ ॥
न निशीथे न मध्याह्ने न रजन्यां न वासरे । न प्रभाते न सन्ध्यायां न मुहूर्त्ते न च क्षणे ॥ २ ॥
न गृहे न गृहोद्याने न विविक्ते न संसदि । न क्रीडाद्रौ न वापीषु न च्छायायां न चातपे ॥ ३ ॥
न प्रभूता न च स्वल्पां नात्मतः परतोऽपि वा । श्रुतानुरागरोगार्त्तो रतिं स प्राप भूपतिः ॥ ४ ॥ (त्रिभिर्विशेषकम्)
अज्ञातजातिनाम्नापि दूरदेशस्थितेन च । अहो ! जनेन केनापि निगृहीता वयं कथम् ? ॥ ५ ॥
ज्ञातापि हि पराधीना पररक्ता च सा यदा । क नु शक्या स्ववशात् कर्त्तुं तदा बाढं प्रियापि हि ॥ ६ ॥
सकलार्थद्रुमद्रोही सन्तापैकमहाफलः । स्मरनामा तनौ लग्नो मम कोऽयं दवानलः ? ॥ ७ ॥
विकारो मानसः सोऽयं पापात्मा मन्मथाभिधः । मथ्नाति निजमेवासावाश्रयास इवाश्रयम् ॥ ८ ॥
कम्पस्वेदादिभिस्तैस्तैर्लक्षणैरुपलक्षितः । आमः कुत्सित एवायं काम इत्यभिधीयते ॥ ९ ॥
का कथा क्षुद्रजन्तूनां येऽमी हरिहरादयः । तेऽपि स्त्रीवदनालोकस्तोकोच्छ्वसितजीविनः ॥ १० ॥
अयं पञ्चाननः कोऽपि मुखैः पञ्चभिरिन्द्रियैः । दत्ते पञ्चशरः पुंसां पञ्चत्वं सेवितोऽपि हि ॥ ११ ॥
पतङ्गभृङ्गसारङ्गमातङ्गतिमयो यतः । एकैकाक्षमदान्मग्नाः पञ्चमस्तस्य का गतिः ? ॥ १२ ॥

सुस्थितं दुःस्थितीकुर्वन् शीतोष्णं परिवर्त्तयन् । जडत्वं प्रापयन् प्राज्ञं कामः कोऽपि नवो विधिः ॥ १३ ॥
स्मर ! स्मर न युक्तं ते दौर्जन्यं सज्जने जने । कोऽपि शर्करया साकं सन्धत्ते सैन्धवं सुधीः ॥ १४ ॥
इत्थं दहति गात्राणि यददृष्टापि सा मम । इदं प्राग्जन्मनः किञ्चित् सत्यं संस्कारकारणम् ॥ १५ ॥
पारम्पर्यं परिज्ञातुं तस्याः कमलचक्षुषः । तावत् पप्रच्छ तद्वार्त्तां वार्त्तान्तरतिरस्कृताम् ॥ १६ ॥
स तां विवेद वैदर्भीं भीमभूपालनन्दिनीम् । दमयन्तीति विख्यातां नाम्नाप्यनुभवेन वा ॥ १७ ॥
हन्त ! किं तेन पान्थेन वर्णितस्तत्पुरः परः ? । हन्त ! किं दमयन्ती सा नाम्नापि हि न वेत्ति माम् ? ॥ १८ ॥
को विधिः किं विधातव्यं किमेतत् संभविष्यति ? । एतदेव परिच्छेत्तुं जीवितव्यस्पृहा मम ॥ १९ ॥

स्यूतेव चित्रलिखितेव समुद्गतेव बद्धेव मध्यपतितेव नियन्त्रितेव ।
कष्टं कदापि मनसो मम पङ्कजाक्षी नैवापसर्पति कथञ्चन सूत्रमात्रम् ॥ २० ॥

एवंविधानि विविधानि विचिन्त्य चित्ते तस्थौ चिरं निविडधैर्यतनुप्रगुप्तः ।
केषाञ्चिदेव सुहृदां भिषजां च हेतोरम्भोधिवन्नहि बभूव विभावनीयः ॥ २१ ॥

न च कथमपि याञ्चादैन्यमङ्गीकरिष्यद् दुहितरमतिधीरः कुण्डिनेन्द्रं ययाचे ।
समरभुवि रिपुभ्यो निर्भयोऽपि प्रकामं स खलु निषधनाथः प्रार्थनाभङ्गभीरुः ॥ २२ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने प्रथमे उत्पत्तिस्कन्धे पञ्चमः सर्गः ॥ ५ ॥

---

पान्थकथितैर्वृत्तान्तैः स्मरविह्वलो नलः ।

## प्रथमे उत्पत्तिस्कन्धे षष्ठः सर्गः ।



अस्मिन्नवसरे देवी देवीभिः सह शारदा । नवरात्रोत्सवक्रीडां कर्त्तुं मेरुगिरिं ययौ ॥ १ ॥
स्वर्णाचलशिरःसीम्नि ताः श्रीह्रीकीर्त्तिकान्तयः । समं देव्या सरस्वत्या समग्रा रेमिरे सुखम् ॥ २ ॥
हंसगङ्गागीतमुख्यानि तासां यानानि कोटिशः । तेषु तेषु प्रदेशेषु सानन्दं स्वैरमभ्रमन् ॥ ३ ॥
सिद्धायतनपीठेषु देव्यः सर्वाः सविभ्रमम् । सकङ्कणरणत्कारं ननृतुः कौतुकप्रियाः ॥ ४ ॥
अथ तासां यियासूनां स्वस्थानं दिव्यसुभ्रुवाम् । प्रयाणावसरे देव्या नोपतस्थे सितच्छदः ॥ ५ ॥
बालचन्द्राभिधः पक्षी स सोमकलया समम् । मृणालनालजालेषु मरालः केलिवानभूत् ॥ ६ ॥
ग्राम्यधर्मरते तस्मिन् प्रमत्ते मानसौकसि । तासां कालविलम्बोऽभूत् सर्वासां शारदावशात् ॥ ७ ॥
अन्यवाहनशब्देन ज्ञातयात्रादिनश्चिरात् । तस्थौ स पुरतो देव्याः सुरतश्रमघूर्णितः ॥ ८ ॥
ततः प्रकुपिता देवी तमुवाच सरस्वती । चक्राङ्ग ! न विना शिक्षामात्मानं चेतयिष्यसि ॥ ९ ॥
यथा कार्येऽप्यसञ्जस्त्वं तीर्थेऽपि रतलम्पटः । तदर्थं भवतो नित्यं भूमौ वासो भवत्विति ॥ १० ॥
ततः परमया भक्त्या प्रणम्य प्रयतो गिरम् । ययाचे दर्शयन् दैन्यं शापस्यानुग्रहं खगः ॥ ११ ॥
अन्याभिरपि देवीभिर्विज्ञप्ता तस्य कारणे । स्वयं च लज्जिता ब्राह्मी स्वामिनी वाक्यमब्रवीत् ॥ १२ ॥

जानाति जनवृत्तान्तं याम्यदिग्विषयं खगः। तेन मे कथिता भैमी नलं प्रत्यनुरागिणी ॥ २७ ॥
एते न तेन दक्षेण स्वयं दृष्टा महात्मना। तस्या नलानुरागिण्या वृत्तान्ताः कथिता यथा ॥ २८ ॥
अध्यासीना भुवनजयिनो भीमभूमर्तुरङ्के नित्यं भैमी निजभुजबलत्रासितक्रौञ्चकर्णम्।
श्रुत्वा श्रुत्वा निषधनृपतिं वन्दिभिः स्तूयमानं वारं वारं सदसि कुरुते कर्णकण्डूयनानि ॥ २९ ॥
निन्नां नक्तं निशि निपतिता भीमभूपालपुत्री स्वप्ने दृष्ट्वा सुभगतिलकं नन्दनं रूपवत्याः।
मुग्धा नत्तद्विपुलपुलकस्वेदकम्पानुविद्धा कुत्रास्मीति क्षणमशरणा न प्रबुद्धापि वेत्ति ॥ ३० ॥
कृत्वा किञ्चिन्मनसि निभृतं नैषधेन्द्रस्य नाम्ना जातिव्यक्तिव्यतिकरमयं रूपकं रागशुद्ध्या।
शुष्यत्कण्ठी तदनु सहते नागमेन प्रयोक्तुं नो वीणायां श्रमजलभरैरङ्गुलीपर्वभिर्वा ॥ ३१ ॥
स्वप्ने चित्रे दिशि दिशि दिवा नक्तमन्तःस्फुरन्ती पश्यन्ती वा निषधनृपतिं भीमभूपालपुत्री।
सवास्तिर्यग्वलितललितप्रान्तविश्रान्तनेत्रं दीर्घश्वासं वहति वदनं दीनवृत्तिं प्रपन्ना ॥ ३२ ॥
शिशिरतरतरूणां क्वापि वार्त्ताप्रसङ्गे कथमपि नलनाम्ना वर्ण्यमानं सखीभिः।
तृणमपि खलु बाला पद्मनालायमानैः सरभसमपि धत्ते कम्पमानैः प्रतीकैः ॥ ३३ ॥
तथा न भूमण्डलचारिणीभ्यस्तमोऽपहोपासनतत्पराभ्यः।
श्रुतो मया दिव्यविलासिनीभ्यस्तस्यां नलस्यापि महानुरागः ॥ ३४ ॥

यदा तव कृतं किञ्चिद् देवासुरनरैरपि । संभविष्यत्यनुल्लङ्घ्यं तदा शापाद् विमुच्यसे ॥ १३ ॥

[illegible] ॥ १४ ॥

नवरात्रोत्सवाय मेरु



नलं प्रति हंसस्यागमनम् ॥

[illegible] तिलकाङ्कितास् ।
[illegible] स्वकायविभूतिभिः ॥ ३५ ॥
[illegible] नित्यं परस्परपरिग्रहबद्धभावौ ।
[illegible] रागः सुखेन हि कषायितवाससीव ॥ ३६ ॥
[illegible] ममग्रमापृच्छ्य यामि नृपतिं प्रति वैरसेनिम् ।
[illegible] तदनु श्रीमसुतां करिष्ये तद्रागसागरमहोर्मिनिमग्नचित्ताम् ॥ ३७ ॥
[illegible] वीरसेनतनयं प्रति बद्धभावा ।
[illegible] सुरासुरनरोरगसिद्धयक्षगन्धर्वकोटिभिरपि क नु विप्रतार्या ? ॥ ३८ ॥
इत्येतदुक्त्वा दयितां पतङ्गः क्ष्मामण्डलस्याभिमुखो बभूव ।
श्रीमान् महापद्मयुगेन साकं विहायसा हंसकुलावतंसः ॥ ३९ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने प्रथमे उत्पत्तिस्कन्धे षष्ठः सर्गः ॥ ६ ॥



## प्रथमे उत्पत्तिस्कन्धे सप्तमः सर्गः ।



अथ चन्द्रमुखी मुग्धा स्फुटत्कुमुदहासिनी । समाययौ शरद्बाला विमलाम्बरधारिणी ॥ १ ॥
मञ्जुखञ्जनमञ्जीराः स्वैरकीरावलिस्रजः । शुभ्राभ्रवसना भेजुर्विभ्रमं दिग्मृगीदृशः ॥ २ ॥
भृशमम्बुजरजःपुञ्जपिञ्जरैरलिनां व्रजैः । कामानलस्फुलिङ्गत्वं कृतं हृदि वियोगिनाम् ॥ ३ ॥
इत्थं वर्षात्यये तस्मिन् विभूषयति भूतलम् । पुनर्नव इवोत्तस्थे नलस्य विरहानलः ॥ ४ ॥
ददाह चन्दनं देहं न ददौ कौमुदी मुदम् । मृणालं व्यालतां भेजे कर्पूरः पूरतां ययौ ॥ ५ ॥
ज्वलति स्म जलार्द्रापि मालती म्लानिमाददे । बभार हारः क्षारत्वं कस्तूरी दुस्तराऽभवत् ॥ ६ ॥
ततः प्रचुरचातुर्यैः सुहृद्भिः सह शोभनैः । क्षणं मनोविनोदाय स पुरोपवनं ययौ ॥ ७ ॥
तत्रास्य पुरतस्तस्थौ बालिका वनपालिका । मृणाललतिका नाम्ना साम्नामेकनिकेतनम् ॥ ८ ॥
अग्रत चित्रसन्दर्भां मालतीमुकुलस्रजम् । निधाय नृपकण्ठे सा जगाद सरसाक्षरम् ॥ ९ ॥

इदं तव स्वर्गवनोपमानं क्रीडावनं मन्मथतुल्यरूप ! ।
अत्र द्रुमाणां च पतत्रिणां च दक्षोऽपि जानाति जनो न तत्त्वम् ॥ १० ॥

अपारिजातस्य सपारिजातं निरञ्जनस्यापि घनाञ्जनौघम् ।
तथापि राजन् ! न तवापि हर्षं वनं विधत्तामवनप्रियस्य ॥ ११ ॥
स्फारपुष्पभरनम्रशेखराः स्पन्दमानमकरन्दबिन्दवः ।
त्वां नमन्ति नृप ! धर्मशाखिनं शाखिनः प्रमदबाष्पवर्षिणः ॥ १२ ॥
अयमितस्तरुणे करणे तरौ प्रतिकृतिं प्रतिवीक्ष्य मुहुर्मुहुः ।
क्षिपति हस्तफलानि बलीमुखो रयविसारिणि सारिणिवारिणि ॥ १३ ॥
निष्कुलाः कृतवतः फलकोशं बीजमौक्तिककणैर्निपतद्भिः ।
त्रोटिकोटिघनघट्टनसङ्ख्यां दाडिमी रचयतीव शुकस्य ॥ १४ ॥
प्रमदवनविनिद्रपारिभद्रद्रुमकुसुमस्तबकैर्विकाशवद्भिः ।
अपसरति जवादकालसन्ध्याभयचकितश्चिरमत्र चक्रवाकः ॥ १५ ॥
स्वयूथकान्ताकुचमण्डलानि विलोकयन्तो वनवानरेन्द्राः ।
नारङ्गमङ्गीकृतपिङ्गभावं चुम्बन्ति चैते चपला हसन्तः ॥ १६ ॥
आकर्ण्य कर्णमधुरं मधुपाङ्गनानामत्रापि चित्रलिखिताकृतिरेष गीतम् ।
रोमन्थमन्थरमुखः सुखसंनिविष्टो न ग्रन्थिपर्णमपि गन्धमृगः क्षिणोति ॥ १७ ॥

नलसमीपे वनपालिकया मृणाललतिकया कृतं वनवर्णनम् ॥

एतानि तानि कृतमालतमालताल–हिन्तालशालसरलार्जुनमर्जवन्ति ।
अभ्युल्लसद्बकुलवञ्जुलचूतवल्लीहंसीमखव्यतिकराणि वनान्तराणि ॥ १८ ॥
एतेषु कोकिलकपिञ्जलचक्रवाकचकोरचातकशुकप्रमुखा वसन्ति ।
नित्यं निरन्तरतिरस्कृतघर्मरश्मिश्यामैकशीतलतलेषु विहङ्गसङ्घाः ॥ १९ ॥
अत्रापि मारमशरारिचकोरकीरकोयष्टिकुक्कुभकपिञ्जलमञ्जुलानि ।
उद्दामकर्दमविमर्दनलोलकोलकोलाहलकमहलानि नदीतटानि ॥ २० ॥
उदमपि सुविशालं शालभञ्जीकुचाग्रच्युतजलकणपानव्यग्रपारापतौघम् ।
असितसिचयमेघैर्नित्यनृत्यन्मयूरं मुरजरचितगर्यं यन्त्रधाराविताने ॥ २१ ॥
अयमपि कपिरुद्रः शालमालापिनद्धः स्थलकमलसमृद्धः सिद्धगन्धर्वसेव्यः ।
स्फटिकघटितभित्तिस्तुङ्गवैडूर्यशृङ्गः सुरतनिरतलीलाकिन्नरः केलिशैलः ॥ २२ ॥
एतच्च पद्मरणचूर्णितपद्मवृन्दप्रेङ्खत्परागभरनिर्भरभूरितोयम् ।
लीलासरः समुदिताधिकमान्ध्यरागं व्योमेव शुक्तिसमनिर्मलतारतारम् ॥ २३ ॥
सलिलशालिनि शालिनि शीतले कमलजालकजालकमालिनि ।
इह भुजङ्गमरङ्गममीहते रिपुनिवारण ! वारणवल्लभा ॥ २४ ॥

जितपुष्करं सकलरुद्धपुष्करं निनदन्नुदारमनुदारमुत्सुकः ।
इह शीतलं समवगाह्य पुष्करं प्रतिपुष्करं क्षिपति पुष्करं करी ॥ २५ ॥
हरिचारुवक्त्र ! हरितुल्यदीधिते ! हरिभूरिसार ! हरिरम्यवैभव ! ।
नरपुण्डरीक ! नवपुण्डरीकवरन्ननु पुण्डरीकवनमत्र राजते ॥ २६ ॥
इत्थं तया निगदितानि वनान्तराणि व्यालोलचेतसि विलोकयति क्षितीशे ।
दृष्टं बभूव सहसैव तदा निरस्तानिस्तन्द्रचन्द्रशतसान्द्रमवान्तरिक्षम् ॥ २७ ॥
प्रभवति किमुतासावट्टहासः पुरारेः ? किमयमुत हिमाद्रेः शृङ्गसङ्घातपातः ? ।
इति विततवितर्कव्याकुलानां जनानामवनिमवनिपेतुः कोटिशो राजहंसाः ॥ २८ ॥
अथ सह सहचर्या सन्निधौ सञ्चरन्तं मणिवलयितकण्ठं वज्रमञ्जीरभाजम् ।
कनककमलवक्त्रं यूथनाथं खगानां नयनपथमनैषीद् बालचन्द्रं नरेन्द्रः ॥ २९ ॥
स स्वयं करतलेन भूभुजा कौतुकेन विधृतो विहङ्गमः ।
वक्तुमारभत दिव्यभाषया भारतीचरणरेणुवासितः ॥ ३० ॥
जय जगदखिलं खिलीकरिष्यन् कुमुदमदप्रतिपन्थिभिर्यशोभिः ।
निषधनृप ! निषिद्धसर्वशत्रो ! निखिलनिषङ्गिनिषेविताङ्ग ! नित्यम् ॥ ३१ ॥

गजेन्द्र ! गजति भवद्वनराजिरेषा प्रौढालिरञ्जनसमानतमालकान्ता ।
यद्वा महीपतिगुणा कलमापि भाति प्रौढालिरञ्जनसमानतमालकान्ता ॥ ३२ ॥
इत्थमर्थबहलं सकोमलं व्याहरन्नविरलं विहङ्गमः ।
निर्ममे नलनृपस्य निर्मलं विस्मयव्यतिकराकुलं मनः ॥ ३३ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने प्रथमे उत्पत्तिस्कन्धे सप्तमः सर्गः ॥ ७ ॥

## प्रथमे उत्पत्तिस्कन्धे अष्टमः सर्गः ।

ततः स हृदये दध्यौ निषधानामधीश्वरः । अहो ! बत चिरात् किञ्चिन्नवीनमिदमीक्षते ॥ १ ॥
पक्षिणो लक्षशः क्वमी कोऽयं तेषाय यूथपः ? । कुतश्चास्य मुखे सेयं सालङ्कारा सरस्वती ? ॥ २ ॥
सन्ति हन्त ! सर्वत्र खगाः पिच्छपरिच्छदाः । किमिदं पुनरस्येदृग् रत्नाभरणवैभवम् ? ॥ ३ ॥
यथेयं प्रभुता काचिद् यथा चायं गुणोदयः । तथाऽयं निश्चितं कश्चिद् विहङ्गव्यञ्जनः सुरः ॥ ४ ॥
कामतः कर्मतो वापि शापतश्छद्मतोऽपि वा । भ्रमन्ति प्राणिनः प्रायो रूपान्तरतिरस्कृताः ॥ ५ ॥
अयं स्फुरति यद् बाहुर्दक्षिणः पक्षिणं भजन् । शंसन्निव ममासन्नं मनीषितसमागमम् ॥ ६ ॥

यदियं महती काचित् प्रसक्तिर्मम चेतसः । तदस्य दर्शनं नूनं निष्फलं न भविष्यति ॥ ७ ॥
इत्यन्तश्चिन्तयन्तं तं विस्मयस्मेरलोचनम् । भीतैव सहसा हंसी सौम्यं सोमकलाऽवदत् ॥ ८ ॥
देव ! देव ! किमारब्धं दुरध्यवसितं त्वया ? । त्वं हि भूपालशार्दूल ! पुण्यश्लोकः प्रकीर्त्यसे ॥ ९ ॥
तेनैव तव विश्वासं विधाय हृदये दृढम् । संप्राप्ताः स्म निवासाय त्वयि देशान्तराद् वयम् ॥ १० ॥
तत् कथं मम भर्त्तारं विसूत्रयितुमिच्छतः ? । तव विश्वासघातस्य पातकं न भविष्यति ॥ ११ ॥
हहा ! किमिदमस्माकं यतो रक्षस्ततो भयम् । भवन्ति किमु कुत्रापि चन्द्रादङ्गारवृष्टयः ? ॥ १२ ॥
यस्य केवलमायत्तं नीरक्षीरविवेचनम् । तं विवेकिनमीदृक्षं न हि त्वं हन्तुमर्हसि ॥ १३ ॥
मुञ्च मुञ्च महाराज ! मदीयं जीवितेश्वरम् । प्रसीद निषधाधीश ! भर्त्तुर्भिक्षां प्रयच्छ मे ॥ १४ ॥
गृहाणाभरणं सर्वमस्यापि च ममापि च । रक्ष रक्ष पुनः प्राणान् देव ! प्राणेश्वरस्य मे ॥ १५ ॥
भवामि भवतो दासी क्रियेयं भवतो बलिः । प्रणमामि च साष्टाङ्गं स्वामिन् ! मे करुणां कुरु ॥ १६ ॥
गुरुष्वाऽऽदेशवर्त्तित्वं शूरत्वं च विरोधिषु । दीनेषु च दयालुत्वं महतां लक्षणत्रयम् ॥ १७ ॥
यूथनाथं विना राजन् ! प्राणत्यागमवेहि मे । अनाथाश्च विपद्यन्ते सर्वेऽपि हि पतत्रिणः ॥ १८ ॥
इत्थं कलविलापिन्यां तस्यां नलनृपं प्रति । बभूव सपदि श्रव्या दिव्या नभसि भारती ॥ १९ ॥
मुक्त्वा मोहं महाराज ! राजहंसो विसृज्यताम् । अयं करोतु ते दौत्यं दमयन्तीं प्रियां प्रति ॥ २० ॥

हंसविषये नलस्य विभ्रमम्, हंसपत्न्या हंसमोचनार्थं कृता प्रार्थना व्योमे जाता दिव्य भारती च ॥

आकर्ण्याकाशवाणीं तां तत्र तद् वचनं नलः । आश्चर्यशृङ्गमारूढः प्रत्युवाच प्रसत्तिमान् ॥ २१ ॥
मा मैवमुन्यनां मुग्धे ! शान्तं पापं मनस्विनि ! । अलमस्मात् ममाशङ्क्य राजहंसरतिं भज ॥ २२ ॥
जानीहि मां महाभागे ! राजर्षिकुलसम्भवम् । रक्षितारं सुसाधूनां शामितारं दुरात्मनाम् ॥ २३ ॥
अयं तव पतिर्बाले ! मरालः प्रियदर्शनः । विवेकी विनयी विद्वान् श्रीमान् सौम्यः शमी शुचिः ॥ २४ ॥
कल्याणकारणं मत्वा कौतुकेनेव केवलम् । मया तेनायमायुष्मान् कृतो नेत्रोत्सवः क्षणम् ॥ २५ ॥
इदं मम करप्राप्तमाकाशात् पतितं फलम् । अतार्कितोपपन्नानां भवतां यत् समागमः ॥ २६ ॥
गतोऽयुष्मत्प्रसक्तेयं मया हि व्योमभारती । मज्जता विरहाम्भोधौ लब्धा नौरिव संप्रति ॥ २७ ॥
इत्युक्त्वा विरते तस्मिन् भूपालकुलकेशवे । प्रत्युवाच पुनः प्रेम्णा राजहंसो हसन्निव ॥ २८ ॥
देव ! जानाति नेयं ते ममयं मम पक्षिणी । कलयत्यन्यराजन्यसामान्यां क्रूरतां त्वयि ॥ २९ ॥
त्रैलोक्याभयसत्रस्य नलस्य पृथिवीपतेः । न भवन्ति परे तुल्या लुब्धका इव भूभुजः ॥ ३० ॥
भजतो भारतीं देवीं भुञ्जतो भारतीं भुवम् । बिभ्रतो भारतीं शाखां भूयास्तां भारती तव ॥ ३१ ॥
लीलालोलः कविकुलकलाकेलिकौतूहलानां मानाम्भोधिः सुभगतिलको भिन्नदारिद्र्यमुद्रः ।
एकाधारः सकलमहमामाकरः सत्यवाचामाचन्द्रार्कं जय जय जने वीरसेनात्मज ! त्वम् ॥ ३२ ॥
रञ्जयन्ति हृदयं मनीषिणामाननं मलिनयन्ति विद्विषाम् ।

वीरसेनतनय ! स्वयं पुनस्त्वद्गुणाः कलभदन्तकान्तयः ॥ ३३ ॥
ज्योत्स्ना स्वयं च धवला धवलीकरोति गङ्गा स्वयं च विमला विमलीकरोति ।
इत्थं धरावलयवज्रधर ! स्वयं सा धन्या करिष्यति च कञ्चन धन्यमन्यम् ? ॥ ३४ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने प्रथमे उत्पत्तिस्कन्धे अष्टमः सर्गः ॥ ८ ॥

## प्रथमे उत्पत्तिस्कन्धे नवमः सर्गः ।

अस्ति निस्तुपदाक्षिण्यदक्षिणापथमण्डनम् । विदर्भमण्डलाखण्डकुण्डलं कुण्डिनं पुरम् ॥ १ ॥
तत्र चित्रारिवारस्त्रीगीतस्फीतपराक्रमः । प्रतिपक्षचमूभीमो भीमः श्रीमान् महीपतिः ॥ २ ॥
किं वर्ण्यते स षट्त्रिंशत् खड्गकोटिमहार्णवः ? । प्रभुः सप्ततिलक्षाणां दक्षिणापथनायकः ॥ ३ ॥
तस्य त्रिभुवनाभोगभ्रान्तकीर्त्तेर्महीभुजः । प्रियङ्गुमञ्जरी नाम प्रिया गौरीव धूर्जटेः ॥ ४ ॥
भामिनी कामिनी कान्ता मानिनी दानिनी शुभा । शुद्धा स्निग्धा विदग्धा च मुग्धा च मृगलोचना ॥ ५ ॥
दाक्षिण्यपुण्यलावण्यशीललीलादिभिर्गुणैः । सधर्मचारिणी रेजे तादृशी तादृशस्य सा ॥ ६ ॥
तया सह मनस्विन्या तस्य वैषयिकं सुखम् । भुञ्जानस्य महीभर्त्तुः कालः कश्चिद् व्यतीतवान् ॥ ७ ॥



हंसीं प्रति नलस्य कथनम्, मुक्तो राजहंसः तेन कृतं विदर्भनृपस्य वर्णनम् ॥

अन्यदा नरदानीरवानीरस्मेरमारुताः । विजहार तया साकं स वसन्ते वनस्थलीः ॥ ८ ॥
तयोस्तस्य विचित्राणि मृगद्वन्द्वानि पश्यतोः । दृक्पथं प्राप सापत्या काचित् कपिकुटुम्बिनी ॥ ९ ॥
तस्याः प्रबललीलाभिर्बाललालनकेलिभिः । उभयोरभवच्चित्तं निरपत्यतयाऽऽकुलम् ॥ १० ॥
पादपेनेव वन्ध्येन राज्येन किमनेन नः ? । इत्यपत्यविहीनौ तौ दुःस्थितौ हृदि तस्थतुः ॥ ११ ॥
तदर्थं तत्परौ नित्यं व्रतस्थौ विजितेन्द्रियौ । चिरं चक्रेश्वरीं देवीमुपासामासतुः स्वयम् ॥ १२ ॥
शीर्णपर्णफलाहारौ कुशस्रस्तरशायिनौ । कृतत्रिषवणौ शश्वज्जापहोमपरायणौ ॥ १३ ॥
शङ्खचक्रगदाशार्ङ्गशृङ्गारितचतुर्भुजाम् । पक्षान्ते पक्षिराजस्थामादिशक्तिमपश्यताम् ॥ १४ ॥ (युग्मम्)
देवि ! सेवानमायातदेवासुरनरस्तुते ! । त्रासितारिचमूचक्रे ! चक्रेश्वरि ! नमोऽस्तु ते ॥ १५ ॥
अम्ब ! त्रिभुवनस्तम्भकादम्बिनि ! नितम्बिनि ! । सिद्धिशालिकरस्थालि ! महाकालि ! नमोऽस्तु ते ॥ १६ ॥
सर्वपापापहाराय संहाराय दुरात्मनाम् । दौःस्थ्यविस्तारपाराय नारायणि ! नमोऽस्तु ते ॥ १७ ॥
इत्युपश्लोकयन्तौ तौ प्रेमगद्गदया गिरा । जगाद जगतां माता जङ्गमा कल्पवल्लरी ॥ १८ ॥
प्रीताऽस्मि युवयोर्वत्सौ ! नियमोऽयं समाप्यताम् । मयैव प्रेरितः प्रातः समागत्य शमाम्बुधिः ॥ १९ ॥
चारणश्रमणः श्रीमान् मुनिर्दमनकाभिधः । युवां युवां जनेनेव स्वशक्त्याऽनुग्रहीष्यति ॥ २० ॥ (युग्मम्)
इत्युक्त्वाऽन्तर्हितायां च तस्यां भुवनमातरि । तौ निशान्ते निशान्तस्थौ निद्रामुद्राममुञ्चताम् ॥ २१ ॥

कृतप्राभातिकौ भक्त्या विनिर्मितसुरार्चनौ । विहितस्वप्नसंवादौ यावद् विस्मयमूहतुः ॥ २२ ॥
तावत् कमलकिञ्जल्कगर्भगौराङ्गकान्तिभिः । वृष्टिमष्टासु काष्ठासु कुर्वाणं काञ्चनीमिव ॥ २३ ॥
सग्रन्थं ग्रन्थनिर्मुक्तं सश्रीकं श्रीविवर्जितम् । दृष्टवन्तौ तमायान्तमन्तरिक्षान्मुनीश्वरम् ॥ २४ ॥ (युग्मम्)
स तं सौधतलासन्नं धृतरोमाञ्चकञ्चुकः । अभ्युत्तस्थौ समं पत्न्या कुण्डिनेन्द्रः कृताञ्जलिः ॥ २५ ॥
निवेश्य काञ्चने पीठे प्रमोदभरनिर्भरः । त्रिः प्रदक्षिणयित्वाऽऽशु प्रणनाम प्रियासखः ॥ २६ ॥
अथाभिमुखमेतस्य नीचासनकृताश्रयः । उवाच वचनं राजा प्रसन्ननयनाननः ॥ २७ ॥
अद्य चिन्तामणिः पाणौ अद्य कल्पद्रुरङ्गणे । यदयं मम सञ्जातो यौष्माकीयः समागमः ॥ २८ ॥
इत्यूचिवांसमुच्चाशं प्रसन्नः पृथिवीपतिम् । मुनिर्दमनको वाक्यं बभाषे शमभूषणः ॥ २९ ॥
निष्फलाः खलु जायन्ते तपसामपि लब्धयः । न भवन्त्युपभोक्तारो भव्या यदि भवादृशाः ॥ ३० ॥
दिष्ट्या हृष्टाः स्म भूपाल! भवद्भक्तिभराद् वयम् । मुक्तसङ्गा अपि यतो यतयः श्राद्धबान्धवाः ॥ ३१ ॥
यस्मिन् यान्ति लयं पुनः पुनरपि प्रत्युद्गताः कोटिशः कल्लोला इव वारिधौ हरिहरब्रह्मादयस्तेऽपि हि ।
निर्व्युत्पत्ति निरञ्जनं निरुपमं निष्केवलं निष्कलं नित्यं निर्विषयं तनोतु परमं तद् ब्रह्म शर्माणि ते ॥ ३२ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने प्रथमे उत्पत्तिस्कन्धे नवमः सर्गः ॥ ९ ॥

---

भीमनृपेन अपत्यार्थमाराधिता चक्रेश्वरी तस्या आगमनं वरप्रदानं च दमनकमुनेश्वागमः॥

## प्रथमे उत्पत्तिस्कन्धे दशमः सर्गः ।



इत्युक्त्वा पुनरप्यूचे मनीषितचिकीर्षया । राजेन्द्र ! राजपत्नी ते सदा राज्यार्द्धभागिनी ॥ १ ॥
पृथक् तदियमस्माभिर्बहुमान्या मनस्विनी । राजवद् राजदारेषु वर्त्तितव्यमिति स्मृतिः ॥ २ ॥
कल्याणि ! क्रियतामेषा मूर्ध्नि मन्दारमञ्जरी । अपत्यं त्रिजगन्मान्या तव कन्या भविष्यति ॥ ३ ॥
त्रिजगत्पावनी कन्या तावदन्या गुणोत्करैः । पुत्रास्त्रयः पुनर्बाले ! भविष्यन्ति ततः परम् ॥ ४ ॥
ततः स्मितमुखी राज्ञी राजा च पुनरूचतुः । भूयः सम्भावनार्थं नौ भगवन् ! भृशमर्थ्यसे ॥ ५ ॥
प्रसीद गर्भरूपेषु मिथ्या दुष्कृतमस्तु नौ । शिवास्ते सन्तु पन्थानः साधयस्व मनीषितम् ॥ ६ ॥
इत्यादि वादिनौ विद्वान् स तावापृच्छ्य दम्पती । उत्पपात पतङ्गश्रीर्व्योम्नि मुनिमहत्तरः ॥ ७ ॥
अथोपचितसर्वाङ्गी वल्लीव बहलच्छविः । गौडेन्द्रदुहिता देवी दधावापन्नसत्त्वताम् ॥ ८ ॥
जाह्नवीजलमिश्रेण क्षीरसागरवारिणा । मुग्धा मज्जनमाधातुं बबन्ध हृदि दोहदम् ॥ ९ ॥
सा सर्वगुणसंपूर्णां सकलक्लेशनाशिनीम् । असूत तनयां सद्यो विद्यामुपनिषद् यथा ॥ १० ॥
नवोदितरविप्रायं विद्योतितदिगन्तरम् । ललाटे तिलकं तस्या नैसर्गिकमदृश्यत ॥ ११ ॥
निर्माल्यमर्त्येश्वरं पत्युः कुर्यादियामिति । अश्रूयत च लोकेन व्योम्नि वागशरीरिणी ॥ १२ ॥

वायवश्चाद्भुतामोदा ववुर्मन्थरशीतलाः । विस्मयं जनयन्तश्च ववृषुः पुष्पवारिदाः ॥ १३ ॥
नेदुर्नभसि गम्भीरा दिव्यदुन्दुभयो भृशम् । अजनि स्वर्गसंकाशं तत्क्षणं क्षोणिमण्डलम् ॥ १४ ॥
प्रथमापत्यजन्मोत्थक्रीडामुदितसज्जनैः । कोऽपि कोलाहलाकीर्णो बभूव स महोत्सवः ॥ १५ ॥
सञ्चचार कुमारी सा हस्ताद्धस्तं प्रतिक्षणम् । सुकुमारा मरालीव पङ्कजादिव पङ्कजम् ॥ १६ ॥
सर्वं स्त्रीगर्वसर्वस्वं दमयन्ती यदुत्थिता । सा ततो दमयन्तीति स्वजनैरभ्यधीयत ॥ १७ ॥
यत्तज्जन्मदिने प्राप्तः पुरं दन्ती दवार्दितः । दवदन्तीति तत् तस्याः पित्रा नाम कृतं पुनः ॥ १८ ॥
सा वेद वेदसिद्धान्तपुराणागमसंहिताः । तर्कव्याकरणच्छन्दोऽलङ्कारनिकराण्यपि ॥ १९ ॥

गीतं नृत्यं लिखितगणितं वैद्यकं भूतविद्यां शय्यां पुष्पग्रथनतरणं चित्रलेप्यादि कर्म ।
होराचारायणरसवतीशाकुनद्यूतगन्धान् किञ्चात्युक्तैः परमपि न तद् यन्न जानाति साऽत्र ॥ २० ॥
इत्थं सर्वकलाकलापकुशला सर्वाङ्गशृङ्गारिणी सर्वानन्दविधायिनी किमपरं सा सर्वलोकोत्तरा ।
देवाकर्णयशं प्रति प्रतिदिनं नानाविधैर्विभ्रमैर्वैदर्भी नवयौवनेन गमिता वाचां तु पारंपरम् ॥ २१ ॥
तत् तस्याः स्मरसार्वभौमभुवनं लावण्यपुण्यं वपुर्मन्ये वीक्षितुमक्षमः स भगवान् देवः स्वयम्भूरपि ।
ध्यानव्याजनिमीलिताष्टनयनः सृष्टिक्रमं साधयन् येनाद्यापि न तत्समां वरतनुं शक्नोति कर्त्तुं पुनः ॥ २२ ॥

स्मरकरतलभल्ली हावभावैकवल्ली तरुणहृदयहाला सर्वसौभाग्यशाला ।



दमनकमुने र्गमनम्, दमयन्त्याश्च जन्म ॥

॥ १९ ॥

जयति नृप! नदीया विश्वसम्भावनीया भुवनजयपताका रूपरेखा शलाका ॥ २३ ॥
उत्कल्लोलं त्रिवलिवलये लब्धराज्यं नितम्बे प्राप्तौन्नत्यं कुचकलशयोर्गण्डयोर्मुक्तनिद्रम् ।
पाणिद्वन्द्वे कृतकिशलयं केशपाशे विशङ्कं चिन्तातीतं नयनयुगले यौवनं नाथ! तस्याः ॥ २४ ॥

समानधर्माः समशीलवेषाः सद्दक्कुलास्तुल्यवयोविलासाः ।
सख्यः सदा सप्तशतानि तस्याः नरेन्द्रकन्याः सविधं भजन्ते ॥ २५ ॥

आजन्मतः सर्वजगद्वधूनां जयैकराज्ये विहिताभिषेका ।
सा लञ्छनच्छद्मकृतं विधात्रा ललाटपट्टे तिलकं बिभर्त्ति ॥ २६ ॥

दृष्टं दृष्टं नवनवमिव प्रेक्ष्यते यत्तदङ्गं तस्मादस्मन्मनसि घटते सूनृतं शाक्यवाक्यम् ।
दृश्यादृश्यं ननु तदुदरं येन तेन प्रकामं सम्यग् जैनी जयति सदसद्वादविद्याजयश्रीः ॥ २७ ॥

यां विलोक्य मनुजस्य जायते जीवितं च सफलं स्वजन्म च ।
सा नरेन्द्रतनया नयान्विता मङ्गलं शुभतनो! तनोतु ते ॥ २८ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने प्रथमे उत्पत्तिस्कन्धे दशमः सर्गः ॥ १० ॥



# प्रथमे उत्पत्तिस्कन्धे एकादशः सर्गः ।

इदमाकर्ण्य सङ्कीर्णं वचनं मानसौकसः । बभार भारतः शोकमस्तोकविरहातुरः ॥ १ ॥
दीर्घमुष्णं च निःश्वस्य तिर्यग्वलितलोचनः । जगाद मदनोन्मादसादितोक्तिपरिक्रमम् ॥ २ ॥
इत्येकैकं समाकर्ण्य बहुशस्तत् तदद्भुतम् । अर्द्धमग्नास्त्वया मूलान्मोहाब्धौ मज्जिता वयम् ॥ ३ ॥
वैदर्भीवर्णनव्याजात् सुचिरं सुचिरं जयन् । त्वमकार्षीर्मया सार्कं कलहं कलहंस ! किम् ? ॥ ४ ॥
किं करोमि ? क्व गच्छामि ? कं वा शरणमर्थये ? । न मुञ्चति हि मां लज्जा प्रतिष्ठाभङ्गलक्षणम् ॥ ५ ॥
अहो ! भ्रमति भूचक्रं पतति व्योममण्डलम् । विलीयन्ते दिशः सर्वा गात्रं प्रज्वलतीव मे ॥ ६ ॥
हन्त ! हा तात ! हा मातर्युवयोर्नानृणोऽस्म्यहम् । अमी गच्छन्ति मे प्राणा हा ! लोकमपनायकम् ॥ ७ ॥
इति जल्पन् समुद्भ्रान्तकण्ठमीलद्विलोचनम् । जगाम जगतीपीठे पुण्यश्लोकः प्रजापतिः ॥ ८ ॥
सरःसलिलसंपृक्तास्तुषारकणवर्षिणः । ततस्ते वीजयामासुर्व्याकुलाः पक्षिणः क्षणम् ॥ ९ ॥
उपरागविनिर्मुक्तः शशीव विशदच्छविः । पुनः प्रकृतिमापन्नः स बभाषे पतत्त्रिणा ॥ १० ॥
दुर्लभाऽपि हि वैदर्भी न च हस्तगतैव सा । आसन्ना हि सहस्रांशोर्दूरस्थस्यापि पद्मिनी ॥ ११ ॥
आस्तां प्रकृतिवर्गस्ते पक्षिमात्रोऽप्यहं तव । त्वदेकशरणां भैमीं करिष्यामि न संशयः ॥ १२ ॥

त्वत्प्रसादादिदं कार्यं सुखसाध्यं मयाऽपि हि । न किं मन्त्रानुविद्धेन रजसा नागनिग्रहः ? ॥ १३ ॥
हंसीवर्गः समग्रोऽपि सन्निधौ तव वर्त्तताम् । शीघ्रं प्रेषय मां राजन् ! कुण्डिनं नगरं प्रति ॥ १४ ॥
सा मद्वचनतः कन्या त्वदन्यं वृणुते यदि । देवेन तदियं हंसी नार्प्पणीया पुनर्मम ॥ १५ ॥
अत्रर्गाग मम्मे हंस ! कोऽयं तव परिक्रमः ? । मित्रधर्मोचितस्येयं तव काऽस्मासु भृत्यता ? ॥ १६ ॥
कोऽपि नः सन्निधानाय शुभयोगेन केनचित् । हंसच्छद्मा समायातस्त्वमकारणबान्धवः ॥ १७ ॥
स्वयं वर्षति पर्जन्यः स्वयं तपति भास्करः । अपरप्रार्थनापेक्षं परोपकरणव्रतम् ॥ १८ ॥
सिद्धिरस्तु तवास्तु पक्षीन्द्र ! क्षेमं भवतु वर्त्मनि । अस्माकं मास्म विस्मार्षीः प्रेक्ष्य भैमीं शुचिस्मिताम् ॥ १९ ॥
समापृच्छ्य ततो हंसीं समादिश्य च किङ्करान् । पक्षिलक्षपरिक्षिप्तः प्रतस्थे कुण्डिनं प्रति ॥ २० ॥
यावत् स्फुरति नो दृष्टिर्यावद् भ्रमति नो मनः । तावद् दिवि स नादर्शि छायाभुवि न तस्य च ॥ २१ ॥
नगनगरगिरीन्द्रद्वीपिनीकोटिलक्षाननुपमरमणीयान् लीलया लङ्घयित्वा ।
सपदि पुरमवापत् कुण्डिनं चण्डवेगः स नलललितशंसी हंसवंशावतंसः ॥ २२ ॥
वनभुवि दमयन्त्यास्तत्र सर्वाङ्गतुङ्गं मरकतमयशृङ्गं चित्तनृत्तैकरङ्गम् ।
रचितकनकरम्भा विद्युदुद्योतलीलं सजलजलदलीलं केलिशैलं ददर्श ॥ २३ ॥
कर्पूरपूरपरिक्षेपकृतालवालैर्नीरन्ध्रगन्धजलसारिणिसिच्यमानैः ।

वृक्षैर्विराजितमुदीक्ष्य वनं स भैम्याः ससार नन्दनवनस्य विहङ्गशक्रः ॥ २४ ॥
क्षितिखचितविसर्पद्वज्रवैडूर्यरत्नप्रकरकिरणदूर्वादुर्विभाव्यस्थलीके ।
दिशि दिशि दमयन्त्यास्तत्र पश्यन् वयस्यास्त्रिदशमपि स मेने नामसौभाग्यसारम् ॥ २५ ॥
किमुत भुवनं बन्दीकर्तुं हरिण्मयशृङ्खलाः ? किमुत जनतां मोहं नेतुं विपद्रुमवीरुधः ? ।
नृपतिदुहितुः क्रीडालोलाः सखीरवलोकयन्निति चिरतरं चिन्ताचक्रं चकार स विष्किरः ॥ २६ ॥
तत्र केलिकमलं भ्रमयन्तीं शैशवव्यतिकरं गमयन्तीम् ।
विश्वलोचनचयं रमयन्तीं पश्यति स सहसा दमयन्तीम् ॥ २७ ॥
रूपेण काञ्चनसमुन्नतिमुद्वहन्ती तारागणैरिव वृता निकरैः सखीनाम् ।
सा तस्य सर्वसुरसिद्धगणाभिगम्या चित्तं चकर्ष कनकाचलचूलिकेव ॥ २८ ॥
तस्याः सकाशमधिगन्तुमसौ समन्तादाकाशवर्त्म गहनं प्रविगाहमानः ।
श्वेतं वितानमिव चारु चिरं वितन्वन् बभ्राम भूमिपतनाय पतङ्गशक्रः ॥ २९ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने प्रथमे उत्पत्तिस्कन्धे एकादशः सर्गः ॥ ११ ॥





कुण्डिनं प्रति राजहंसस्य गमनम् ॥

॥ २१ ॥

## प्रथमे उत्पत्तिस्कन्धे द्वादशः सर्गः ।

ततः पक्षौ स संवृण्वन् सुपर्णकुलमण्डनः । पपात नभसो भूमौ भैमीपार्श्वे सितच्छदः ॥ १ ॥
तस्य पत्रपुटास्फोटं श्रुत्वा सरसनिस्वनम् । बभूवाभिमुखी सुभ्रूः किमेतदिति संभ्रमात् ? ॥ २ ॥
विलोक्य सहसा हंसं जिघृक्षुमनसा तदा । शालितं शालभञ्ज्येव क्षणं निस्पन्दमन्दया ॥ ३ ॥
तस्यास्तदा तदाकूतं जानन्नपि विहङ्गमः । न ययौ न च तस्थौ च न च धर्त्तुमदात् पुनः ॥ ४ ॥
पतत्रिमात्रमप्येनं स्ववशं कर्त्तुमक्षमा । सहस्ततालमालीभिः सा तत्कालमहस्यत ॥ ५ ॥
किमेष करतालीभिर्दूरमुत्त्रास्यते खगः ? । मह्यं द्रुह्यति सा नूनं यात्र मामनुगच्छति ॥ ६ ॥
इति प्रदत्तशापापि हस्यमाना सखीजनैः । बाला धृतावहेलं सा च्छायेव खगमन्वगात् ॥ ७ ॥ ( युग्मम् )
सुचिरं सञ्चरंस्तस्या राजहंसः पुरःपुरः । बभौ तद्गतिभङ्गानामुपहासमिवाचरत् ॥ ८ ॥
धृतप्रायमिवात्मानं दर्शयन् स पदे पदे । दिधीर्षां वर्द्धयन् दूरं चकर्ष चपलेक्षणाम् ॥ ९ ॥
प्रस्वेदकणकीर्णाङ्गीं विलक्षामुपलक्ष्य च । तामुवाच स निःशङ्कं छायामात्रपरिच्छदाम् ॥ १० ॥
राजपुत्रि ! किमर्थोऽयं प्रयासस्ते मनस्विनि ! । बिभेषि न कथं बाले ! विलोक्य गहनं वनम् ? ॥ ११ ॥
वयस्या इव संभाव्य त्वामस्थानप्रचारिणीम् । पश्य हारीतहुङ्कारैर्वारयन्तीव वीरुधः ॥ १२ ॥

कथं व्योमचरा मुग्धे! गोचराः क्षितिचारिणाम्? । तारुण्यं हि प्रपन्नाऽसि मुञ्च शैशवचेष्टितम् ॥ १३ ॥
क्रीडाहंसो नलस्याहं पुण्यश्लोकस्य भूपतेः । न क्वचिद् राजपुत्राणां राजपुत्रि! भयं हि नः ॥ १४ ॥
यस्य युद्धेषु तिष्ठन्ति न मर्त्या न च राक्षसाः । कस्तस्य तृणमात्रेऽपि कर्त्तुं शक्तः पराभवम्? ॥ १५ ॥
तस्याहं जगतीभर्त्तुः प्रेष्यः प्रेक्षावतां प्रियः । दिग्देशान्तरवार्त्तानामाहर्त्ताऽस्मि विहङ्गमः ॥ १६ ॥
तस्य क्रीडावने सन्ति कोटिशो मम सन्निभाः । राजहंसाः सरस्तीरे नानाकार्योपयोगिनः ॥ १७ ॥
तं केचित् पक्षविक्षेपैर्वीजयन्ति रतान्तरे । कतिचित् पद्मिनीपत्रैः शय्यां कुर्वन्ति कोमलाम् ॥ १८ ॥
अन्ये गतिविशेषेषु शिक्षयन्ति तदङ्गनाः । परे दधति सानिध्यं तासां मणितकर्मणि ॥ १९ ॥
स्वच्छन्दं सममस्माभिस्तस्य जल्पन्ति योषितः । का त्रपा हि तिरश्चां नस्तिरश्चस्त्रपते च कः? ॥ २० ॥
दत्ता हि तुष्टया देव्या तस्मै शारदया वयम् । ब्राह्मीविमानहंसाः स्मः सर्वशास्त्रविशारदाः ॥ २१ ॥
न सामान्यजनं तावद् वयं प्रेक्षामहे किल । न च प्राकृतलोकानां तिष्ठामो दृष्टिगोचरे ॥ २२ ॥
त्वं तु वैदर्भि! सर्वासां कुमारीणां शिरोमणिः । भीमभूपालतनया न सामान्या मनस्विनि! ॥ २३ ॥
तेनाहं त्वद्वनं प्राप्तस्तव दृग्गोचरं गतः । भवत्परिचयस्यार्थे सख्यो दूरीकृता मया ॥ २४ ॥
न कुर्याद् विषमां गोष्ठीं समानां न च वर्जयेत् । कृता प्राणहरा पूर्वा त्यक्ताऽन्या प्राणनाशनी ॥ २५ ॥
तत्कल्याणि! प्रवीणाऽसि ब्रूहि किञ्चित् सुभाषितम् । स्वयं किमपि त्वं पृच्छ मम पार्श्वे कृशोदरि! ॥ २६ ॥

कुण्डिनपुरे आगतो हंसः दमयन्त्यग्रे नल-वर्णनञ्च ॥

नन्वि ! मामनुगच्छन्ती श्रमिताऽस्मि मया चिरम् । तद्व्यलीकापनोदाय प्रियं किं करवाणि ते ? ॥ २७ ॥
इति वाक्यामृतं तस्य निपीय नृपनन्दिनी । दधौ हर्षत्रपातङ्कमोहकिर्म्मीरितं मनः ॥ २८ ॥
अचिन्तयच्च पद्माक्षी दिष्ट्या सुदिनमद्य मे । अभ्यन्तरचरः प्राप्तो यदयं प्रियसेवकः ॥ २९ ॥
किन्तु वक्तुं न शक्ताऽस्मि पक्षिणं सुविचक्षणम् । कथं नु कथयिष्यामि स्वयमस्मै स्ववाञ्छितम् ? ॥ ३० ॥
कुतोऽस्य मानुषी भाषा हंसस्याव्यक्तवादिनः ? । मा भूत् कश्चिदयं दैवाद् देवो वा दानवोऽथवा ॥ ३१ ॥
संभवत्यक्षरोच्चारः पक्षिणामपि वा क्वचित् । तथाहि किं न दृश्यन्ते सर्वत्र शुकसारिकाः ? ॥ ३२ ॥
जय त्वं निषधाधीश ! विश्वविस्मयकारकाः । अधिकाः परमन्त्रिभ्यो यस्य ते पक्षिणोऽपि हि ॥ ३३ ॥
किमर्थमयमागतो महात्मा मम काननम् ? । कच्चिन्नलनृपेणापि किमयं प्रेषितो भवेत् ? ॥ ३४ ॥
क्व वा मे मन्दभाग्याया स्तादृशं भाग्यमद्भुतम् ? । स्वस्मिन् ममानुरागं च कथं वेत्ति स पार्थिवः ? ॥ ३५ ॥
तदद्य तस्य राजर्षेर्निषधस्य महात्मनः । अयं दीर्घायुरायातः क्रीडाहंसो वने मम ॥ ३६ ॥
अनेनैव हि तीर्थेन प्रविश्य नलकर्णयोः । तदन्तर्यदि तिष्ठामि किं न सिद्धं तदा मम ? ॥ ३७ ॥
मनस्येवं ततस्तावद् वदामीति विचिन्त्य सा । जगाद सादरं बाला विशालाक्षी शुचिस्मिता ॥ ३८ ॥
खगराज ! सभायोग्य ! सौम्य ! सर्वाङ्गसुन्दर ! । राजीविनीवनोत्तंस ! राजहंस ! चिरं जय ॥ ३९ ॥
समीपमुपपन्नस्त्वं मया यदपवाहितः । अनयाचरणं तन्मे कुमार्याः क्षम्यतां खग ! ॥ ४० ॥



यत् त्वं दृष्टिपथं प्राप्तस्तत् कृतं प्रथमं प्रियम्। भूयस्त्वत्तः प्रियं प्राप्तुं किन्तु वाञ्छा तथैव मे ॥ ४१ ॥
तन्मे दिष्ट्या कथयतु भवान् वृत्तमामूलचूलं कोऽयं राजा नलनृप इति प्रौढचापप्रतापः ।
यस्यैतानि त्रिभुवनमनःकाननानन्दकन्दे क्षीरासारव्यतिकरभरभ्रा(ञ्जि)जि विष्वक् यशांसि ॥ ४२ ॥
इन्दीवराक्षि ! भृणु तं क्षितिपालसिंहं ते यस्य विश्वविजयप्रगुणा गुणौघाः ।
ये रञ्जयन्ति हृदयं च निशाकरं च ये विद्विषां च विदुषां च हृताभिषङ्गाः ॥ ४३ ॥
वक्तुं पुरस्तव परं यदि वेदवाणी त्वत्कौतुकाय मम केवलमत्र यत्नः ।
तत् क्षम्यतामिति चकोरदृशं ब्रुवाणः स्पष्टीचकार चरितं सकलं नलस्य ॥ ४४ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने प्रथमे उत्पत्तिस्कन्धे द्वादशः सर्गः ॥ १२ ॥

## प्रथमे उत्पत्तिस्कन्धे त्रयोदशः सर्गः ।

हंसविषये दमयन्त्या विभ्रमम्, नलस्य परिचयार्थं प्रार्थितो हंसश्च ॥

आर्यावर्त्ते जनपदे जाह्नवीजलमालिनि । नगर्यां निषधाऽऽख्यायां वीरसेनः प्रजापतिः ॥ १ ॥
तस्य रूपवती नाम्ना भार्या चारित्रशालिनी। बभार महिषी गर्भं प्राग् ज्योतिषपतेः स्वसा ॥ २ ॥
अनिशं ददती दानं प्रतीकारं रुजामिव। विवशेव न वेदासौ पात्रापात्रं क्षणाक्षणम् ॥ ३ ॥

एवमुत्कृष्टचेष्टाभिः सूचयन्ती महोदयम् । असूत समये पुत्रं प्राची दिनकरं यथा ॥ ४ ॥
प्रासोभयनगीयोगे मेषपूर्वांशगे रवौ । उच्चपञ्चग्रही होरा तदाऽऽसीत् तस्य जन्मनि ॥ ५ ॥
संपत्तिरिव दानेन ज्ञानेनेव सुशीलता । वैदग्धी विनयेनेव देवी पुत्रेण सा बभौ ॥ ६ ॥
न लास्यत्येष निर्लोभः सद्भ्यो धर्मधनानि यत् । तेनास्य नल इत्याख्यां विदधुर्बन्धवो बुधाः ॥ ७ ॥
मुखेभ्यः सूरिसार्थानां सर्वशास्त्राणि सोऽग्रहीत् । वृक्षाणामिव पुष्पेभ्यः सौरभ्याणि समीरणः ॥ ८ ॥
षडङ्गान् चतुरो वेदान् षट् तर्कान् षड्रसक्रमम् । षड्भाषानिर्णयं वेत्ति नलः षण्मुखविक्रमः ॥ ९ ॥
किमत्र बहुना तावत् यत् किञ्चिदिह वर्त्तते । तत् सर्वमपि जानाति लोकोत्तरमतिर्नलः ॥ १० ॥
किं ब्रूमस्तस्य रम्भोरु! सौभाग्यगुणवर्णनम्? । स कोऽपि मूर्त्तिमान् पृथ्व्यां गुणराशिरिवोत्थितः ॥ ११ ॥
कदाचित् सादिभिः सार्कं स वाह्यालिभुवं गतः । अश्वेनापहृतः प्रापदहोरात्रान्महद् वनम् ॥ १२ ॥
तत्र क्वापि सरस्तीरे परिश्रान्ततुरङ्गमात् । अवरुह्य कृतस्नानः शुश्राव करुणध्वनिम् ॥ १३ ॥
किमेतदिति विज्ञातुमार्त्तत्राणपरायणः । गच्छंस्तदनुसारेण काञ्चित् स प्राप शिंशपाम् ॥ १४ ॥
तस्याः स्तम्भेन संबद्धं शून्यमष्टाङ्गकीलितम् । मुनिं ददर्श शिष्यं च रुदन्तं कन्यकान्वितम् ॥ १५ ॥
पृष्टस्तेनाथ शिष्योऽसौ साक्रन्दमिदमब्रवीत् । कुमार! महती सेयं वार्त्ता तावन्निशम्यताम् ॥ १६ ॥
अयं पूर्वधरः श्रीमान् श्रीधरो गणभृद्वरः । संमेतशिखरं द्रष्टुं प्रस्थितस्तीर्थयात्रया ॥ १७ ॥

श्रान्तश्च भगवानस्मिन् विशश्राम सरस्तटे। वैयावृत्यं च कुर्वाणो बभूवाहं प्रभोः क्षणम् ॥ १८ ॥
अत्रान्तरे दुराचारः कश्चिद् विद्याधराधमः। राजपुत्रीमिमां हृत्वा चचाल गगनाध्वना ॥ १९ ॥
तमन्यः संमुखायातः कन्यार्थी व्योम्नि रुद्धवान्। द्वन्द्वयुद्धं तयोरासीत् खड्गाखड्गि भुजाभुजि ॥ २० ॥
तत्र क्षणे कुमारी च स्वं मुमोच विमानतः। पपात चलकल्लोलपल्वले लोललोचना ॥ २१ ॥
उल्लङ्घ्य च सरः शीघ्रं विदग्धा नृपनन्दिनी। भगवन्! रक्ष रक्षेति ब्रुवाणा प्रभुमभ्यगात् ॥ २२ ॥
जालन्धराधिराजस्य सुताऽहं कनकावली। विद्याधरभयत्रस्ता प्राप्ताऽस्मि शरणं तव ॥ २३ ॥
इति भीतां प्रजल्पन्तीमिमामाश्वासयन् मुनिः। जाङ्गुलीविद्यया विद्वान् चक्रे सर्वाङ्गरक्षितम् ॥ २४ ॥
विद्याधरोऽपि पापात्मा प्रतिमल्लं विजित्य तम्। प्रहारजर्जरः प्राप गृहीतुं सुमुखीमिमाम् ॥ २५ ॥
ततो विद्याप्रभावेण करालव्यालमालिनीम्। निधिलक्ष्मीमिवापुण्यः स्प्रष्टुमेतां न शक्नुवान् ॥ २६ ॥
मुनिशक्तिमिमां ज्ञात्वा सोऽपि कोपारुणेक्षणः। कीलयित्वा मुनिं पापी निर्ययौ व्रणजर्जरः ॥ २७ ॥
सेहे च तत् प्रभुः सर्वं कुर्वाणः कर्मनिर्जराम्। आत्मरक्षां न कुर्वन्ति सत्त्ववन्तो मुमुक्षवः ॥ २८ ॥
अस्ति चास्य प्रतीकारः पुण्डरीकाचले परं। मायानिर्मूलनी नाम महावीर्या महौषधिः ॥ २९ ॥
द्वात्रिंशल्लक्षणः कश्चिद् राजपुत्रो युवा यदि। समानयति तच्छाखां वेगादसमसाहसः ॥ ३० ॥ (युग्मम्)
न हि तां सहसा कोऽपि नरः सत्त्वविवर्जितः। सिंहव्याघ्रवृकव्याप्तां नेतुं दिव्यौषधिं क्षमः ॥ ३१ ॥

न च मा प्रहरादूर्ध्वं संग्रामाऽपि फलप्रदा । यतः कीलनविद्येयं मध्याह्ने प्राणहारिणी ॥ ३२ ॥
तदंगदधुनाऽस्माकं सान्निध्यं कः करिष्यति ?। परार्थेन यतः पृथ्व्यां कोऽपि क्लेशसहः पुमान् ॥ ३३ ॥
इदं संप्रति संप्राप्तं त्रयाणां मरणं ध्रुवम् । अयमित्थं प्रभुस्तावत् मृत्युमाप्स्यति निश्चितम् ॥ ३४ ॥
आचार्ये च विपन्नेऽस्मिन् ममानशनमेव हि । अग्रे च गुरुणा साकं मृत्युरङ्गीकृतो मया ॥ ३५ ॥
हा हन्त ! राजपुत्रीयं रक्षिताऽपि न रक्षिता । विमुञ्चति यतः प्राणान् गुरुमृत्यौ मनस्विनी ॥ ३६ ॥
इति तस्य वचः श्रुत्वा शोकार्त्तस्य तपस्विनः । नलस्तं निःश्वसन्नूचे परदुःखेन दुःखितः ॥ ३७ ॥
तपस्विन् ! राजपुत्रोऽहं लक्षणानि च तानि मे । न चास्ति निविडक्रुद्धात् कृतान्तादपि मे भयम् ॥ ३८ ॥
किन्तु वाहनमेतन्मे समर्थमपि सर्वथा । प्रहरात् पुण्डरीकाद्रौ यातायातक्षमं न हि ॥ ३९ ॥
अयं च भगवान् क्षीणो न कालहरणं क्षमः । असमर्थं परार्थेषु धिग् मां मिथ्याभिमानिनम् ॥ ४० ॥
ततः प्रमुदितः प्रोचे मुनिशिष्यो नृपात्मजम् । हन्त ! सिद्धानि कार्याणि कुमार ! त्वयि संमुखे ॥ ४१ ॥
प्रसादात् पूज्यपादानां यत्समास्ति सुशिक्षितः । चलातिचलयोर्भेदो मन्त्रोऽश्वहृदयाभिधः ॥ ४२ ॥
मन्त्रं पठितमिदं मे गृहाण पुरुषर्षभ ! । यत्प्रभावेण जायन्ते सपक्षा इव वाजिनः ॥ ४३ ॥
न किञ्चिद् दूरमासन्नं शीतमुष्णं क्षुधं तृषम् । न च भूमिमभूमिं वा जानन्ति ययवो यतः ॥ ४४ ॥
तस्मात्त्वमिमं वाहमारुह्य व्रजतस्तव । द्वियोजनशतान्तेऽपि पुण्डरीकाचलः पुरः ॥ ४५ ॥

त्रिपर्णी तिक्तगन्धा च श्वेतपुष्पा सदाफला । तस्य सर्वोच्चये शृङ्गे हिंस्रमिश्राऽस्ति सौषधिः ॥ ४६ ॥
एवमुक्त्वा समाचख्यौ तं मन्त्रं नृपसूनवे । तेनाधिवासितोऽश्वोऽसौ यामार्द्धेन ययौ गिरिम् ॥ ४७ ॥
तत्र वित्रास्य शार्दूलान् तामादाय महौषधिम् । कालेन तावता भूयः स प्राप मुनिसन्निधौ ॥ ४८ ॥
तस्याः स्पर्शनमात्रेण मुनिरुत्कीलितोऽभवत् । स प्रत्यागतचैतन्यो नलमित्यभ्यनन्दयत् ॥ ४९ ॥

श्रीवशीकरणचूर्णमुष्टयो धर्मसृष्टिपरमाणुवृष्टयः ।
त्वां पुनन्तु जगदेकपावना वीतरागपदपद्मपांसवः ॥ ५० ॥
स वासवार्च्यांह्रिविलासहंसः सहंसभाः शम्भुरधीसमासः ।
समाः सहस्राणि मुदे सदा सः सदासनः स्वात्मविलासवासः ॥ ५१ ॥
कुमार ! निर्वर्त्तितसर्वसारपरोपकारप्रकरप्रकार ! ।
जानामि कामं भवता समानो मानोन्नतो नात्र भविष्यतीति ॥ ५२ ॥
तत् सर्वथा नः प्रियमाचरिष्यन् संमोहनादीनि महामहांसि ।
हिंसाविवर्जं विजयप्रदानि त्वं जृम्भकास्त्राणि गृहाण वीर ! ॥ ५३ ॥
बहुविधमिति जल्पन् जृम्भकास्त्राणि तस्मै शमजलधिरदत्त श्रीधराचार्यवर्यः ।
तदनु समयमात्रप्राप्तसैन्यं तदानीं व्यधित हृतमनस्कं धर्मकर्मोपदेशैः ॥ ५४ ॥

दमयन्ती-
समीपे कृतं
पक्षीराजेन
नलनृपस्य
वर्णनम् ॥

आपृच्छ्य तं नृपकुमारमथ प्रयत्नात् सम्मेतवर्त्मनि ययौ स मुनिः सशिष्यः ।
तस्याज्ञयैव च नलेन गजाधिरूढा प्रस्थापिता पितृगृहं कनकावली सा ॥ ५५ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने प्रथमे उत्पत्तिस्कन्धे त्रयोदशः सर्गः ॥ १३ ॥

## प्रथमे उत्पत्तिस्कन्धे चतुर्दशः सर्गः ।

पुरं प्राप्तस्य तस्याथ लब्धमन्त्रास्त्रतेजसः । कुर्वाणस्य पितुः सेवां पक्षो यावद् व्यतीतवान् ॥ १ ॥
जालन्धराधिराजेन प्रहितश्चन्द्रबाहुना । श्रीवीरसेनमानम्य दूतस्तावद् व्यजिज्ञपत् ॥ २ ॥
राजेन्द्र ! तव पुत्राय नलनाम्ने मनस्विनी । चन्द्रबाहुक्षितीशेन प्रदत्ता कनकावली ॥ ३ ॥
प्राणत्राणात् क्रयक्रीता पुराऽपि नलरागिणी । संप्राप्ता नगरद्वारे तदियं प्रतिगृह्यताम् ॥ ४ ॥
अवधार्य तदुक्तं तत् तस्मिन्नेव दिने नृपः । वरवध्वोर्विवाहं स सप्रमोदमकारयत् ॥ ५ ॥
कालान्तरे च संभाव्य नलं राज्यधुरन्धरम् । स वृद्धसचिवं राजा सालंकायनमब्रवीत् ॥ ६ ॥
दशलक्षाणि वर्षाणां प्रजाकृत्यानि कुर्वतः । अमात्य ! मम यातानि स्वार्थश्चिन्त्योऽधुना मया ॥ ७ ॥
युवा धनुर्धरो वीरः समर्थः सांप्रतं नलः । तत् प्रार्थ्यतां कुमारोऽयं राज्यभारपरिग्रहे ॥ ८ ॥

तथेति वचनं तस्य प्रतिश्रुत्य महीपतेः। स गत्वा नलमित्यूचे गिरा गम्भीरधीरया ॥ ९ ॥
परोपकारवीरस्य गम्भीरस्य यशस्विनः। कुमार! जगदाधार! पितृभक्तिः कथं न ते? ॥१०॥
पुत्रवानपि वृद्धोऽपि यदयं संयमोत्सुकः। वहत्यद्यापि भूभारं महाराजः पिता तव ॥११॥
तदेहि क्रियतां वाक्यमङ्गीकुरु धुरं भुवः। त्वया पुत्रेण तातस्ते पिपर्त्तु स्वमनोरथान् ॥१२॥
इत्युक्त्वा शीघ्रमुत्थाप्य नलं कमललोचनम्। आनिनाय नतग्रीवं पितुरग्रे त्रपाकुलम् ॥१३॥
कथं त्यजति मां तात! किं विराद्धं मया गुरोः?। राज्यभारक्षमो नाहं देव एवात्र युज्यते ॥१४॥
इत्यादि बहु जल्पन्तं निःस्पृहं पुरुषर्षभम्। सिंहासने समारोप्य मन्त्री छत्रमधारयत् ॥१५॥ युग्मम्।
चकार तिलकं तस्य वीरसेननृपः स्वयम्। अन्ये गृहीतभृङ्गाराः सिषिचुस्तीर्थवारिभिः ॥१६॥
प्रणेमुरभितः सर्वे नृपसामन्तमन्त्रिणः। अश्रूयत नभोवाणी व्यक्तवर्णा च तद् यथा ॥१७॥
निःशेषोल्लङ्घिता शालिसमुज्ज्वलतरा भृशम्। तव कीर्त्तिः प्रतापश्च नित्यं राजेन्द्र! वर्त्ततام् ॥१८॥
ततः सहाश्वहेषाभिः सह वारणबृंहितैः। दिव्यदुन्दुभिनिर्घोषैर्विष्वग् बधिरितं नभः ॥१९॥
दीनेभ्यो ववृते दानं मुक्ताः कारानिवासिनः। तुष्टुवुर्बन्दिनो हृष्टा ननृतुश्च कुशीलवाः ॥२०॥
वेणुवीणामृदङ्गानां झल्लरीभेरिनिर्भरः। निनादः सप्रतिध्वानो विजजृम्भे समन्ततः ॥२१॥
अहोरात्रत्रयादूर्ध्वं महादानपुरःसरम्। प्रतस्थे वनवासाय स तु सान्तःपुरो नृपः ॥२२॥

दमयन्तीसमीपे कृतं पक्षीराजेन नलनृपस्य वर्णनम् ॥

गृहनामयमायुष्मन् ! निजदासः क्रमागतः । श्रुतशीलं नलायेति स सालंकायनो ददौ ॥२३॥

स्वयं रुद्रनरेन्द्रेण रुद्रामात्यः समं ययौ । नलस्त्वनुययौ सर्वान् पादचारी चिरं रुदन् ॥२४॥

तदेतदग्रमं वत्स ! चुम्ब्यसे परिरभ्यसे । ममैव शपथास्तिष्ठ नागन्तव्यमतः परम् ॥२५॥

इति श्रीवीरसेनेन स्वयमेव निवर्त्तितः । समागत्य गृहं तस्थौ स मासं विलपन्निति ॥२६॥ युग्मम् ।

तत् तातदत्तताम्बूलं तत् तातेन महाशनम् । स्मरन् वज्रसमान ! त्वं न किं हृदय ! दीर्यसे ? ॥२७॥

ततश्च श्रुतशीलेन मन्त्रिणा प्रतिबोधितः । शिथिलीकृतशोकः सन् राजकार्याणि दृष्टवान् ॥२८॥

कृत्वा दिग्विजयं वीरः सर्वं निर्जित्य राजकम् । चकार निषधोद्देशान् जयस्तम्भविभूषणान् ॥२९॥

नानाधर्मपरायणः प्रतिदिनं नानाविधैरुत्सवैर्नानोपायनपाणिभिः प्रमुदितैराराध्यमानो नृपैः ।

नानागानगुनामकमल्लनिव्यापारपारङ्गतः श्रीमान् संप्रति राजपुत्रि ! कुरुते राजा स राज्यं नलः ॥३०॥

क्षारो नागनिधिः क्षयी शशधरो भिक्षाचरः शङ्करः शक्रो दुश्च्यवनः स्मरश्च वितनुः श्यामश्च दामोदरः ।

नागेन्द्रो विषभृद् निधिश्च जरठः काष्ठं च कल्पद्रुमो निर्दोषः पुनरेक एव जयति श्रीवीरसेनात्मजः ॥३१॥

निघ्नन्त्येव कलिङ्गवङ्गमगधश्रीगौडचौडावनीकर्णाटद्रविडप्रभुप्रभृतयो भूमीभृतः कोटिशः ।

गीर्वाणाश्च फणाभृतश्च शतशः किं वा बहु ब्रूमहे ? रूपे भूतभवद्भविष्यति जने नान्यो नलस्पर्द्धया ॥३२॥

देवः कोपि न विश्ववीरविजयी राजेन्द्रचूडामणिर्दृष्टो येन नलः किमन्यदपरं साक्षात्कृतस्तेन हि ।

इन्दुर्जाड्यहरः सरस्तनुधरश्चिन्तामणिश्चेतनः पुंरूपा च सरस्वती शतमखो मानुष्यमुद्राङ्कितः ॥३३॥
उडुगणपरिमाणं केन शक्यं विधातुं ? नवजलधरधाराः को हि संख्यातुमीशः ? ।
क नु कणगणनं वा वारिधेर्वालुकानां ? क किल नलगुणानां प्राप्यते सुभ्रु ! पारः ॥३४॥
इत्यसौ तव विनोदहेतवे तच्चरित्रकणिका मयोदिता ।
कम्बुकण्ठि ! गमनोत्सुकोऽधुना किं प्रियं वद पुनः करोमि ते ? ॥३५॥
अथ नरपतिपुत्री विस्मिता वाचमूचे खग ! सुकृतिचरित्रं शृण्वतः कस्य तृप्तिः ? ।
यदि पुनरपि किञ्चित् कर्त्तुकामः प्रियं मे तदिह मम लिखित्वा नैषधं दर्शयेति ॥३६॥
खगनखलिखितस्य क्ष्मापतेः साऽपि रूपं निरुपमरमणीयं मन्मथार्त्ता निरूप्य ।
श्रमजलकलिताङ्गी कम्पमाना वरोरुः स्वमथ झटिति हारं तस्य कण्ठे चकार ॥३७॥
अथ जय जय भद्रं जीव जीवेति जल्पन् ननु किमिदमिति द्राक् तामपृच्छद् विहङ्गः ? ।
सजलनयनपक्ष्मासन्नकण्ठी च साऽपि स्मरपरवशचित्ता मुक्तलज्जं जजल्प ॥३८॥
तन्मुञ्च मोहमिह हंस ! गृहाण हारं यस्यैष तस्य भवताऽपि समर्प्पणीयः ।
कोऽयं कृतस्य करणेऽपि परिश्रमस्ते ? मा दिव्यदर्शन ! भजिष्यसि निष्फलत्वम् ॥३९॥
मा मे विचिन्तयसि कञ्चन बालभावं न त्वं भविष्यसि मृषा तदलं विचिन्त्य ।



दमयन्तीसमीपे कृतं पक्षीराजेन नलनृपस्य वर्णनम् ॥

एकैव वाङ्मनसयोः पदवी यतो मे नैतन्मम प्रचलति प्रलयेऽपि वाक्यम् ॥४०॥
किं प्राञ्यसे चिरतरं चतुरोऽसि यस्मात् ? किं शिष्यसे च समये भणितुं बुधोऽसि ? ।
त्यजः मुमिष्यतु तथापि ममायमर्थो देहान्तरेऽपि मम शक्तिरिमं विधातुम् ॥४१॥
जानामि नैषधमहं नृपतिं पुराऽपि देहं वहामि सकलं तदिदं तदर्थे ।
कर्तुं मया परिचयं सुचिर त्वमुक्तस्तुभ्यं नमोऽस्तु कुरु कार्यमिदं मदीयम् ॥४२॥
इति स तां मुदतीं सुदतीं जगौ यदि तवैष तनूदरि ! निश्चयः ।
शृणु ततस्त्वमपि प्रियवादिनि ! त्वयि नलप्रहितोऽहमुपागतः ॥४३॥
मृतवतस्तव विस्मृतिजं भयं विरह एव दुनोति च जीवतः ।
मरणजीवितयोरधुनान्तरे तव कृते तरलाक्षि ! भवत्प्रियः ॥४४॥
विविधमागधपान्थजनश्रुतां स सततं भवतीमनुचिन्तयन् ।
अपरराजसुताजनसङ्गमप्रभवसौख्यशतैरपि वञ्चितः ॥४५॥
कुवलयं वलयं च विलुम्पति स्वभवनं च वनं च विमुञ्चति ।
अकरुणं करुणं प्रतिभाषते स विभवेऽपि भवेऽपि गतस्पृहः ॥४६॥
मनसि दुःस्थितता कृशता तनौ भ्रमति चित्तमथ स्खलितं गिराम् ।

इन्दुर्जाड्यहरः सरस्तनुधरश्चिन्तामणिश्चेतनः पुंरूपा च सरस्वती शतमखो मानुष्यमुद्राङ्कितः ॥३३॥
उडुगणपरिमाणं केन शक्यं विधातुं ? नवजलधरधाराः को हि संख्यातुमीशः ?।
क्व नु कणगणनं वा वारिधेर्वालुकानां ? क्व किल नलगुणानां प्राप्यते सुभ्रु ! पारः ॥३४॥
इत्यसौ तव विनोदहेतवे तच्चरित्रकणिका मयोदिता ।
कम्बुकण्ठि ! गमनोत्सुकोऽधुना किं प्रियं वद पुनः करोमि ते ? ॥३५॥
अथ नरपतिपुत्री विस्मिता वाचमूचे खग ! सुकृतिचरित्रं शृण्वतः कस्य तृप्तिः ?।
यदि पुनरपि किञ्चित् कर्त्तुकामः प्रियं मे तदिह मम लिखित्वा नैषधं दर्शयेति ॥३६॥
खगनखलिखितस्य क्ष्मापतेः साऽपि रूपं निरुपमरमणीयं मन्मथार्त्ता निरूप्य ।
श्रमजलकलिताङ्गी कम्पमाना वरोरुः स्वमथ झटिति हारं तस्य कण्ठे चकार ॥३७॥
अथ जय जय भद्रं जीव जीवेति जल्पन् ननु किमिदमिति द्राक् तामपृच्छद् विहङ्गः ?।
सजलनयनपक्ष्मासन्नकण्ठी च साऽपि स्मरपरवशचित्ता मुक्तलज्जं जजल्प ॥३८॥
तन्मुञ्च मोहमिह हंस ! गृहाण हारं यस्यैष तस्य भवताऽपि समर्प्पणीयः ।
कोऽयं कृतस्य करणेऽपि परिश्रमस्ते ? मा दिव्यदर्शन ! भजिष्यसि निष्फलत्वम् ॥३९॥
मा मे विचिन्तयसि कञ्चन बालभावं न त्वं भविष्यसि मृषा तदलं विचिन्त्य ।

न्याधृनपक्षानिरूपेत्य नलं पतङ्गः प्रोवाच विह्वलमुपायनदत्तहारः ॥५४॥

नं देव ! कुतमेना पूर्वविदिनो भैम्या स्वयं स्वीकृतः मत्याय प्रहिता तया तव कृते स्वच्छाच्छगुच्छावली ।
मिदं कार्यमिदं तवेति शनशः पृच्छन् विहङ्गाननात् प्रत्युच्चार्य विचिन्त्य च प्रतिकलं न प्राप तृप्तिं नलः ॥५५॥

इतिश्रीमाणिक्यदेवसूरिकृते नलायने प्रथमे उत्पत्तिस्कन्धे चतुर्दशः सर्गः ॥ १४ ॥

## प्रथमे उत्पत्तिस्कन्धे पञ्चदशः सर्गः ।

ततस्तं नैषधः स्वच्छं विहङ्गममसमाहृतम् । बभार हृदये हारं व्याहारं च दमस्वसुः ॥ १ ॥
उत्तीर्य कार्यगाम्भीर्यं प्रातः स्वीकारसंपदा । विरहाब्धेः परं पारं पश्यन्नासीत् समुत्सुकः ॥ २ ॥
विहङ्गमसमानीतैः स्निग्धसंज्वलनैरिव । वैदर्भीवचनैस्तस्य दिदीपे विरहानलः ॥ ३ ॥
ज्ञात्वाऽनुरागिणीं भैमीं तत्सङ्गमसमुत्सुकम् । तं समाश्वासयन् तस्थौ किञ्चित्कालं विहङ्गमः ॥ ४ ॥
अन्यदा स निशाशेषे तमनापृच्छ्य भूपतिम् । प्रतस्थे तीर्थयात्रार्थं स्वयूथसहितः खगः ॥ ५ ॥
आत्मकृत्यं विनिह्नोतुं दिदिगक्षिस्मयाय सः । यत्र तत्र निगूढात्मा भूरि बभ्राम भूतले ॥ ६ ॥
ततो भैमीवियोगेन विहङ्गविरहेण च । नृपतिः सान्द्रसन्तापः प्राप पूर्वाधिकां दशाम् ॥ ७ ॥

इति भवद्विरहादसमञ्जसं किमपि तस्य वरोरु ! विजृम्भते ॥४७॥
मतिमति ! दमयन्ति ! दन्तिदन्तद्युतिमतमोमयमुत्तमं तमन्तः ।
मदय दयितमेनमत्यमायं मुदितमुदात्तमुदन्तदत्तमोदम् ॥४८॥
लोलानिलेनाननुनूननुन्ना नानालिलीलोल्लललं लुलाना ।
नूनेन नूनं नलिनाननेन नलेन लीना ललने ! ललालम् ॥४९॥
तत् साम्प्रतं तव विभर्त्तु स सङ्गमाशां द्राक् साधयामि युवयोर्युवकृत्यमेतत् ।
इत्यभ्युदीर्य रुदतीमनुगृह्य भैमीं रेमे विहायसि विहाय वनं विहायः ॥५०॥
हा कुत्र तिष्ठसि ? विशारद ! शारदाभ्रशुभ्रप्रभ ! त्वमिह वल्लभ ! शारदायाः ।
हा हंस हंस ! किमहं सहसा विमुक्ता मुक्तात्मनेव भवता भवता विदूरम् ॥५१॥
एवंविधानि विविधानि विपश्चयन्तीमेकाकिनीं विपिनसीमनि सान्द्रमोहाम् ।
तन्मार्गदर्शनपराः परमर्त्तचित्ताः सख्यः समेत्य परितः परिवव्रुरेनाम् ॥५२॥
किं वेपसे सखि ! कुतोऽपि भयं कथं ते ? कुत्राऽऽगताऽसि पदवी तव विस्मृता किम् ? ।
मुग्धे ! विमुञ्च रुदितं गृहमेहि यामेत्युक्तेति सा द्रुतमनीयत वेश्म ताभिः ॥५३॥
आमन्त्रयन्निव समस्तदिगीशवृन्दान् द्राग् वीजयन्निव दिशस्तरुणार्कतप्ताः ।

व्याधूतपक्षतिरुपेत्य नलं पतङ्गः प्रोवाच विह्वलमुपायनदत्तहारः ॥५४॥

त्वं देव ! कृतमेन पूर्वविदितो भैम्या स्वयं स्वीकृतः गत्वाय प्रहिता तया तव कृते स्वच्छाच्छगुच्छावली ।
सिद्धं कार्यमिदं करोति शनयः पृच्छन् विहङ्गाननान् प्रत्युत्तार्यं विचिन्त्य च प्रतिकलं न प्राप तृप्तिं नलः ॥५५॥

इतिश्रीमाणिक्यदेवसूरिकृते नलायने प्रथमे उत्पत्तिस्कन्धे चतुर्दशः सर्गः ॥ १४ ॥

## प्रथमे उत्पत्तिस्कन्धे पञ्चदशः सर्गः ।

ततस्तं नैषधः स्वच्छं विहङ्गममसमाहृतम् । बभार हृदये हारं व्याहारं च दमस्वसुः ॥ १ ॥
उत्तीर्य कार्यगाम्भीर्यं प्रातः स्वीकारसंपदा । विरहाब्धेः परं पारं पश्यन्नासीत् समुत्सुकः ॥ २ ॥
विहङ्गमसमानीतैः स्निग्धगंज्वलनैरिव । वैदर्भीवचनैस्तस्य दिदीपे विरहानलः ॥ ३ ॥
नानाऽनुरागिणीं भैमीं तत्सङ्गमसमुत्सुकम् । तं समाश्वासयन् तस्थौ किञ्चित्कालं विहङ्गमः ॥ ४ ॥
अन्यदा स निशाशेषे नमनापृच्छ्य भूपतिम् । प्रतस्थे तीर्थयात्रार्थं स्वयूथमहितः खगः ॥ ५ ॥
आत्मकृत्यं विनिक्षेप्तुं द्विपिपद्रिसमयाय सः । यत्र तत्र निगूढात्मा भूरि बभ्राम भूतले ॥ ६ ॥
ततो भैमीवियोगेन विहङ्गविरहेण च । नृपतिः सान्द्रसन्तापः प्राप पूर्वाधिकां दशाम् ॥ ७ ॥

वयस्यथ गते तस्मिन् वयस्याभिनवे नृपः । वयस्यसहितस्तस्थावयस्ययमिवाहितः ॥ ८ ॥
स मज्जन् विरहाम्भोधौ राजा निरवलम्बनः । हंसमेव सरंश्चित्ते प्रललाप प्रियंवदः ॥ ९ ॥
शत्रुर्दहति संयोगे वियोगे मित्रमप्यहो ! । उभयोर्दुःखदायित्वे को भेदः शत्रुमित्रयोः ? ॥ १० ॥
इत्यादि विविधं जल्पन् निषधानामधीश्वरः । पुरप्रवेशविद्वेषी निनाय दिवसान् वने ॥ ११ ॥
दमयन्ती च तत्कालं मदनज्वरजर्जरा । न स्म किञ्चिद्विजानाति गृहीतापि गृहं ततः ॥ १२ ॥
सा तमेव दिवानक्तं दिवि दिक्षु विदिक्षु च । पश्यन्ती नलमेवैकं मेने नलमयं जगत् ॥ १३ ॥
निःश्रृङ्गारा निराहारा निर्विनोदा निरुद्यमा । जीर्णारण्यं जगन्मेने भैमी विरहविह्वला ॥ १४ ॥
अङ्गीचकार नाकल्पं न तल्पं प्रत्यपद्यत । मज्जनं वर्जयामास सज्जनं नाललाप च ॥ १५ ॥
विलोक्य रुदतीं बालां ततस्तद्दुःखदुःखिताः । भृशमाश्वासयामासुर्वयस्याः साश्रुलोचनाः ॥ १६ ॥
नलिन्यामिव मग्नायां तस्यां मोहमहार्णवे । वयस्यावृन्दमागत्य चक्रन्द कुररीगणः ॥ १७ ॥
उदकमुदकं वायुर्वायुर्बतासनमासनं भजत भजत च्छत्रं छत्रं च सिञ्चत सिञ्चत ।
इति सरभसं भीतभ्राम्यत्सखीमुखसंभवस्तदनु तुमुलो लोलः कोलाहलः सुमहानभूत् ॥ १८ ॥

इत्थमुत्थितशुचां मृगीदृशामीदृशं कलकलं निशम्य तम् ।
मन्दिरं दुहितुराययौ जवात् कातरः किमपि भीमभूपतिः ॥ १९ ॥

अपि तिरस्कृतमन्मथलक्षणां दुहितर चरणप्रणतामपि ।
स बुबुधे नृपतिर्विरहातुरां क्व चतुराः परचित्तविदो नहि ? ॥ २० ॥
उन्नमय्य सहसा शिरस्ततः तां सुतां प्रति पिताऽऽशिषं ददौ ।
त्वं वरं गुणमयं स्वयंवरे वासरैः कतिपयैरवाप्नुहि ॥ २१ ॥
अवदच्च वचः सुतावयस्याः ! भवतीभिः कृशतातिरस्क्रियार्थम् ।
अचिरेण विधीयतां स्वसख्या रुचिरामन्त्रविवाहमङ्गलायाः ॥ २२ ॥
तामित्यभिप्रायविदो नृपस्य व्याजोक्तिमाकर्ण्य भृशं सकर्णः ।
आनन्दमन्दाक्षसमुद्रमग्नं मनो दधौ निर्भरमालिवर्गः ॥ २३ ॥
एतत् किमप्यनवमं नवमङ्गलाङ्कं माणिक्यदेवमुनिना कृतिना कृतं यत् ।
तस्यार्यकर्णनलिनस्य नलायनस्य स्कन्धोऽयमुत्तमतमः प्रथमः समाप्तः ॥ २४ ॥

इतिश्री माणिक्यदेवसूरिकृते नलायने प्रथमे उत्पत्तिस्कन्धे पञ्चदशः सर्गः ॥ १५ ॥

इति प्रथम उत्पत्तिस्कन्धः समाप्तः ।



# द्वितीयः स्कन्धः ।

## द्वितीये दूत्यस्कन्धे प्रथमः सर्गः ।

क्रमेण कुण्डिनाधीशः स्वदूतान् विससर्ज सः । चतुर्दिगन्तविश्रान्तानाह्वातुं पृथिवीपतीन् ॥ १ ॥
ते गौडचौडकर्णाटलाटद्रविडचेदिषु । अङ्गवङ्गतिलङ्गेषु राजादेशात् प्रतस्थिरे ॥ २ ॥
प्रहितं तेषु कौबेर्यां वर्षीयांसं वचोहरम् । सखीमुखेन वैदर्भी देवदत्तमवीवदत् ॥ ३ ॥
सर्वोदीच्यनृपाह्वाने तात ! कार्यं तथा मनः । शीघ्रमागमनोत्कण्ठं नलोऽलं कुरुते यथा ॥ ४ ॥
इत्यशेषविशेषज्ञः सोऽपि प्रत्युत्तरं ददौ । विधाय स्वजनाश्लेषं ययौ प्रत्युत्तरं तथा ॥ ५ ॥
विदग्धानुचरः सौम्यो वाग्मी जवनवाहनः । नृपानामन्त्रयन् सर्वानार्यावर्त्तमवाप सः ॥ ६ ॥
दृष्टस्तेन वनाभोगे धनुर्योग्यापरायणः । अश्ववारः सरित्तीरे श्रुतशीलान्वितो नलः ॥ ७ ॥
राजराजेश्वरं वीरं नलं कमललोचनम् । विलोक्य स निजं मेने कृतार्थं नयनद्वयम् ॥ ८ ॥
रत्नोपायनपाणिस्तं प्रणम्य पृथिवीपतिम् । इति विज्ञपयामास ललाटघटिताञ्जलिः ॥ ९ ॥
विदर्भाधिपतिर्देवः श्रीमान् भीमनरेश्वरः । आमन्त्रयति देव ! त्वां स्वयंवरमहोत्सवे ॥ १० ॥

अध्यास्यतां ममागत्य तालहिन्तालशालिनः । दात्यूहव्यूहसञ्चारचारवो वरदास्तटाः ॥ ११ ॥
किमन्यद् वसुधाचन्द्र ! भीमभूपालभूस्तव । अङ्गीकरोति वेगेन सेनाकरपरिग्रहम् ॥ १२ ॥
तत् कुरुष्व महाराज ! चतुरङ्गचमूवृतः । दक्षिणाभिमुखीं यात्रां दक्ष ! दाक्षिण्यवारिधे ! ॥ १३ ॥
स तस्य तां समाकर्ण्य गर्भितार्थान्तरां गिरम् । विद्वान् विवेद वैदर्भ्याः पृथक् सन्दिष्टमात्मनि ॥ १४ ॥
तेनाथ चक्षुपा क्षिप्तः श्रुतशीलोऽवदद् वचः । विदर्भभूः श्रुताऽस्माभिः स्वभावतिलकाङ्किता ॥ १५ ॥
तां विदर्भभुवं रम्यां प्रपन्नस्य स्वयम्वरे । देवस्य सैनिकानां च प्रमोदो वर्द्धतां चिरात् ॥ १६ ॥
न कश्चन विलम्बो नः संप्राप्ता एव केवलम् । वैशाखी पूर्णिमाऽस्माकं तत्र नूनं भविष्यति ॥ १७ ॥
इत्युक्तवति मन्त्रीशे सहस्रतुरगान्विताम् । स्वर्णकोटिं ददौ तस्मै नृपतिः पारितोषिकम् ॥ १८ ॥
विसृष्टो बहुमानेन स्वयं संभाष्य भूभुजा । कुण्डिनं प्राप्य तत् सर्वं स नृपाय न्यवेदयत् ॥ १९ ॥
कान्तोदन्तसुधासारं वाञ्छन्तीं शफरीमिव । दमयन्तीमिदं प्रोचे तद्वयस्याननेन च ॥ २० ॥
औदीन्यान् कुर्वता सर्वान् भूभुजः कुण्डिनोत्सुकान् । नलं चाप्य मया लब्धा काचित् कनकशृङ्खला ॥२१॥
इत्युक्तिचतुरा सम्यक् संभाव्य नलसङ्गमम् । तस्मै दिदेश वैदर्भी पञ्चाङ्गं हेमभूषणम् ॥ २२ ॥
इतश्च निश्चयप्राप्तप्रेयसीदर्शनोत्सुकः । चचाल चतुरङ्गिण्या सेनया निषधाधिपः ॥ २३ ॥
शेषः सीदति कूर्मराट् विलिखति क्षोणीतलं मज्जति क्षुभ्यन्त्यम्बुधयः पतन्ति गिरयः क्रन्दन्ति दिग्दन्तिनः ।

लुप्तं व्योमतलं दिशः कवलिता रुद्धो रविः पांशुना चक्रे तस्य बलैश्चलद्भिरभितस्त्रैलोक्यमप्याकुलम् ॥२४॥

चूर्णीबभूवुरभितः पथि शैलसङ्घाः पङ्कत्वमापुरपरं सरितः समग्राः ।
सद्यस्तडागतुलनां ययुरूषराणि प्राकाश्यमाशु गहनान्यगमन् तदानीम् ॥ २५ ॥

इतिश्रीमाणिक्यदेवसूरिकृते नलायने द्वितीये दूत्यस्कन्धे प्रथमः सर्गः ॥ १ ॥

## द्वितीये दूत्यस्कन्धे द्वितीयः सर्गः ।

यियासुः कुण्डिनं यावत् स तस्थौ नर्मदातटे । तावत् पुरन्दरं द्रष्टुं हेमाद्रिं प्राप नारदः ॥ १ ॥
दूरादपि तमायान्तं ददर्श त्रिदशाधिपः । स्वामी हि सर्वतो दर्शी सहस्राक्षो विशेषतः ॥ २ ॥
स व्यक्तशान्तशृङ्गारहास्याद्भुतभयानकः । मुनिर्दिविषदां चक्रे हृदये रससङ्करम् ॥ ३ ॥
तमभ्यर्च्य सुराधीशः पुरस्तादासनस्थितम् । निषिद्धान्यजनालापः सप्रश्रयमभाषत ॥ ४ ॥
अद्य त्वद्दर्शनाद् बाढं तपस्विन् ! मुदितोऽस्म्यहम् । तथाहि नृत्यतीवेदं हृदयं तव सन्निधौ ॥ ५ ॥
ते देवास्तानि तीर्थानि स गुरुः स तथागमः । जायते येषु दृष्टेषु जन्मिनां मनसो धृतिः ॥ ६ ॥
तद् ब्रूहि भगवन् ! कस्मादिह प्राप्तो ममाधुना ? । सर्वत्राप्रतिबद्धोऽसि त्वं वायुरिव नारद ! ॥ ७ ॥

जानासि जगतां वृत्तं नित्यं कामचरः प्रभो ! । भूलोकविषयं छिन्धि ममैकं संशयं ततः ॥ ८ ॥
येन युद्धेषु सर्वेषु त्वं साक्षी तेन पृच्छयसे । किं कलिप्रिय ! मेदिन्यां रणप्रत्यूहकारणम् ? ॥ ९ ॥
किं न सन्ति नरेन्द्राणां कुमाराः केऽपि वंशजाः ? । वीर शून्याऽथवा जाता कथं वन्ध्या वसुन्धरा ? ॥१०॥
यदेतेऽद्यतने काले भूपालाः सुस्थिता इव । स्वर्गश्रियं न वाञ्छन्ति दुर्भगामिव कामिनीम् ॥ ११ ॥
प्राणांस्तृणाय मन्यन्ते युद्धबुद्धिजुषो भटाः । स्वर्गश्च स्वामिकार्यं च द्वौ लाभौ च रणाङ्गणे ॥ १२ ॥
त्यक्तचार्मणकायानां दिव्यं वपुरुपेयुषाम् । पूर्वं सुभटकोटीनां करोम्यातिथ्यमन्वहम् ॥ १३ ॥
महत्यमपि यत्ते मां नोपसर्पन्ति संप्रति । तेनात्मानमहं मन्ये रक्षितारमिव श्रियः ॥ १४ ॥
अधिकं भान्ति पुष्पाणि पीयमानानि षट्पदैः । विभज्य भुज्यमानानि धनान्यतिथिभिस्तथा ॥ १५ ॥
सा किं श्रीर्यत्र नो द्वारं दानकोलाहलाकुलम् ? । अपतत् पक्षिसङ्घातः कीदृशः फलितस्तरुः ? ॥ १६ ॥
यानि दानविहीनानां दिनान्यायान्ति यान्ति वा । अजातानां मृतानां वा तानि जानामि निश्चितम् ॥१७॥
इति श्रुत्वा श्रुताम्भोधेर्वाचं प्राचीनबर्हिषः । उवाच वचनं प्रेमव्याकुलः कलहप्रियः ॥ १८ ॥
साधु साधु सुराधीश ! प्रस्तुतं प्राज्ञ ! पृच्छसि । दिष्ट्या धर्मानुबद्धेयं वासना तव वासव ! ॥ १९ ॥
इदं च परमैश्वर्यं विनयश्चायमीदृशः । सुधियां द्वयमप्येतत् पुरन्दर ! दुरुत्तरम् ॥ २० ॥
स्थाने यदर्थिनां त्वमभावेन विषीदसि । यत् सत्यं कृतकृत्यस्य न्यूनताऽपि तवेयती ॥ २१ ॥

लुप्तं व्योमतलं दिशः कवलिता रुद्धो रविः पांशुना चक्रे तस्य बलैश्चलद्भिरभितस्त्रैलोक्यमप्याकुलम् ॥२४॥
चूर्णीबभूवुरभितः पथि शैलसङ्घाः पङ्कत्वमापुरपरं सरितः समग्राः ।
सद्यस्तडागतुलनां ययुरूषराणि प्राकाश्यमाशु गहनान्यगमन् तदानीम् ॥ २५ ॥

इतिश्रीमाणिक्यदेवसूरिकृते नलायने द्वितीये दूत्यस्कन्धे प्रथमः सर्गः ॥ १ ॥

## द्वितीये दूत्यस्कन्धे द्वितीयः सर्गः ।

यियासुः कुण्डिनं यावत् स तस्थौ नर्मदातटे । तावत् पुरन्दरं द्रष्टुं हेमाद्रिं प्राप नारदः ॥ १ ॥
दूरादपि तमायान्तं ददर्श त्रिदशाधिपः । स्वामी हि सर्वतो दर्शी सहस्राक्षो विशेषतः ॥ २ ॥
स व्यक्तशान्तशृङ्गारहास्याद्भुतभयानकः । मुनिर्दिविषदां चक्रे हृदये रससङ्करम् ॥ ३ ॥
तमभ्यर्च्य सुराधीशः पुरस्तादासनस्थितम् । निषिद्धान्यजनालापः सप्रश्रयमभाषत ॥ ४ ॥
अद्य त्वद्दर्शनाद् बाढं तपस्विन् ! मुदितोऽस्म्यहम् । तथाहि नृत्यतीवेदं हृदयं तव सन्निधौ ॥ ५ ॥
ते देवास्तानि तीर्थानि स गुरुः स तथागमः । जायते येषु दृष्टेषु जन्मिनां मनसो धृतिः ॥ ६ ॥
तद् ब्रूहि भगवन् ! कस्मादिह प्राप्तो ममाधुना ? । सर्वत्राप्रतिबद्धोऽसि त्वं वायुरिव नारद ! ॥ ७ ॥

जानासि जगतां वृत्तं नित्यं कामचरः प्रभो ! । भूलोकविषयं छिन्धि ममैकं संशयं ततः ॥ ८ ॥
येन युद्धेषु सर्वेषु त्वं साक्षी तेन पृच्छयसे । किं कलिप्रिय ! मेदिन्यां रणप्रत्यूहकारणम् ? ॥ ९ ॥
किं न सन्ति नरेन्द्राणां कुमाराः केऽपि वंशजाः ? । वीर शून्याऽथवा जाता कथं वन्ध्या वसुन्धरा ? ॥१०॥
यदेतेऽद्यतने काले भूपालाः सुस्थिता इव । स्वर्गश्रियं न वाञ्छन्ति दुर्भगामिव कामिनीम् ॥ ११ ॥
प्राणांस्तृणाय मन्यन्ते युद्धबुद्धिजुषो भटाः । स्वर्गश्च स्वामिकार्यं च द्वौ लाभौ च रणाङ्गणे ॥ १२ ॥
त्यक्तचार्मणकायानां दिव्यं वपुरुपेयुषाम् । पूर्वं सुभटकोटीनां करोम्यातिथ्यमन्वहम् ॥ १३ ॥
सहन्यमपि यत्ते मां नोपसर्पन्ति संप्रति । तेनात्मानमहं मन्ये रक्षितारमिव श्रियः ॥ १४ ॥
अधिकं भान्ति पुष्पाणि पीयमानानि षट्पदैः । विभज्य भुज्यमानानि धनान्यतिथिभिस्तथा ॥ १५ ॥
सा किं श्रीर्यत्र नो द्वारं दानकोलाहलाकुलम् ? । अपतत् पक्षिसङ्घातः कीदृशः फलितस्तरुः ? ॥ १६ ॥
यानि दानविहीनानां दिनान्यायान्ति यान्ति वा । अजातानां मृतानां वा तानि जानामि निश्चितम् ॥१७॥
इति श्रुत्वा श्रुताम्भोधेर्वाचं प्राचीनबर्हिषः । उवाच वचनं प्रेमव्याकुलः कलहप्रियः ॥ १८ ॥
साधु साधु सुराधीश ! प्रस्तुतं प्राज्ञ ! पृच्छसि । दिष्ट्या धर्मानुबद्धेयं वासना तव वासव ! ॥ १९ ॥
इदं च परमैश्वर्यं विनयश्चायमीदृशः । सुधियां द्वयमप्येतत् पुरन्दर ! दुरुत्तरम् ॥ २० ॥
स्थाने यदतिथीनां त्वमभावेन विषीदसि । यत् सत्यं कृतकृत्यस्य न्यूनताऽपि तवेयती ॥ २१ ॥

आस्तुष्टाः स्म भवद्वृत्तैः किमन्यद् विजयी भव। हन्त! कालमसङ्ख्यातं त्रिदिवं वीर! पालय ॥ २२ ॥
युद्धाध्वरहुताप्तनां योऽयं राज्ञामनागमः। तमाकर्णय वृत्तान्तमन्तःकरणकार्म्मणम् ॥ २३ ॥
जयत्यनुपमा तत्र कुमारी भूविभूषणम्। दुहिता भीमभूभर्त्तुर्दमयन्तीति विश्रुता ॥ २४ ॥
न तस्याः सदृशं रूपं भूर्भुवःस्वस्त्रयेऽपि हि। कुत्रापि श्रूयते काले भूते भवति भाविनि ॥ २५ ॥
जगद्युवजनोत्तंसे शुद्धवंशे महौजसि। सा कश्चिद् भजते भावं भामिनी सुभगेऽधुना ॥ २६ ॥
न च विज्ञायते कश्चिद् यस्तस्या मनसि स्थितः। लज्जा जवनिका यस्य न ददाति प्रकाशताम् ॥ २७ ॥
सूचितानङ्गसन्तापैरङ्गैर्विरहवादिभिः। तां वीक्ष्य तद्गुरुस्तस्याः समारेभे स्वयम्वरम् ॥ २८ ॥
वहन्त्यद्य दिवानक्तं स्थलेषु च जलेषु च। दिशां च विदिशां चैव पन्थानः पथिकव्रजैः ॥ २९ ॥
त्यक्तप्राक्तनवैराणां राज्ञामेकत्र गच्छताम्। जिनेन्द्रपरिषत्प्रायं पृथ्वीतलमजायत ॥ ३० ॥
सौभाग्यनिकषे तस्मिन्नद्य भैमीस्वयम्वरे। स पङ्क्तिपतितो राजा यो नागच्छति सत्वरम् ॥ ३१ ॥
येषु येषु रता भैमी भूषणेषु गुणेषु च। तेषु तेषु विशेषो यः पुरुषार्थः स भूभुजाम् ॥ ३२ ॥
प्रत्यूहः प्रत्यहं सोऽयं साम्प्रतं रणकर्मणः। भैमीसुरभवोर्लाभे राज्ञां हि महदन्तरम् ॥ ३३ ॥
अधिकं त्रिदशस्त्रीभ्यो जीवद्भिर्यदि लभ्यते। तन्मृत्वा स्वर्गमागन्तुं को विशेषो महीभृताम्? ॥ ३४ ॥
व्याप्तं च सर्वतो मञ्चप्रतिमञ्चध्वजादिभिः। शुभैः स्वयम्वरारम्भसंभ्रमैः कुण्डिनं पुरम् ॥ ३५ ॥

ततो युद्धदरिद्रं तद् भूतलं द्रष्टुमक्षमः । असङ्ख्यसङ्ख्यसौख्येप्सुरहमभ्यागतो दिवम् ॥ ३६ ॥
तद् वज्रधर ! वृत्रारे ! वलिन् ! वलिनिसूदन ! । अत्र मेने तयोः किञ्चिद् भाविपारणकारणम् ॥ ३७ ॥
इत्यूचिवांसमाचार्यं प्रत्युवाच पुरन्दरः । न कश्चिन्मम सङ्ग्रामसंभवो भगवन्निति ॥ ३८ ॥
ततः स निःश्वसन्नुच्चैर्मुनिरूचे निरुत्सवः । यास्यामि पृथिवीपीठं किं वृथाऽत्र स्थितेन मे ? ॥ ३९ ॥
कदाचिन् कलहायन्ते नृपास्तत्र स्वयम्वरे । ततः पश्यामि तद् युद्धं नृत्यन्नूर्ध्वस्फुरच्छिखः ॥ ४० ॥
इत्युक्त्वैव ययौ पृथ्वीं स मुनिः पिशुनः पुनः । वलान्निवृत्त्य वृत्रारिं द्वारतोऽप्यनुयायिनम् ॥ ४१ ॥

श्रुत्वा हरिस्तदथ नारदवारिदस्य भैमीगुणग्रहमयं गलगर्जितं तत् ।
वीरः स्वयम्वरविलोकनकौतुकेन सज्जीबभूव भुवमभ्युपगन्तुकामः ॥ ४२ ॥

नूनं गतानुगतिकः सकलोऽपि लोकः किं ब्रूमहे बहुतरं तरसा रसार्द्रः ? ।
दिक्पालमौलिमणयोऽपि तमन्वगच्छन् वैवस्वतश्च वरुणश्च हुताशनश्च ॥ ४३ ॥

प्राचीनके घृताची मुखकमलमलं मञ्जुघोषा मघोषा रम्भा स्तम्भं प्रपेदे सपदि कृतवती मेनका मौनभावम् ।
इत्थं स्वःसुन्दरीणामनुसरति हरौ मानुषीं राजपुत्रीं जज्ञे सन्तापचिन्ताकलिमलकलुषं मानसं मानिनीनाम् ॥ ४४ ॥

उद्दण्डैरुत्पताकैरविकलकलशैरुल्लसत्किङ्किणीकैरुल्लोचाद्यैरुदञ्चच्छुचिरुचिरुचिरैश्चारुपर्यङ्कयुक्तैः ।
विष्वक् मन्दारमालापरिमलमिलितस्फारभृङ्गारवौघैर्व्योम व्याप्तं विरेजे हरिमनुसरतां व्योमभाजां विमानैः ॥ ४५ ॥

सकलकलशलीलां प्राप कुत्रापि चन्द्रः स्फुटकुसुमसमत्वं क्वापि नक्षत्रवृन्दम् ।
क्वचन जवनिकात्वं वारिदा विद्युतश्च ध्वजपटपटिमानं देवयानेषु तेषु ॥ ४६ ॥
स्वःसिन्धुसीकरकरम्बितगन्धवाहं भारण्डचण्डरवमण्डितदिग्विभागम् ।
उत्तीर्य दुस्तरतरं तरसा नभस्ते भेजुर्धरावलयसन्निधिमिन्द्रमुख्याः ॥ ४७ ॥
इतिश्री माणिक्यदेवसूरिकृते नलायने द्वितीये दूत्यस्कन्धे द्वितीयः सर्गः ॥ २ ॥

## द्वितीये दूत्यस्कन्धे तृतीयः सर्गः ।

अत्रान्तरे तिरस्कुर्वन् लक्ष्मीं मकरलक्ष्मणः आसीद् रेवातटं पश्यन् श्रुतशीलान्वितो नलः ॥ १ ॥
तमालतालहिन्तालशालमालूरमालिताः । कदम्बनिम्बजम्बीरजम्बूस्तम्बकरम्बिताः ॥ २ ॥
करीरकीरवानीरकरवीरविराजिताः । केतकीकुन्दवासन्तीशतपत्री पवित्रिताः ॥ ३ ॥
चूतचम्पककिङ्किल्लिमल्लिकावकुलाकुलाः । तस्य प्रविविशुश्चित्तं विचित्रा वनराजयः ॥ ४ ॥ [ त्रिभिर्विशेषकम् ]
तस्य विन्ध्याचलोद्देशदर्शनानन्दकन्दलम् । सिषेच वाक्सुधासारैस्ततः सचिववारिदः ॥ ५ ॥
सरलसरलशाखासक्तशाखामृगौघा हरिणहरिणियूथा यूथिकाजालभाजः ।

कमलकमलयातिप्रीतिदाः सारमानां सरससरम एते विन्ध्यशैलप्रदेशाः ॥ ६ ॥

इत्थं स तेन सचिवप्रवरेण रम्यं रेवातटव्यतिकरं विनिगद्यमानः ।
हंसैः पुरः परिवृतां चतुरैश्चतुर्भिरेकां रथाङ्गगृहिणीं सहसा ददर्श ॥ ७ ॥

तां दर्शयन्नथ नलः श्रुतशीलमूचे मन्त्रिन्नमुत्र किमिदं ननु पश्य पश्य ? ।
एणामगावविपयस्तदमी परस्त्रीं हंसा रथाङ्गगृहिणीं किमु कामयन्ते ? ॥ ८ ॥

इयमपि चटुलेपु चाटुकारेष्वतिरुचिरेष्वपि खेचरेष्वमीपु ।
कथमपि न पुनर्बिभर्त्ति भावं रतिमिव कैरविणी रवेः करेपु ॥ ९ ॥

अनुचितमनुरागमीदृशं धिक् ननु शिखिपिच्छमिवैकपक्षरम्यम् ।
वन इव रुदितं दिवीव गुप्तं हुतमिव भस्मनि वा रतिर्विरक्ते ॥ १० ॥

नैवान्यजातिमभियाति कदापि मुक्त्वा किञ्चिन्निमित्तमिव मच्छुभमत्र नूनम् ।
अस्मिन् स्वयम्वरविधौ नियतं यदस्मात् संभाव्यते किमपि विस्मयकारि कार्यम् ॥ ११ ॥

इति निगदितवन्तं मन्त्रिणा सार्द्धमन्तर्विरचितदमयन्ती प्राप्तचिन्तातरङ्गम् ।
अनुपमरमणीयं पार्थिवं द्रागपश्यन्नवनिमवतरन्तस्तं ततस्ते सुरेन्द्राः ॥ १२ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने द्वितीये दूत्यस्कन्धे तृतीयः सर्गः ॥ ३ ॥

## द्वितीये दूत्यस्कन्धे चतुर्थः सर्गः ।

प्रभावस्तम्भितैर्यानैर्ददृशुस्तं दिवौकसः । संयमस्तिमितैरक्षैः क्षेत्रज्ञमिव योगिनः ॥ १ ॥
न शश्वसुर्न जगदुर्न च स्वं विविदुः स्वयम् । ययुश्च महसा शीघ्रं पश्यन्तस्तं दिवौकसः ॥ २ ॥
महोन्नतिजुषा तेन सा निरर्गलगामिनी । सौभाग्यनलमन्त्रेण स्तम्भिता शक्रवाहिनी ॥ ३ ॥
लावण्यामृतपाथोधौ पार्थिवे पृथुवक्षसि । अपि मग्नानि प्रौढानां मनांसि त्रिदिवौकसाम् ॥ ४ ॥
अहो ! रूपमहो ! रूपमहो ! रूपमिति क्षणम् । मूर्ध्नस्तेषां धुनाति स्म स्तुतिझञ्झानिलो भृशम् ॥ ५ ॥
राजराजेश्वरः श्रीमान् स एवैष नलः कथम् ? । इत्थं परस्परं प्रोचुर्मन्दं मन्दं दिवौकसः ॥ ६ ॥
तत्र स्वयंवरे नूनं यात्यसौ पृथिवीपतिः । आभिरामिकमस्येदं यतः सर्वाभिषेणनम् ॥ ७ ॥
पद्मिन्या इव मार्त्तण्डं गङ्गाया इव सागरम् । अमुं विलोक्य वैदर्भ्या नान्यस्मिन् रंस्यते मनः ॥ ८ ॥
रूपलक्षणवर्णाद्यैरत्यन्तं हीनताजुषः । पुरस्तादस्य दृश्यन्ते देवासुरनरोरगाः ॥ ९ ॥
एकहट्टवणिक् सोऽयं निश्चितं निषधेश्वरः । निजरूपक्रयक्रीतां दमयन्तीं गृहीष्यति ॥ १० ॥
मूर्खत्वादस्मदुत्कृष्टं भैमी त्यजति चेदमुम् । अप्रतीत्य परोत्कृष्टान् नास्मानपि वृणीत सा ॥ ११ ॥
गुणाधिकममुं मुक्त्वा सा कदाचिद् वृणीत नः । वृण्वत्याऽपि तदाऽस्माकं तया किमगुणज्ञया ? ॥ १२ ॥

उत्तानपातिभिः पापैरभिमानवशंवदैः । अदीर्घदर्शिभिः सर्वैरस्माभिः किमिदं कृतम् ? ॥ १३ ॥
चिटिका वदरस्येव पृष्ठतः पुरतोऽपि वा । अस्माकं साम्प्रतं शक्तिर्न गन्तुं न निवर्त्तितुम् ॥ १४ ॥
तान् वीक्ष्य कुमुखान् शक्रः प्रत्युत्पन्नमतिस्ततः । नलं प्रति प्रतीहारं नैगमेषिणमादिशत् ॥ १५ ॥
दिवः सुर इवायाति कोऽयमित्याकुलं नलम् । समीपे सोऽपि संप्राप्य सप्रश्रयमभाषत ॥ १६ ॥
राजन्! मा विभ्रमं कार्षीर्भज सज्जातिथेयताम् । अयं त्वां स्वयमभ्येति भगवान् पाकशासनः ॥ १७ ॥
इति तद्वचनाद् राजा समुत्थाय ससंभ्रमम् । कृताञ्जलिः प्रफुल्लास्यः पौलोमीपतिमभ्यगात् ॥ १८ ॥

अथ ललितमुखीभिर्मञ्जुघोषादिकाभिस्त्रिदशवरवधूभिश्चामरैर्वीज्यमानम्
अविरलकलकण्ठैः किन्नरैर्गीयमानं शुचिरुचिरचरित्रं चारणैः स्तूयमानम् ॥ १९ ॥

स्फुटमपि दुरवापं पापिभिर्द्रष्टुमुच्चैः सुकृतिभिरपि दूरं दीप्तिभिर्दुर्विभाव्यम् ।
तरुणतमतमालश्यामलादन्तरिक्षादवनिमवतरन्तं देवराजं ददर्श ॥ २० ॥ युग्मम् ॥

मकरमहिषधूमव्यक्तकेतूपसृष्टान् विकटविपुलनीलश्यामपिङ्गाङ्गभासः ।
वरुणयमकृशानूनद्भुतानूनशक्तीन् तमनु च मनुजेन्द्रस्तान् पुनर्लोकपालान् ॥ २१ ॥

नन्वेषोऽहं त्रिभुवनभुजः स्वामिनो लोकपालान् ? वन्दे युष्मच्चरणयुगलं वीरसेनस्य पुत्रः ।
इत्यानन्दोच्छ्वसितहृदयः पावकादीन् प्रणम्य प्रीतः प्रोचे स्वयमिति मितं सूनृतं भूमिपालः ॥ २२ ॥

कुत्राल्पकं मम तपः क्व च तत्फलं वा ? यूयं किल व्रजत लोचनगोचरं यत् ।
अस्मत्पुराणपुरुषव्रजनिर्मितानां नन्वेष मे सुमहतां तपसामुदर्कः ॥ २३ ॥
क्षोभं विशङ्क्य हृदि सत्यपि हि प्रसादे संभावयन्ति विभवो न वृथैव भृत्यान् ।
आज्ञोपलम्भविभवैकरसस्तदुच्चैरादिश्यतां क्वचन कर्मणि दास एषः ॥ २४ ॥
इति वचनमुदीर्य प्रौढगाम्भीर्यवीर्यः स्वयमवहितचित्तः क्ष्मापतिर्धर्मवित्तः ।
त्रिदशपतिपुरस्तादाशु संयोज्य हस्तावजनि भृशमवामस्तद्वचः श्रोतुकामः ॥ २५ ॥

इतिश्रीमाणिक्यदेवसूरिकृते नलायने द्वितीये दूत्यस्कन्धे चतुर्थः सर्गः ॥ ४ ॥

## द्वितीये दूत्यस्कन्धे पञ्चमः सर्गः ।

इति तद्वचनैः प्रायः प्रीतोऽपि हृदि वासवः । नात्यजद् दुरभिप्रायं कार्थिनो दोषदर्शिनः ? ॥ १ ॥
वैदर्भीकामुकं भूपं रूपवन्तं तमागतम् । हरिर्विश्वयितुं दध्यौ कैकार्थिषु न मत्सरः ? ॥ २ ॥
परोत्कर्षासहिष्णुत्वं दुर्निवार्यं सतामपि । सूर्यकान्ता ज्वलन्त्यन्तः सन्तप्ताः सूर्यकान्तिभिः ॥ ३ ॥
प्रभुत्वपिहितद्वेषो बहिर्वृत्त्या पुरन्दरः । दर्शयामास सौम्यत्वं सौम्या ह्यमृतकर्त्तरी ॥ ४ ॥

तृणच्छन्नमहाकूपैर्मधुलिप्तैस्तथाऽसिभिः । कितवैश्च महासौम्यैर्दुर्दशां को न नीयते ? ॥ ५ ॥
अवलोकितदिक्पालः कालज्ञः कलया गिरा । तमुवाच सुनासीरः कुशलप्रश्नपूर्वकम् ॥ ६ ॥
कच्चित् विजयभूयिष्ठं भूपाल ! भवतो वपुः ? । कच्चित् कल्याणमङ्गेषु सप्तस्वपि तव स्थितम् ? ॥ ७ ॥
एष नैषध ! कीनाशः कृशानुर्दीप्तिमानयम् । पश्चिमाशापतिश्चायं वयं च त्वामुपस्थिताः ॥ ८ ॥
दिवः क्ष्मातलमायाताः सर्वेऽपि भृशमुत्सुकाः । संभाव्य तव माहात्म्यं स्वकार्यापेक्षया वयम् ॥ ९ ॥
त्वं राजंस्त्रिदिवस्थानां पुराऽपि विदितोऽसि नः । गायन्ति भवतः कीर्त्तिं सर्वदा सिद्धचारणाः ॥ १० ॥
भूलोके तदपूर्वं नस्त्वामेकमुपलक्षितम् । कच्चित् कार्यं नियुञ्जाना राजन्नङ्गीकरोपि चेत् ॥ ११ ॥
अथ तान् वज्रिणो वाचा जानन् कार्यवशंवदान् । विचार्य कार्यकारित्वं स स्वस्मिन् मुमुदे नृपः ॥ १२ ॥
दुर्लभं दिक्पतीनां किं मदधीनं च तत् कथम् ? । अहो ! वाञ्छा दिक्पतीनां कथमेषाऽवगम्यताम् ? ॥ १३ ॥
यथाऽनादिष्टमेवैषां कार्यं कुर्यां ततः शुभम् । किं कार्यकारिभिर्मूर्खैरादेशक्लेशयाचिभिः ? ॥ १४ ॥
द्रव्यं वा जीवितव्यं वा यत् किञ्चिदपरं तथा । एतेषां कार्यसिद्ध्यर्थं ददतः स्खलना न मे ॥ १५ ॥
अनायत्ताऽपि वैदर्भी मनसा स्वीकृता मया । अमीषां याचमानानामदेया सैव केवलम् ॥ १६ ॥
जीवितानधिमूल्येन यशसः क्रियते क्रयः । तत् कथं क्रियतां कीर्त्तिर्मया प्राणाधिकापणः ? ॥ १७ ॥
शरीरं वा श्रियो वापि राज्यं वा राष्ट्रमेव वा । सर्वाणि पुरतो भैम्याः कलां नार्हन्ति षोडशीम् ॥ १८ ॥

भवत्वेवं ततस्तावद् वक्ष्यामीति विचिन्त्य सः । प्रसन्नोदारगम्भीरामित्यल्पां वाचमाददे ॥ १९ ॥
यत्र कुत्रापि कर्त्तव्ये तव चित्तं प्रवर्त्तते । नियुज्यतां जनोऽयं द्राक् तत्र वासव ! दासवत् ॥ २० ॥
अवश्यं निधनेनापि धनेनापि हि संप्रति । कर्त्तव्यं देवकर्त्तव्यं मया मायाविवर्जितम् ॥ २१ ॥
इत्युक्तवति निःशङ्कं नलेऽनलसमानसे । साधु साध्विति गीर्वाणवाणीभिर्विश्वमानशे ॥ २२ ॥
अथ हस्तगतं ज्ञात्वा सात्त्विकं तं नरोत्तमम् । ऊचे दम्भमहाम्भोधिः स्वयं दम्भोलिभृत् पुनः ॥ २३ ॥
राजन् ! सर्वसहः सत्यं सर्वकार्यक्षमो भवान् । परं वाग्व्ययमात्रं नः साधनं साध्यतां त्वया ॥ २४ ॥
कुण्डिने भीमभूभर्त्तुः पुत्री त्रैलोक्यसुन्दरी । स्वयम्वरोन्मुखीं बालां दमयन्तीमवेहि ताम् ॥ २५ ॥
स त्वमस्मत्कृते गत्वा दमयन्तीं प्रबोधय । निसृष्टार्थो भवास्माकं स्मराकुलितचेतसाम् ॥ २६ ॥
तदाकर्ण्य हरेर्वाक्यं स्फारस्फूर्जथुसन्निभम् । चकम्पे भूभुजश्चित्तं सुभटाक्षिप्तखड्गवत् ॥ २७ ॥
स तैरर्कपयः प्रायैः क्षारवारिसहोदरैः । वञ्चनावचनैर्मेने पिशाचमिव वासवम् ॥ २८ ॥
सङ्क्रन्दन ! नमस्तेऽस्तु नाथ ! त्वं युक्तमुक्तवान् । किन्तु वाक्यावकाशोऽस्ति मम कश्चित् पुरन्दर ! ॥ २९ ॥
भीमजार्थं मया नूनं याच्यमानाः स्थ सर्वदा । साऽद्य प्रत्युत मत्पार्श्वाद् युष्माभिर्याच्यतां कथम् ? ॥ ३० ॥
यामि यामहमुद्वोढुं तद्दौत्यं वः करोमि किम् ? । विडम्बनाय लोकानां केन यूयं सुशिक्षिताः ? ॥ ३१ ॥
केवलं युष्मदर्थे तां त्यजामि दयितामपि । स्वामिकार्ये विमुञ्चन्ति प्राणानपि हि मानिनः ॥ ३२ ॥

स्त्रीदूत्यं तु कथं कुर्यां ? पामरैरपि गर्हितम् । न भजेत् शाल्मलीपुष्पं ग्राम्योऽपि किमु नागरः ? ॥ ३३ ॥
इह कृत्यमकृत्यं वा गुरुवाक्ये व्यवस्थितम् । अकृत्यमपि तत् कृत्यं यद् गुरुप्रतिपादितम् ॥ ३४ ॥
गुरुरेव यदामूर्खस्तदा शिष्यस्य का गतिः ? । कः पन्थास्तत्र युग्यानां जात्यन्धो यत्र सारथिः ? ॥ ३५ ॥
कुर्वाणस्यापि मे दूत्यं युष्माकमनुवर्त्तनात् । कथं भवति वैदर्भ्या लीलयैव हि दर्शनम् ? ॥ ३६ ॥
यदि पश्यामि तां बालामेकाकी चौरचर्यया । तदा रक्षकलक्षाणां रक्षणे का प्रतिक्रिया ? ॥ ३७ ॥
हत्वाऽपि यामिकान् सर्वान् प्रसभं यातवत्यपि । किं विश्वसिति सा बाला प्रचण्डचरिते मयि ॥ ३८ ॥
उरीकृतं तया पूर्वं मां वरीतुं वरप्रिय ! । मयि दृष्टे त्रपां प्राप्य न सा वः स्वीकरिष्यति ॥ ३९ ॥
न ममापि च तद्दृष्टौ तिष्ठेद् भावस्तिरोहितः । दुःखेनापि न जीयन्ते विषया विदुषाऽपि हि ॥ ४० ॥
तदित्थं प्रेषितात् पार्श्वादहमप्रेषितो वरम् । स्वार्थहानिश्च युष्माकं व्यर्थं च गमनं मम ॥ ४१ ॥
तत् प्रसीदत दिक्पालाः ! मा कुरुध्वं परिश्रमम् । इत्थं न कार्यसिद्धिर्वः केवलं वचनीयता ॥ ४२ ॥
अथोवाच प्रचेतास्तं हस्तमुत्क्षिप्य हेलया । हन्त ! भूपालशार्दूल ! युक्तमुक्तं न हि त्वया ॥ ४३ ॥
राजन् ! शतंवराः कन्याः को दोषस्तासु वीक्षया ? । देवभक्तस्त्वमप्युच्चैर्देवार्थं सर्वमेव ते ॥ ४४ ॥
सार्वभौमः शुचिः श्रीमानभग्नार्थिमनोरथः । महेच्छो महिमाम्भोधिर्विद्वान् वाग्मी जितेन्द्रियः ॥ ४५ ॥
अतो राजसुतापार्श्वे दूत्ययोग्यस्त्वमेव हि । नान्तःपुरप्रवेशार्हः प्रायेण प्राकृतो जनः ॥ ४६ ॥ युग्मम् ।

यत्र यस्य हि योग्यत्वं तत्र व्यापार्यते हि सः । न मार्जारकरे दद्यात् कोऽपि गोपायितुं पयः ॥ ४७ ॥
अयं वरप्रदः श्रीमान् जम्भवृत्रबलान्तकः । त्वद्वर्जं कथमप्यन्यं कथं प्रार्थयते हरिः ? ॥ ४८ ॥
तमग्निरप्यभाषिष्ट विष्टपत्रयनायकम् । राजन् ! प्राप न कोऽप्यत्र पाकशासनमर्थिनम् ॥ ४९ ॥
तद् मुञ्च दयितामोहं कीर्त्तिमन्तर्विचिन्तय । आकल्पान्तस्थिताऽप्युच्चैर्न या गलितयौवना ॥ ५० ॥
यदि त्वयि गतेऽस्माकं न सिद्ध्यति मनोरथः । विहितात्मीयकृत्यस्य तदा दोषस्तु कस्तव ? ॥ ५१ ॥
यमोऽपि वचनं प्रोचे मैवं मंस्था हुताशन ! । नन्वयं सफलः श्रीमान् नलो नाम्ना महीपतिः ॥ ५२ ॥

ननु नल ! तव नाम्नाऽप्येव सर्वार्थसिद्धिस्तदिह कथमसिद्धं यस्य कर्त्ता त्वमेव ।
विसृज कुटिलभावं मुञ्च राजेन्द्र ! मोहं शिथिलय हृदि कान्तां कीर्त्तिमङ्गीकुरुष्व ॥ ५३ ॥

श्वास एष चपलः क्षणमध्ये यो गतागतशतानि विधत्ते ।
जीविते तनुमतां तदधीने कः समाचरति धर्मविलम्बम् ? ॥ ५४ ॥

यद् वाम्यमावहति यत् कुरुते विलम्बं यद् मोदतेऽपि न च याचकयाच्यमानः ।
स त्वादृशस्य नियतं सकलः कलङ्कः किं त्वेक एव मृगलक्ष्मणि रङ्करङ्कः ॥ ५५ ॥

उत्तिष्ठ शीघ्रं कुरु देवकार्यमुपेक्षसे किं बहु भाषितव्यम् ? ।
भैमीसमीपं व्रजतस्तवास्तामन्तर्द्धिसिद्धिर्मनसोऽनुवृत्त्या ॥ ५६ ॥

इत्थं मर्त्रैः कपटपटुभिस्तैरुदस्तः प्रकामं दत्तादृश्यीकरणमहिमा वासवं स प्रणम्य ।
तादृग् मैमीदृढरतिरमभ्रंशदूतोऽपि दूरं दूतत्वस्य प्रसभनिहितं भारमङ्गीचकार ॥ ५७ ॥
ततः मभृत्यः सह लोकपालैरन्तर्दधे तत्र सहस्रनेत्रः ।
चिन्तापनीतप्रमदः प्रपेदे पृथ्वीपतिः स्वं पृतनानिवेशम् ॥ ५८ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने द्वितीये दूत्यस्कन्धे पञ्चमः सर्गः ॥ ५ ॥

## द्वितीये दूत्यस्कन्धे षष्ठः सर्गः ।

तत्राऽऽसीनः स पर्यङ्के विरलीकृतसेवकः । सुचिरं चेतसा दध्यौ नवबद्ध इव द्विपः ॥ १ ॥
न तथा दुःसहं सम्यक् प्रियाप्रेमप्रमार्जनम् । यथाऽऽसीद् दुर्वचस्तस्य स्वयं वासववाचिकम् ॥ २ ॥
स्मारं स्मारं प्रियाप्रेम चेतसोऽन्तर्गतं तदा । वारं वारं धुनाति स करौ वृश्चिकदष्टवत् ॥ ३ ॥
अथवा वचनीयं यत् किमप्यस्ति तदस्तु मे । कर्त्तव्य एव देवार्थः पर्याप्तं चिन्तयाऽनया ॥ ४ ॥
तिष्ठत्स्वपि पुमर्थेषु सर्वेष्वपि विशेषतः । पुंसामारब्धनिर्वाहः प्रथमं पुरुषव्रतम् ॥ ५ ॥
ब्रह्मघ्नं च कृतघ्नं च मद्यपं गुरुतल्पगम् । दृष्ट्वा भ्रष्टप्रतिज्ञं च नरः स्नानेन शुद्ध्यति ॥ ६ ॥

तत् संप्रति प्रियाप्राप्त्या प्रीताः सन्तु दिवौकसः । लभतां साऽपि वैदर्भी दिव्यभोग्येषु योग्यताम् ॥ ७ ॥
दिक्पालैः प्रार्थ्यमानं स्वं कथं सा विनिषेधति ? । अनया वार्त्तया तस्याः प्रीयन्ते स्वजना अपि ॥ ८ ॥
करिकर्णाग्रचपलं श्रीवृक्षदलचञ्चलम् । द्विजिह्वारसनालोलं को वेद ललनामनः ? ॥ ९ ॥
इत्थं विमृशतस्तस्य त्वरितद्वाःस्थसूचितः । पुष्कराक्षः प्रियादूतो विदर्भेभ्यः समाययौ ॥ १० ॥
स्वागतं भवतः कश्चिद् मन्त्रिन्नित इतो भवान् । कुशली भीमभूपाल ! इत्यभाणि स भूभुजा ॥ ११ ॥
सोऽपि मौक्तिकपुञ्जेन दत्तपुष्पाञ्जलिर्नृपम् । प्रणम्य परया भक्त्या निजगाद कृताञ्जलिः ॥ १२ ॥
अवेहि देव ! कुशलं कुण्डिनेन्द्रस्य सर्वतः । भवद्वार्त्तानुयोगेन विशेषादद्य तत् पुनः ॥ १३ ॥
अद्य स्वयंवरमिलत्पृथिवीपतीनामावर्जनव्यतिकराकुलितस्य तस्य ।
संप्रेषितः क्षितिपतेः सुतया तयाऽहं त्वामेकमुत्सुकयितुं मदनाभिरामम् ॥ १४ ॥
पूर्वं प्रयाणदिवसात् प्रभृति त्वदीयं स्थानं चरैरनुदिनं विनिवेद्यमाना ।
त्वन्मार्गसंमुखगवाक्षनिषेदुषी सा श्लिष्यत्युदक्पवनमप्यनुवेलमङ्गैः ॥ १५ ॥
प्रस्थापितं रचयितुं तव देव ! सेवां योग्यं तया च निजकिन्नरयुग्ममेकम् ।
अस्ति स्थितं नरपतिप्रतिहारभूमौ वीणागुणप्रगुणनाय गुणाम्बुराशेः ॥ १६ ॥
इत्युक्तः सन्नथ नरपतिस्तेन युक्तः पुरस्तादभ्युत्तस्थौ सपदि मुदितस्तद्दिदृक्षारसेन ।

अर्घं दत्त्वा नृपचरणयोर्नीलनेत्रद्वयेन प्रोचे तच्च स्फुटकलरवं किन्नरद्वन्द्वमीदृक् ॥ १७ ॥
धनुर्गुणभववर्जं बद्धमुष्टित्वमेकं परगुणहरणं वा यस्य दृष्टं न भूयः ।
जयति विजयवीरो वीरसेनस्य वंशे स जगति नलनामा निर्मलः सार्वभौमः ॥ १८ ॥
सार्वभौम ! तव वर्णनाविधौ धूनयन्ति सुधियः शिरांसि यत् ।
तद् ध्रुवं निबिडयन्ति कर्णयोस्तावकीनगुणपूर्णमान्तरम् ॥ १९ ॥
इत्थं ब्रुवाणमथ तन्मथितारिपक्षः पक्षान्तचन्द्रवदनो मदनोपमाङ्गः ।
मार्गश्रमापनयनाय स पुष्कराक्षं दत्त्वाऽनुजीविषु स सान्ध्यविधिं व्यधत्त ॥ २० ॥
भूयोऽपि तारकितपुष्करसीम्नि काले हर्षादखिन्नहृदि संसदि संनिषण्णः ।
तत् तत्प्रमोदजननं किमपि ब्रुवाणः शुश्राव किंपुरुषदम्पतिगीतगानम् ॥ २१ ॥
निस्पन्दतेऽनुगगनं प्लवतेऽनुपृथ्वि मन्तर्प्यतेऽनुकरणं ह्रियतेऽनुचेतः ।
इत्थं तदा तदुदिताद् नवगीतगीतात् श्रोतुर्जनस्य सहसाऽनुभवो बभूव ॥ २२ ॥
पृष्टः स्वयं नृपतिना च कुतस्त्यमेतद् ? द्वन्द्वं प्रपन्नमिति सोऽपि हि पुष्कराक्षः ।
भूपाय सुन्दरविहङ्गमवाचि दक्षः सन्देहभङ्गकृतये मिथुनं जगाद ॥ २३ ॥
विद्याधरेन्द्रदुहिता महितप्रभावा सा केशिनी प्रियसखी च विदर्भजायाः ।

केनापि च व्यतिकरेण वने प्रपन्ना श्रीभीमभूमिपतिना तदहं न वेद्मि ॥ २४ ॥
इति निगदति तस्मिन् घूर्णिते राजलोके शयनसमयमुच्चैर्बन्दिभिर्बोध्यमानः ।
अनतिनिकटदूष्यादिष्टतद्योग्यशय्यः स्वयमपि शयनीयं भूमिपालः सिषेवे ॥ २५ ॥
हन्त ! निश्चितमहो ! दमयन्त्या निर्भरो मयि महाननुरागः ।
वेदवाक्यमिव वा कुलजानां सौहृदं विघटते न कदाचित् ॥ २६ ॥
प्रस्तरे लिपिरिव स्थिररूपा सिन्धुवत् क्रमविवर्द्धनशीला ।
पथ्यवत्परिणतौ शिवतातिः पातु वो जगति सज्जनमैत्री ॥ २७ ॥
भाले भास्वत्सहजतिलकं भोजवंशे प्रसूतिर्विद्याधर्या सह परिचयः किन्नरीगीतगोष्ठिः ।
रूपं तादृक् स च गुणगणो याचितारश्च देवाः तत् किं तावद् नृपतिदुहिता दैवतं सा न नारी ॥ २८ ॥
एवं रूपं निरुपमतमं प्रेमराशिं दधाना सा वक्तव्या कथमपि मया तादृशैर्दूतवाक्यैः ।
धिक् धिक् पापं कठिनमधमं निर्दयं मामधन्यं धिक् धिक् क्रूराननुचितकृतः कोपिनो लोकपालान् ॥ २९ ॥
जानन्त्येते मम परिणतिं पुष्कराक्षादयश्चेदेषामेव प्रभवति तदा कीदृशी चित्तवृत्तिः ? ।
अत्रैवाहं किमु समुचितं नात्मघातं विदध्यां त्यक्त्वा राज्यं न कथमथवा स्यां नु किं त्यक्तशस्त्रः ॥ ३० ॥
इतो दूरे व्याघ्रः किमपरमितः पर्वततटी त्वितो देवादेशः क्षितिपतिसुतासौहृदमितः ।

उपायानां भ्रंशाद् निरवधिनिरालम्बमचिरादहो ! चिन्तारूढं कथमिदमिति भ्राम्यति मनः ॥ ३१ ॥

इत्थं किञ्चित् कलितकरुणाकामकौलीनलज्जं भूयो भूयो मनसि विमृशन् भूमिपालप्रदीपः ।
ईषत्कालं कथमपि चिराद् मीलिताक्षः प्रपेदे निद्रानाशं दिवसवदने किन्नरद्वन्द्वगीतैः ॥ ३२ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने द्वितीये दूत्यस्कन्धे षष्ठः सर्गः ॥ ६ ॥

## द्वितीये दूत्यस्कन्धे सप्तमः सर्गः ।

स प्रभाते महाप्राज्ञः प्रतिज्ञां हृदि चिन्तयन् आसीत् कार्याय देवानां कुण्डिनं गन्तुमुत्सुकः ॥ १ ॥

कृतप्रभातकृत्येन तेन द्रष्टुं समीहितः । उपतस्थे प्रयाणोर्वी पुष्कराक्षः सकिन्नरः ॥ २ ॥

स तस्मै दत्तसारथ्यः पृथ्वीपतिशतावृतः । सहस्रतुरगोद्वाह्यं प्रतस्थे रथमास्थितः ॥ ३ ॥

निनिह्नुतविषादस्य सविशेषं प्रसेदुषः । आसन् पथि कथास्तास्ताः पुष्कराक्षादिभिः समम् ॥ ४ ॥

एतानि तानि वरदातटमुत्तरेण प्रासादशृङ्गमिलितारुणमण्डलानि ।
सर्वत्र दर्भरहितस्य विदर्भनाम्नो देशस्य देव ! नगराणि महागुरूणि ॥ ५ ॥

एतच्च भूतिलक ! भीमनरेश्वरस्य श्रीपत्तनं तदिति जल्पति पुष्कराक्षे ।

भूपस्य तस्य विरहज्वरदाघहारिश्रीखण्डकुण्डमिव कुण्डिनमाविरासीत् ॥ ६ ॥
प्रौढप्रासादशैलं नवधवलचलत्केतुकल्लोलमालं निर्घोषव्याप्तविश्वं जननयनमनोविस्मयानन्दभूतम् ।
भूरिस्त्रीपुंसरत्नं किमपि कमलयाऽध्यासितं भीमपुत्र्या विष्वक्सेनः स पश्यन् सुरप्रणिधिममुं प्राप किञ्चित् प्रमोदम् ॥ ७ ॥
भो भोः पौरजनाः ! समग्रनगरे पुष्पोत्करः कीर्यतां बध्यन्तां मणितोरणानि रभसादूर्ध्वीक्रियन्तां ध्वजाः ।
सिच्यन्तां घुसृणच्छटाभिरभितो मार्गा वितानावृताः प्राप्तो येन किलाद्य मूर्त्तमदनो देवः स्वयं नैषधः ॥ ८ ॥
सामन्ताः ! सह सन्निधत्त सहसा भोः ! मन्त्रिणस्त्वर्यतां देवो भीमनरेश्वरः स्वयमयं देवं नलं द्रक्ष्यति ।
नेदीयस्यथ भोजराजनगरे तारप्लुतं जल्पतां इत्यश्रूयत निर्भरं नलबलैराघोषणा वेत्रिणाम् ॥ ९ ॥
ततः किञ्चित् कालाद् नलनृपमुपेयाय नृपतिर्नभश्छत्रच्छन्नं विदधदधिरूढः करिकरम् ।
पठद्भिर्वन्दीन्द्रैः कमलनयनः कुण्डिनपतिः कुमारैः सानन्दैर्दमदमनदान्तैः परिवृतः ॥ १० ॥
अभ्युत्थानपरौ परस्परमथो दृक्पानमात्रे पथि द्वावाश्लिष्य दृढं क्रमादभिमुखौ सिंहासने सुस्थितौ ।
क्षेमप्रश्नविधानपूर्वकमुभावन्योन्यसंदर्शिनौ सूर्याचन्द्रमसोः श्रियं जगृहतुर्जामित्रमैत्रीभवाम् ॥ ११ ॥
श्रीभीमो निषधेश्वरं प्रति ततः प्रोवाच वाचं मितां दिष्ट्या संप्रति सुप्रभातमभवद् जाते कृतार्थे दृशौ ।
कीर्त्या सर्वगतोऽपि विश्वविजयी येनोत्सन्ने ईदृशे इक्ष्वाकूद्भववीरसेनतनयो वीरः स्वयं प्राप्तवान् ॥ १२ ॥
ततोऽवोचद् वाचं नलनरपतिर्भीमनृपतिं महाराज ! प्रेयस्तव परिचयाद् नः किमपरम् ? ।

मनोवाक्कर्माणि क्वचिदपि न भिन्नानि महतामतः पर्याप्तं नस्तव नृपगुरोः सूनृतगिरा ॥ १३ ॥
इत्थं वदन् संभृतभीमवाक्यो यथोचिताभिः प्रतिपत्तिभिस्सः ।
कुमारसेनापतिमन्त्रिमुख्यानावर्जयामास कृतप्रणामान् ॥ १४ ॥
मध्याह्नसान्ध्यविधिरस्ति समीपवर्त्ती खेदं श्लथीकुरुत तद् भवनं व्रजामः ।
इत्थं वदंस्तदनु भीमनृपः प्रतस्थे मुक्त्वोपचारपुरुषान् तदुपासनार्थम् ॥ १५ ॥
भैम्या स्वयं विरचितां निषधेशहेतोर्नीत्वा नवां रसवतीमवरोधवध्वः ।
अभ्याययुर्द्रुतमनन्तरमुत्तरीयप्रच्छादिताः पटलिकाः शतशो वहन्त्यः ॥ १६ ॥
तासामदत्त निजदर्शनमेव वीरः सन्मानदानसदृशं सचिवैर्विधाप्य ।
तैस्तैः समं स बुभुजे भुजनिर्जितारिस्तारापतिप्रतिमनिर्मलरम्यवक्त्रः ॥ १७ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने द्वितीये दूत्यस्कन्धे सप्तमः सर्गः ॥ ७ ॥

---

## द्वितीये दूत्यस्कन्धे अष्टमः सर्गः ।

---

अथ विश्वजनीनेन प्रतिज्ञाभारवाहिना । विश्रान्तिस्थानकं मेने वैदर्भीमुखदर्शनम् ॥ १ ॥
श्रेष्ठं चेत् सफलीकुर्याद् दौत्यं मम नृपात्मजा । इत्यन्तश्चिन्तया तस्य देवार्थः स्वार्थतां ययौ ॥ २ ॥

वैदर्भ्याः प्राभृतीकर्तुं रत्नाभरणसङ्करम् । स प्रैपीत् मन्त्रिणं मुञ्जं पुष्कराक्षपुरस्सरम् ॥ ३ ॥
स्वयं तदागमापेक्षी प्रासादशिखरस्थितः । ददर्श कुण्डिनोद्देशान् स प्रवेशविनिर्गमान् ॥ ४ ॥
श्रुतशीलमपि प्रायो न पप्रच्छ विशारदम् । ददर्श तस्य कृत्यस्य निर्णयं नैषधः स्वयम् ॥ ५ ॥
वैदर्भीदत्तभृङ्गारैरन्यरूप इवागतः । सोऽपि प्रणम्य मुञ्जस्तं भावार्थज्ञं व्यजिज्ञपत् ॥ ६ ॥
स्वामिन्नुल्लङ्घितद्वारं वहिःस्थितपरिच्छदम् । केशिनी सन्मुखायाता चन्द्रशालां निनाय माम् ॥ ७ ॥
त्वत्प्रीत्या गुर्वनुज्ञातस्फुटमद्दर्शनाऽपि सा । तिरःकृतैव वैदर्भी मत्प्रणाममममन्यत ॥ ८ ॥
वज्रवैडूर्यगल्वर्ककर्केतनगुणानपि । प्रशशंस मुहुस्तेषां खचितं ग्रथितं च तत् ॥ ९ ॥
पप्रच्छ मणिकारं च तेषां घट्टनकारणम् । अदर्शयत् सखीनां च पर्यधत्त च तत्क्षणम् ॥ १० ॥
लब्धसर्वाङ्गभृङ्गारः प्रदत्तनरवाहनः । विसृष्टश्चास्मि केशिन्या विहितावर्जनः स्वयम् ॥ ११ ॥
मयि चोत्थितमात्रेऽपि तत्सखीनां जजृम्भिरे । निरस्तप्रतिसीराणां नाना मङ्गलगीतयः ॥ १२ ॥
अथान्तर्धानमाधाय स्वेच्छासङ्कल्पसंभवम् । प्रचचाल स दिक्पालकार्यार्थी कुण्डिनं प्रति ॥ १३ ॥
अदृश्यमूर्त्तिना तेन पुरं प्रविशता सता । महाबलेन वैदर्भ्याः प्राणरूपायितं स्फुटम् ॥ १४ ॥
स्वयम्वरसमायातक्ष्मापालकुलसङ्कुले । न सेहे सहसा गन्तुं नलः सोत्कोऽपि तत्पुरे ॥ १५ ॥
अभ्रंलिहमहाशुभ्रवलीकवलभीशतम् । सामन्तसङ्कुलद्वारं नृपवेश्म स दृष्टवान् ॥ १६ ॥

अथ गन्धर्वकन्यानां गीतैस्तन्नामभूषणैः । दूरात् पिशुनितं सम्यक् स भैमीभुवनं ययौ ॥ १७ ॥
कस्यैते चरणन्यासाश्चक्रचापाब्जचिह्निताः ? । कस्येयं दृश्यते च्छाया प्रतिमेव मनोभुवः ? ॥ १८ ॥
कस्याभूत् पुरुषस्येव स्पर्शो मे पुलकप्रदः । अन्तर्धानं दृशोर्जातं मम किं चित्रदर्शने ? ॥ १९ ॥
इत्थं बभ्राम रामाभ्यः स रक्षंश्चित्तमात्मनः । सतां हि स्वप्रतिष्ठैव प्रायशः प्रथमाऽर्गला ॥ २० ॥
विश्वविश्वम्भरामारसर्वस्वैरेव निर्मिताम् । सौधशैलशिरःसीम्नि प्राप भैमीसभां नलः ॥ २१ ॥

दिष्ट्या गताऽद्य सकला दमयन्ति ! चिन्ता दूरीबभूव विरहज्वरयातना ते ।
अभ्यागतः स दयितस्तव सार्वभौमः प्रातश्चकोरि ! तव तन्मुखचन्द्रपानम् ॥ २२ ॥
विश्वम्भरा बलभरेण दिशो यशोभिर्दानेन मार्गणगणाः प्रमदेन लोकः ।
रूपामृतेन नयनानि तदेतदित्थं पूर्णं नलेन वसतीव जगत् समग्रम् ॥ २३ ॥
अद्याशिषो गुरुजनस्य जयन्त्यमोघा आद्यार्चनं च सफलं कुलदेवतानाम् ।
अस्माकमद्य सफलानि मनीषितानि प्राणप्रियस्तव यदद्य सखि ! प्रपन्नः ॥ २४ ॥
इत्थं पुरः प्रियसखीवचनानि पृच्छन् पश्यन् महीपतिसुतामहिमाद्भुतं तत् ।
आत्मानमिन्द्रहृतहर्षभरं स निन्दन् इत्थं स्वचेतसि भृशं विललाप भूपः ॥ २५ ॥

यत् पान्थैः शतशः पुरा निगदितं हंसेन यद् भाषितं लक्षांशेऽपि न तत् प्रयाति घटनां दृष्ट्वा मृगाक्षीमिमाम् ।

एतद् वाग्मनसाऽतिगं नु खलु भोः! किञ्चिन्महद्भूतवद् वागीशोऽपि न वेत्ति रूपमथवा क्वान्यो जनः प्राकृतः ? ॥ २६ ॥
स्वामिन्! शक्र! कथं त्वया न गिरिवद् वज्रेण भिन्नोऽस्म्यहं दिक्पालाः! न कथं भवद्भिरथवा शापेन भस्मीकृतः।
भैमीप्रेमपरंपरापरवशः प्रायः प्रहारं विना प्राणत्यागपरः कृतोऽहमधुना किं क्षात्रधर्मच्युतः ? ॥ २७ ॥
एतावदेव मम संप्रति हि प्रभूतं पश्यामि यत् क्षणमिमां सततं क्षितीशः।
इत्यन्तरुत्तरतरोत्कलिकाकुलः सन् भैमीं ददर्श सुरसार्थकदर्थिताशः ॥ २८ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने द्वितीये दूत्यस्कन्धे अष्टमः सर्गः ॥ ८ ॥

## द्वितीये दूत्यस्कन्धे नवमः सर्गः ।

प्रलम्बकुटिलस्निग्धनीलनीरन्ध्रकोमलः। केशपाशः कुरङ्गाक्ष्या व्याललीलां विगाहते ॥ १ ॥
अच्छचीनांशुकच्छन्नः केशान्तः कुसुमोत्करः। शरदभ्रान्तरग्रस्तो राहुणेव निशाकरः ॥ २ ॥
तदेतत् तिलकं भाले बालारुणसमप्रभम् विभावरीव विक्षिप्ता कबरी यस्य सन्निधौ ॥ ३ ॥
वदनामृतकुण्डस्य रक्षां कर्तुमिवानिशम्। नागो नागोदरच्छद्मा कण्ठपीठं निषेवते ॥ ४ ॥
इत्यस्याः सकले गात्रे महान् दोषोऽयमेव हि। अपि वर्षशतैस्तृप्तिः पश्यतः कस्यचिद् नहि ॥ ५ ॥

यदि भवति सहस्रं शक्रवल्लोचनानां न च भवति निमेषस्यान्तरायः कदाचित् ।
निरवधि च नृणां चेद् जायते जीवितव्यं तदपि क इह भैमीं प्रेक्ष्य पारं प्रयाति ? ॥ ६ ॥

स्वामिन् ! काम ! नमोऽस्तु ते कुरु कृपां केयं पुरो दृश्यते ? सत्यं ब्रूहि किमत्र भीमतनया हा हा ! हतोऽस्मि ध्रुवम् ।
एतस्याः कुलशीलरूपविभवं तादृग् मयि प्रेम च प्रत्यक्षं परिभाव्य हन्त ! भविता का नाम या मे गतिः ? ॥ ७ ॥

इत्थं तस्मिन् मनसि वदति स्वैरसङ्कल्पितानि प्रत्यासन्नव्यवहितरुचौ भूरि भूपालचन्द्रे ।
दूरागतप्रियपरिचयप्रेरणायेव भैम्याः स्पन्दं प्रापच्चकितशफरीचञ्चलं वामचक्षुः ॥ ८ ॥

दृष्ट्वा तां च प्रकटममुना लोचनागोचरेण प्रत्यग्रोऽभूत् पुलकविभवः कोऽपि तस्याः सखीनाम् ।
आलीढानां मलयमरुता माधवीनां लतानां सर्वाङ्गीणः स्वयमिव भृशं पल्लवोल्लासभावः ॥ ९ ॥

अथ कथमपि सन्निगृह्य कम्पं नृपतिलकः सहसा बभूव दृश्यः ।
क्षितिपतिदुहितुः सखीसमाजे नव इव कैरविणीवने शशाङ्कः ॥ १० ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने द्वितीये दूत्यस्कन्धे नवमः सर्गः ॥ ९ ॥



# द्वितीये दूत्यस्कन्धे दशमः सर्गः ।

तमपश्यन् पुरः सौम्यं विस्मिताः स्मितलोचनम् । यूथभ्रष्टभयत्रस्तमुग्धबालमृगीदृशः ॥ १ ॥
न सेहिरे निजां तस्य दृष्टिं योजयितुं दृशा । ललज्जिरे तमालोक्य क्ष्मापालकुलकन्यकाः (युग्मम्) ॥ २ ॥
अन्यासां स्मरसङ्काशं पश्यन्तीनां तमग्रतः । सन्तु त्रपाऽऽदयो भावाः स्वात्माऽपि खलु विस्मृतः ॥ ३ ॥
स समग्रोऽपि नारीणां समूहो मोहनिर्भरः । नलेन व्याकुलीचक्रे रोमाञ्चवृतिवेष्टितः ॥ ४ ॥
विदग्धाः शान्तसद्भावमसामान्यं विभाव्य तम् । न ताः कलकलं चक्रुर्यामिकागमशङ्कया ॥ ५ ॥
क्रीडामृगमयूराद्याः सर्वे पिकशुकादयः । तद्दर्शनात् क्षणं तस्थुरालेख्यलिखिता इव ॥ ६ ॥
निपेतुर्भीमनन्दिन्याश्वेतो भववशंवदाः । श्वेतकेतकपत्राणामुपहारोपमा दृशः ॥ ७ ॥
उभयोर्दृष्टिविक्षेपप्रेरिता इव तत् क्षणम् । ययुः प्रत्यङ्गमापुङ्खं भित्त्वा मारस्य मार्गणाः ॥ ८ ॥
पूर्वं नलधिया दृष्ट्वा सा पुनः प्राप संशयम् । सोऽपि तस्यां मनः कुर्वन् भूयो दूत्येन वारितः ॥ ९ ॥
परमब्रह्मलीनेव मग्नेवामृतवारिधौ । तन्मयत्वं प्रपन्नेव भैमी तद्दर्शनादभूत् ॥ १० ॥
कैश्चिद् नयनयोः पुण्यैः समानीताय गोचरम् । स्वागतं प्राणपूज्याय प्रथमावेशकाय ते ॥ ११ ॥
अतिथे ! विश्वलोकस्य लोचनानां फलप्रद ! । कन्यकायाः फलार्थोऽयमाचार इति गृह्यताम् ॥ १२ ॥

अध्यासीनेन नश्चित्तं प्रथमं दर्शनादपि । क्षेत्रकालार्हमेतद् मे कथं नासनमास्यते ? ॥ १३ ॥
अन्यतोऽपि यियासायां कर्त्तव्ये सुमहत्यपि । अनर्हेऽपि प्रदेशेऽस्मिन् हन्त ? विश्रम्यतां क्षणम् ॥ १४ ॥
उपरोधेन कस्यापि महार्घ्यमपि दीयते । तद् नः परिचयं दातुं कुतः कृपणता तव ? ॥ १५ ॥
शिरीषसुकुमारौ ते चरणौ निर्दयं मनः । अद्यापि हि कियद् दूरं कदर्थयितुमिच्छसि ? ॥ १६ ॥
कस्मिन देशेऽधुना ध्वान्तं ? कुत्र चन्द्रोदयोऽधुना ? । यतस्त्वं विनिवृत्तोऽसि यत्र त्वं वा यियाससि ॥ १७ ॥
धन्यास्ते मातृकावर्णा यैर्नाम तव निर्मितम् । तत्कर्णाभरणीकर्त्तुं कस्येह न हि कौतुकम् ? ॥ १८ ॥
सूचयन्ति निमित्तानि न पुनर्भाग्यनिश्चयः । कस्याप्यत्रातिथिस्त्वं यत् किं वा व्यर्थमनोरथैः ॥ १९ ॥

न प्रज्वलन् हुतवहः किमु लङ्घितोऽयं ? स्थाने यदत्र विषमे विहितः प्रवेशः ।
एतन्न साहसमियं च तनुः प्रशान्ता किं तत् प्रयासफलमित्यहह ! भ्रमो मे ? ॥ २० ॥
पुंनामभिः शिशुभिरप्यविभाव्यमेतत् स्थानं ध्रुवं त्वमसि नः सुकृतैः प्रपन्नः ।
यद् रक्षकैर्न कलितोऽसि निशातशस्त्रैर्दृष्टोऽसि यन्मदनसुन्दर ! लोचनाभ्याम् ॥ २१ ॥
पातालभूतलदिवामपि हि त्रयाणां धन्यं तदत्र भुवनं तव यत्र जन्म ।
मध्ये सुरासुरनरोरगमानवानां सा जातिरत्र जयिनी तव यत्र जन्म ॥ २२ ॥

यश्चण्डांशुः स खलु निखिलस्त्वत्प्रतापस्तदुष्णः कायच्छाया स तव नियतं तेन कामोऽप्यनङ्गः ।

तारानाथः स तव यशसां राशिरेतेन शुभ्रः सत्यं कोऽपि त्वमसि भुवने देवता देवतानाम् ॥ २३ ॥
इति किल नलबुद्धिं तत्र सङ्कल्प्य पूर्वं पुनरपि च महिम्ना देवमाशङ्कमाना ।
तमनु बहु बभाषे भूरि निर्भिन्नभावा किमपि किमपि भैमी चाड्गमैर्वचोभिः ॥ २४ ॥
इति श्रीमाणिक्यदेवसूरिकृते नलायने द्वितीये दूत्यस्कन्धे दशमः सर्गः ॥ १० ॥

## द्वितीये दूत्यस्कन्धे एकादशः सर्गः ।

तत् तस्या ललितं स्निग्धं विनीतं सरसं मृदु । अनुरूपं शरीरस्य वचोऽबुध्यत नैषधः ॥ १ ॥
मुधा मधु मुधा सीधु मुधा दुग्धं मुधा सुधा । मुधा वेणुर्मुधा वीणा दमयन्तीगिरां पुरः ॥ २ ॥
तैस्तैः स्तुतिपदैस्तस्याः क्लिन्नोऽपि न चचाल सः । आक्षिप्तः सिन्धुकल्लोलैर्वेलन्धर इवाचलः ॥ ३ ॥
स शक्रबद्धः संप्राप्य सपर्यां प्रियया कृताम् । आससादासनं हैमं सवितेवोदयाचलम् ॥ ४ ॥
स प्रतिश्रुतमेवार्यं धर्मवीरः स्मरन् हृदि । विनिर्धूतस्मरावेशः प्रत्युवाच नृपात्मजाम् ॥ ५ ॥
अलं कृत्वा वृथाऽऽयासं सुस्थिता भव सुन्दरि ! । भूतरूपैव नः पूजा विरमातिथिवत्सले ! ॥ ६ ॥
सफलं यद् विधातव्यं दूत्यं नः कमलानने ! । तदेव महदस्माकमातिथ्यं हि भविष्यति ॥ ७ ॥

उत्थिताऽसि कथं मुग्धे ! पुनरासनमास्यताम् । मा चिन्तय चकोराक्षि ! दुर्विनीतमिमं जनम् ॥ ८ ॥
कच्चिदस्खलितानन्दं हृदयं तव सुन्दरि ! । कच्चित् प्रियसखीवर्गे कुशलं कमलाक्षि ! ते ? ॥ ९ ॥
आकर्णय गिरं गौरि ! मदीयां मदिरेक्षणे ! । विद्धि दिक्पालपार्श्वाद् मां तवैवातिथिमागतम् ॥ १० ॥
कामं कौमारमारभ्य हृता गुणगणैस्तव । द्रुमा इव सरित्पूरैः शक्रार्किवरुणाग्नयः ॥ ११ ॥
बिभर्त्ति केवलं शक्रः कुण्डले कुण्डिनाख्यया । दमयन्ति ! भवन्नाम्ना तथा दमनकस्रजम् ॥ १२ ॥
तस्यापरोऽपि दिक्पालस्त्वद्वियोगाग्निसंभवम् । अनूनं मन्यते तापं स्वतोऽपि हि तनूनपात् ॥ १३ ॥
तस्य त्वद्विरहार्त्तस्य पूज्यमानस्य याज्ञिकैः । हाकारशब्दसामान्यं स्वाहाकारः प्रवर्त्तते ॥ १४ ॥
वैवस्वतोऽपि दिक्पालः स कालिन्दीमहोदरः । धर्मराजोऽपि रम्भोरु ! कामराज्यं समीहते ॥ १५ ॥
भवद्विरहविद्धस्य देहं दहति सन्ततम् । तस्य स्वदिग्भवो वायुर्गृहादग्निरिवोत्थितः ॥ १६ ॥
पश्चिमाधिपतिर्देवः स श्रीमान् वरुणोऽपि हि । त्वदर्थं जीवितव्येऽभूदपाशः पाशवानपि ॥ १७ ॥
निदाघकालतुल्यानि युगलक्षोपमानि च । अतिक्रान्तानि सापेक्षैरेतावन्ति दिनानि तैः ॥ १८ ॥
तव स्वयम्वरं ज्ञात्वा स्वर्गं त्यक्त्वा समागतैः । तैरिदानीं दिशामीशैर्भूरियं भूरि भूष्यते ॥ १९ ॥
समस्तन्यस्तसन्देशः प्रेषितः प्रेमसूचकः । तेषां जङ्गमलेखोऽयं जनस्त्वां समुपस्थितः ॥ २० ॥
एकैकशो दृढकुचद्वितयोपपीडमालिङ्ग्य निर्भरममी त्वयि सन्दिशन्ति ।

त्वं नः स्मरज्वलनजर्जरभूरुहाणां भीमोद्भवे ! भव नवामृतमेघवृष्टिः ॥ २१ ॥
तदिह सुरवरेषु त्वं विधाय प्रसादं कमलमुखि ! सुखेन स्वर्गमङ्गीकुरुष्व ।
वयमपि निवसामः क्ष्मातले तावकीने यदि तव सहवासप्रेम हातुं न शक्यम् ॥ २२ ॥
क इव स दिवसो नः कः क्षणः को मुहूर्त्तः ? किमिव तदथवा नः स्थानकं वा गृहं वा ? ।
वयमिह चरितार्थाः सर्वसंसारसारं कमलमुखि ! मुखं ते यत्र दृष्ट्वा भवामः ॥ २३ ॥
इत्थं तेषां त्वयि निरुपमं प्रेम वैदर्भि ! तस्माद् एषां मध्यात् कमपि रुचितं चेतसो लोकपालम् ।
देवेन्द्रं वा भुवनविदितं जीवितेशं यमं वा दीप्तं वाऽग्निं मरुतमभितः शीतलं वा वृणीष्व ॥ २४ ॥
इति श्रीमाणिक्यदेवसूरिकृते नलायने द्वितीये दूत्यस्कन्धे एकादशः सर्गः ॥ ११ ॥

## द्वितीये दूत्यस्कन्धे द्वादशः सर्गः ।

विचित्रं वचनं श्रुत्वा देवदूतस्य तस्य तत् । दधार हृदये दीर्घं विस्मयं दमनस्वसा ॥ १ ॥
अहो ! तेषां क्षितिस्त्रीषु देवानां स्ववर्धूजुषाम् । शर्करासेविनां नित्यं रुचिर्मागधिकास्विव ॥ २ ॥
ज्ञानेनापि न जानन्ति किं वा ? ते मां परस्त्रियम् । सुस्थितां हृदये धृत्वा सङ्कल्पितपतिं नलम् ॥ ३ ॥

अधिम्भि प्रहितं दूतमिमं तेषां विमृश्य च । जाने बभूव देवानां मन्त्रणे मूपकोऽपि न ॥ ४ ॥

दूतोऽपि रूपवानेवमस्माकं किं पुनर्वयम् ? । इत्ययं प्रहितो देवैर्यद्वा सर्वाङ्गसुन्दरः ॥ ५ ॥

अयं सौभाग्यपाथोधिः कश्चिद् दर्शनमात्रतः । अज्ञातनलनाम्नो हि कस्याः शीलं न लुम्पति ? ॥ ६ ॥

यथा हरति मे चित्तं तथाऽयं गूढचेष्टितः । स एवैष कथं देवः शत्रुः कालानलो नलः ? ॥ ७ ॥

तदस्य कस्यचिद् धातुद्रावटङ्कणरूपिणः । देशनामान्वयप्रश्ने मम कौतूहलं महत् ॥ ८ ॥

इत्यन्तश्चिन्तयन्ती सा देवसन्देशदुर्मनाः । उवाच वचनं भैमी तत्रैव बहुमानतः ॥ ९ ॥

देवदूत ! निरातङ्कं वचनं जल्पतोऽपि ते । क्रमभङ्गं सरस्वत्याः कुर्वतः पातकं न किम् ? ॥ १० ॥

मया नाम भवन्नाम पृच्छ्यमानस्य मानद ! । हस्तिस्नानमिवेदं ते स्वच्छन्दं वाग् विजृम्भिता ॥ ११ ॥

त्वन्नाम श्रोतुकामायाः किं श्रव्यैरपि मे परैः ? । नहि तोयार्थिनस्तृप्तिर्मधुभिर्मधुरैरपि ॥ १२ ॥

इति पर्यनुयुक्तः सन् भैम्ययुक्ताभिरुक्तिभिः । प्रत्यभाषत भूपालः पालयन्नुररीकृतम् ॥ १३ ॥

अयि ! रम्भोरु ! कोऽयं ते सारम्भं निरवग्रहः ? । मम नामान्वयप्रश्नो नितान्तं निष्प्रयोजनः ॥ १४ ॥

विनिषिद्धं च साधूनां स्वनामग्रहणं स्वयम् । न शक्तस्तेन तद् वक्तुं व्यवस्थाभङ्गकातरः ॥ १५ ॥

पुनस्त्वदनुरोधेन जल्पिष्यामि किमप्यहम् । मुग्धे ! हिमांशुवंशस्य परमात्रमवेहि माम् ॥ १६ ॥

इत्युक्ता चेतसा तस्मिन् न संपूर्णमनोरथा । उवाच सशिरःकंपमीषत्खिन्नेव भीमजा ॥ १७ ॥

मुच्यते श्रोतुकामस्य यदर्धकथिता कथा । स एष पिबतो वारि धाराच्छेद इवान्तरा ॥ १८ ॥
प्रकाश्य वंशमात्मीयं नामनिह्नवकारिणा । अर्धवञ्चनचातुर्यं भवता शिक्षितं कुतः ? ॥ १९ ॥
हन्त ! खेदयितुं लब्धो मुग्धोऽयं भवता जनः । चकोर इव चन्द्रेण दृश्यादृश्येन दुर्दिने ॥ २० ॥
क्वचिद् गूढा क्वचिद् व्यक्ता दुस्तरा दूरगामिनी । सरस्वतीव सेयं ते देवदूत ! सरस्वती ॥ २१ ॥
तन्मयापि न दातव्यं स्फुटं प्रतिवचस्तव । न योग्यः कुलबालानां प्रायो वक्तुं परः पुमान् ॥ २२ ॥
इत्युक्त्वा विरतां सद्यो मौनमुद्रावलम्बिनीम् । वाग्भिः सानुप्रवेशाभिः प्रत्युवाच पुनर्नलः ॥ २३ ॥
वदामि निखिलं तत् तद् मां पृच्छसि भामिनि ! । उक्तैनैव हि दूतानां वृत्तिर्वागुपजीविनाम् ॥ २४ ॥
त्वया विलम्ब्यमानेऽस्मिन् लीलया कार्यनिर्णये । इयत् प्रतीक्षमाणो मां कथं स्थास्यति वासवः ? ॥ २५ ॥
लोचनानां सहस्रेण मत्पन्थानं विलोकयन् । अधुना भगवानास्ते धिग् ममौत्सुक्यमन्थरम् ॥ २६ ॥
इति सानुशयप्राये तस्मिन्नुष्णं प्रजल्पति । साऽवदद् विनयाच्छीघ्रं स्वव्यलीकविशङ्किनी ॥ २७ ॥
को हि तेषां प्रतीक्षाणां दिक्पालानां महौजसाम् । विनयातिक्रमं कुर्याद् मूर्खो वा पण्डितोऽपि वा ? ॥ २८ ॥
नमोऽस्तु मे त्रिधा तेभ्यो भगवद्भ्यो दिवानिशम् । मिथ्या मे दुष्कृतं भूयात् तद्दूत ! त्वां विराध्य च ॥ २९ ॥
श्रुत्वाऽपि तदुदन्तं यद् न मया दत्तमुत्तरम् । तत्किंकर्त्तव्यतामोहाद् न त्ववज्ञा लवादपि ॥ ३० ॥
तथापि किं क्वचिद् देवा भजन्ते मानुषीं स्त्रियम् ? । अप्सरःकेलिहेलाढ्या हंसाः कोशातकीमिव ॥ ३१ ॥

बलं बुद्धिर्वयस्तेजः क देवानां क भूस्पृशाम् ? । उभयेषां क संयोगस्तेषां रत्नाश्मनामिव ? ॥ ३२ ॥
अनभ्यस्तश्च मर्त्यानां त्रिदशावर्जनक्रमः । किं हि ग्रामीणलोकानां गजारोहणकौशलम् ? ॥ ३३ ॥
पुरश्चिदशकन्यानां वराकी कैव मानुषी ? । सत्यां बकुलमालायां का लीला कुब्जकस्रजः ॥ ३४ ॥
तस्मात् किञ्चिद् यदभिरुचितं तत् प्रजल्पन्तु देवा न व्यापिद्धः खलु परिजने स्वामिनः कामचारः ।
तेषु प्रेम्णा क्षममनुचितं नैव भृत्यस्य कर्त्तुं सिंहाश्लेषं किल कलयितुं को मृगस्याधिकारः ? ॥ ३५ ॥

प्रतिमागतानिह जगत्पितामहान् प्रणमामि यानहमहर्निशं किल ।
मम किं त एव किमतः परेण वा न हि नाम देवचरितं विचार्यते ॥ ३६ ॥
स्वयम्वरविधिः स मे गुरुजनैः प्रसादीकृतो न हि त्वनुगतः स्फुटं निजकुलक्रमातिक्रमः ।
इतो विनयरक्षणं दिविषदामितः प्रार्थना किमत्र वद साम्प्रतं त्वमपि देहि शिक्षां मम ? ॥ ३७ ॥

बाला सम्यक् प्रतिगिरमहं तेषु दातुं न शक्ता तद् दाक्षिण्यं किमपि गणयन् मामकीनं त्वमेव ।
अस्यै पूज्यान् त्रिभुवनपतीन् रक्ष नीचस्पृहायै मा भूद् वीर! त्वयि सति सतां कोऽपि लोकापवादः ॥ ३८ ॥
देया सम्यक् सुमतिरुभयोरन्तरं रक्षणीयं सोढव्यं च स्खलितमखिलं मूढबुद्धेर्जनस्य ।
नित्या कीर्त्तिर्मनसि महती प्रेम सर्वत्र धार्यं धर्मः सोऽयं जगति सकलः शाश्वतः सज्जनानाम् ॥ ३९ ॥

इत्थं यतो नल उदेति तदेव सेव्यं सञ्चिन्त्य सा हृदि तमेव विबोध्य दूतम् ।

आबालकालकलितामलशीललीला नीलारविन्दनयना विरराम भूयः ॥ ४० ॥

इतिश्री माणिक्यदेवसूरिकृते नलायने द्वितीये दूत्यस्कन्धे द्वादशः सर्गः ॥ १२ ॥

## द्वितीये दूत्यस्कन्धे त्रयोदशः सर्गः ।

ततस्तस्याः समाकर्ण्य भक्तिकञ्चुकितं वचः । उवाह पुनरुत्साहं नाकिकार्याय नैषधः ॥ १ ॥
तद्वैदग्ध्येन तेनासौ विस्मितः स्मितपूर्वकम् । वाचस्पतिसमो वाग्मी तामुवाच वचस्विनीम् ॥ २ ॥
विनयद्वारपूर्वेण प्रतिषेधेण नाकिनाम् । न युक्तं तव वैदर्भि ! प्रत्याख्यातुमिमं जनम् ॥ ३ ॥
यत् तेऽपि त्वयि रागान्धास्त्वं च तेभ्यः पराङ्मुखी । तदेतदद्भुतद्वन्द्वं न च दृष्टं न च श्रुतम् ॥ ४ ॥
मानुषी न सुरानिच्छेदिति त्वत्तः श्रुतं नवम् । अहो ! निधिमुपायान्तं निर्धनः प्रतिषेधति ॥ ५ ॥
तव देवान् पतीयन्त्याः कथं किल कुलक्षतिः ? । किं मेरुशिखरारूढैर्नीचत्वमधिगम्यते ? ॥ ६ ॥
अकुलीनः कुलीनत्वं तत्प्रभावात् प्रपद्यते । नृपच्छत्रतलस्नातः शुद्धः स्याद् मलिनोऽपि हि ॥ ७ ॥
सामान्येऽप्युत्तमस्यापि क्वापि प्रेम प्रजायते । मृगमङ्के मृगाङ्कस्य पश्य प्रेम्णा पुरः कृतम् ॥ ८ ॥
त्वं हि कन्या कमप्यन्यं सामान्यमपि यास्यसि । त्वामिच्छन्ति स्वयं देवाः पर्याप्तं तद् न किं तव ?॥ ९ ॥

पूजनीयाः शरीरेण सर्वस्वेन च देवताः । तत् कोऽयं तव देवेषु भक्तिभङ्गो निरर्थकः ? ॥ १० ॥
प्रमाणीकुरु मे वाक्यं संप्राप्तं मां कृतार्थय । यदित्थं देवभक्तिस्ते यशश्च जगति ध्रुवम् ॥ ११ ॥
कश्चित् ते रोचते चित्ते मघवा मेघवारणः । वारणाधीशगमनो वरः स्वर्गमनोहरः ॥ १२ ॥
ममाप्यनुमतं तावत् व्रियतां पाकशासनः । कोऽन्यः किल सहस्राक्षात् त्वां वीक्षितुमपि क्षमः ? ॥ १३ ॥
विश्वैकपावके किं वा पावके तावकं मनः ? । नहि तेजस्विनोऽन्यत्र क्षत्रियाणां यतो रतिः ॥ १४ ॥
नूनं धर्मैकशीलाया धर्मराजः प्रियस्तव ? । यतस्त्वं बहुदाक्षिण्या स च दक्षिणदिक्पतिः ॥ १५ ॥
अस्तु वा तव स श्रीमान् वरुणस्तरुणो वरः । तरङ्गमालिनः स्वामी दत्तरङ्गो दिवानिशम् ॥ १६ ॥
इत्थं स्त्रवयतस्तस्य दीर्घं निःश्वस्य निःसहा । दृष्ट्वा सापि स वैलक्ष्यं वैदर्भी वाचमाददे ॥ १७ ॥
निष्कृपेण कृपापात्रे निर्दोषे दोषभाषिणा । एतदन्तकदूतत्वं त्वया व्यक्तीकृतं मयि ॥ १८ ॥
तप्तायःसूचिसङ्काशाः प्रविश्य मम कर्णयोः । हरन्ति हन्त ! मे प्राणान् गिरस्तव निरर्गलाः ॥ १९ ॥
स्वच्छन्दवादिनं वीर ! को हि त्वां वारयिष्यति ? । कल्पान्तमुक्तमर्यादं प्लावयन्तमिवार्णवम् ॥ २० ॥
इति सा केशिनीकर्णे सर्वमाख्याय वाचिकम् । साक्षिणीव क्षणं तत्र स्वयं तस्थौ नमन्मुखी ॥ २१ ॥
ततस्तमवदद् दूतं केशिनी पेशलोक्तिभिः । आकर्णय महाबाहो ! भवन्तं वक्ति भीमजा ॥ २२ ॥
किं वाञ्छन्ति परस्त्रियं दिविषदस्तत्त्वं विदन्तोऽपि ते कामार्त्तानपि तान् भजामि किमहं प्रासैकपत्नीव्रता ? ।

इत्यन्योन्यविरुद्धमीदृशमिदं त्वं वा कथं भाषसे ? विश्वस्य प्रलयं करोति कुपितो धर्मः सतां शाश्वतः ॥ २३ ॥
सङ्ग्रामेष्वचलः कलासु कुशलः सेवाजुषां वत्सलः सत्कीर्त्या धवलः स्वभावसरलः प्रत्यर्थिकालानलः ।
पूर्वं येन वृतो मया स सकलक्ष्मामण्डलाखण्डलः श्रीवल्लीनवकन्दलः पृथुबलः सौभाग्यसिन्धुर्नलः ॥ २४ ॥
अद्याऽऽयातः स मम वचनादत्र हित्वा स्वदेशं प्रीतिं धत्ते मयि च महतीं तादृशः सार्वभौमः
तस्यैतद् मे निखिलमधुना मण्डनं लग्नमङ्गे तस्मिन् भिन्नं भवति हृदयं किं कुलाचार एषः ? ॥ २५ ॥
विघटितवपुर्भूयो भूयः शशी घटतेतरां फलति कदली वारं वारं कुठार हताऽपि हि ।
मिलति सहसा सूतः खण्डीकृतोऽपि मुहुर्मुहुर्न तु पुनरियं सूते जिह्वा मृगारिवधूरिव ॥ २६ ॥
नैकस्तम्भे भवति नियतं मत्तमातङ्गयुग्मं शूरस्यापि प्रभवति तथा नैककोशेऽसियुग्मम् ।
नैवैकस्मिन् भवति गगने सूर्यबिम्बद्वयं वा नैवैकस्मिन् भवति वदने हन्त ! जिह्वाद्वयं तत् ॥ २७ ॥
उभयवदना सूची शक्ता न तन्तुविनिर्गमे क्वचिदपि कथं गन्तुं शक्यं द्वयोरपि मार्गयोः ? ।
किमिदमुचितं द्वौ भर्त्तारौ नरश्च सुरश्च तद् ? द्वयमसदृशं स्वेच्छाचारः कुलक्रम एव च ॥ २८ ॥
यदि युवजनकीर्त्तिस्तम्भमम्भोजवक्त्रं नलनृपमपहाय क्वापि पत्यौ परस्मिन् ।
वलति हृदयहस्ती तावदाजन्मतो मे सकलभुवनदीपास्तत् त एव प्रमाणम् ॥ २९ ॥
एतच्चिन्तामणिविजयि यच्चारु चारित्ररत्नं दत्तं सम्यग् भुवि भवजुषां भावभाजां जिनेन ।

तन् त्यक्तं यैः स्मरपरिनयात् पातितं तैः स्ववंशे रुद्रक्रोधज्वलनजनितं भस्म तत् कामनाम ॥ ३० ॥
शीलं हि चापलकणादपि याति नाशं पातक्षमं करतलाद् नहि काचपात्रम् ।
न ग्रुट्यति प्रणयिनीश्वसितोपमेन किं तालवृन्तमरुताऽपि मृणालतन्तुः ? ॥ ३१ ॥
माता माता गृहमपि गृहं किञ्च सख्योऽपि सख्यस्तातस्तातः कुलमपि कुलं बन्धवो बन्धवोऽपि ।
यन्मे चित्तं वपुरपि वयो जन्म वा जीवितं वा तत् तत् सर्वं निषधनृपतेर्नापरेषां नवा मे ॥ ३२ ॥
देवी देवं भुजगमुरगी दानवी दानवं वा वृक्षं वल्ली मृगमपि मृगी मानुषी मानुषं च ।
इत्थं नारी जगति घटते कान्तमात्मानुरूपं जानाम्येतद् न पुनरपरं मूलमार्गादमुष्मात् ॥ ३३ ॥
इह सुखमसुखं वा वाच्यता वा यशो वा भवतु नरकपातः स्वर्गलोकस्थितिर्वा ।
निधनमनिधनं वा यत् तदास्तां समस्तं तदपि न कुलजाता मूलमार्गं त्यजन्ति ॥ ३४ ॥
नहि कुलबहुमानं नापि कुत्रापि कोपः क्वचन च न ममेर्ष्या कुत्रचिद् नैव लोभः ।
किमपरमपि दासी दिक्पतीनां च तेषां न च नलनृपवर्जं कान्तमन्यं करोमि ॥ ३५ ॥
स प्राचीशः स तपनसुतः स प्रचेताः स वह्निश्चन्द्रः सूर्यः स मम हृदये नैषधः सार्वभौमः ।
मत्स्थाने तमिह वृणु यां पञ्चमं लोकपालं तद् देवेषु प्रभवति तदा कीदृशो मेऽपराधः ? ॥ ३६ ॥
किमिह बहुना तावत् प्रातः स्वयम्वरणस्रजा मम हि समयस्तं प्राणेशं महीपतिमर्चितुम् ।

तदिह भवता वक्तव्याऽहं न दिक्पतिवाचिकं मयि कुरु कृपां कोपं मुञ्च प्रसीद कृतोऽञ्जलिः ॥ ३७ ॥

खगनखमुखोत्कीर्णाकारः पुरा ददृशे मया तव सुसदृशः क्षोणीपालः स मे हृदयेश्वरः ।
भवतु पुरतः प्रातर्दृष्टा तवापि मम प्रियं स्वमुखकमलच्छायालोको विना मणिदर्पणम् ॥ ३८ ॥

इति केशिनीवदनमार्गनिर्गतं दमनस्वसुः सुवचनामृतं नृपः ।
नवपद्मनालविवरापवाहितं पिबति स हंस इव सारसं पयः ॥ ३९ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने द्वितीये दूत्यस्कन्धे त्रयोदशः सर्गः ॥ १३ ॥

## द्वितीये दूत्यस्कन्धे चतुर्दशः सर्गः ।

इत्थमभ्यर्थ्यमानोऽपि प्रियया प्रियसाहसः । पुनस्त्रिदशकार्यार्थी स वक्तुमुपचक्रमे ॥ १ ॥

अहो ! जगति पानीयक्षीरपार्थक्यपण्डिता । साऽपि हंसी न जानाति सेवालकमलान्तरम् ॥ २ ॥

लोष्ठानां च मणीनां च तेजसां तमसां च यत् । नराणां च सुराणां च पङ्कजाक्षि ! तदन्तरम् ॥ ३ ॥

क्व मनःसाधना देवाः ? क्व मर्त्याः कष्टकारिणः ? । क्व वपुस्तैजसं चैकं ? क्वान्यद् धातुमयं वपुः ? ॥ ४ ॥

त्वया नलाभिलाषिण्या मुक्तवासववासया । इक्षुद्वेषी शमीसक्तः करमोऽपि विनिर्जितः ॥ ५ ॥

आः ! क एप नलो नाम स्वामी देशस्य कस्यचित् । मनुष्यश्चर्मचक्षुष्मान् स्वल्पसङ्ख्येयजीवितः ॥ ६ ॥
लोकानामुत्तमः स्वर्गः स्वर्गिणां त्रिदिवौकसः । तेपामपि हि स श्रीमान् महेन्द्रः परमावधिः ॥ ७ ॥
प्रयत्नं कुर्वतां क्वापि प्रमादः स्याद् विशेपतः । पङ्किले रक्षतः पादौ कदाचिल्लिप्यते शिरः ॥ ८ ॥
मज्ञाता हि पुराऽप्येते संयोगा दिव्यमानुपाः । श्रूयते भरतादीनां गङ्गाद्या दिव्ययोपितः ॥ ९ ॥
कुपितेपु न देवेपु महेन्द्रवरुणादिपु । त्वां वरीतुं वरारोहे ! शक्तिरस्ति नलस्य किम् ? ॥ १० ॥
कुमारीवरयोर्योगे यमः कमपि वा यदि । अन्तं नयति दायादं क्व ततः स्याद् महोत्सवः ? ॥ ११ ॥
संप्रदानविधौ तं मुञ्चेद् न वारि वरुणोऽपि चेत् । प्रसारितकरोऽपि त्वां तदा किं लभते नलः ? ॥ १२ ॥
नलनिर्वेदतो वेद्यां यदि ज्वलति नानलः । अनग्निसाक्षिकः स स्यात् तद्विधिः सारसाक्षिकः ॥ १३ ॥
उपायेनापि दिक्पाला विघ्नं कर्त्तुमिति क्षमाः । प्रत्यक्षं तेपु रुष्टेपु नास्त्येव शरणं तव ॥ १४ ॥
किमेकमेककालं च हरिणा कारयिष्यसि ? । सर्वेपां क्षितिपालानां वध्यस्थानं स्वयम्वरम् ॥ १५ ॥
कुपितेन कृतान्तेन गृहीतासुपु जन्तुपु । कपालमालिनो हर्पः किं हरस्य करिष्यति ? ॥ १६ ॥
निर्मर्यादं विनिर्मुक्ते वरुणेन महार्णवे । जलाञ्जलिक्रिया नूनं जगतोऽपि भविष्यति ॥ १७ ॥
इत्थं दिक्पालकोपेन त्वदनादरजन्मना । असावकालकल्पान्तस्त्वन्निमित्तमुपस्थितः ॥ १८ ॥
उत्सर्गमपवादं च द्वयं जानीत बुद्धिमान् । तत्त्वज्ञे ! राजकन्याऽसि कथमित्थं विमुह्यसि ? ॥ १९ ॥

इति तद्वचनं श्रुत्वा साभिमानं मनस्विनी । साशङ्का च सदुःखा च वाचमूचे विदर्भजा ॥ २० ॥
न नाम दूत ! दोषस्ते सत्यमुक्तं त्वयाऽखिलम् । जानामि न च नाहं वा प्रभावं त्रिदिवौकसाम् ॥ २१ ॥
कः करेण स्पृशेदर्कं बाहुभ्यां कोऽब्धिमुत्तरेत् ? । कः पद्भ्यां लङ्घयेद् मेरुं को युद्धेन सुरान् जयेत् ? ॥ २२ ॥
यत् किञ्चिदपि वाञ्छन्ति तत् सर्वं साध्यते सुरैः । न कोऽपि प्रतिमल्लोऽस्ति तेषामिह महौजसाम् ॥ २३ ॥
न धर्माय न लोभाय न सुखाय कथञ्चन । एवमेव हि भूपाले तस्मिन् मम रतं मनः ॥ २४ ॥
निष्कारणमिह प्रेम प्रायः कुत्रापि जायते । किमर्थमिह पद्मिन्या देवे दिनपतौ रतिः ? ॥ २५ ॥
विषेण मोदते केकी चकोरस्तेन रोदिति । प्रियो हरस्य धत्तूरः केतकी वैरकारणम् ॥ २६ ॥
चन्द्रस्य रतिरिङ्गाले निम्बे रक्तो दिवाकरः । कस्यचित् क्वचिदप्रीतिः कस्मैचित् कोऽपि रोचते ॥ २७ ॥ युग्मम्
स्वयमुत्पद्यते विश्वं स्वयमेव प्रलीयते । व्योमेव परमं ब्रह्म मेघाभ्राणि जगन्ति च ॥ २८ ॥
जानामि देवतावृत्तं जानामि स्वपराभवम् । तथापि न कथञ्चिद् मे मनस्तस्माद् निवर्त्तते ॥ २९ ॥
स भवतु मनुजो वा यादृशस्तादृशो वा गुणगणपरिपूर्णः सर्वथा निर्गुणो वा ।
तदपि न रमते मे वीरसेनस्य पुत्रं गगनमिव मृगाङ्कस्तं विनाऽन्यत्र भावः ॥ ३० ॥
किमिह बहुभिरुक्तैर्निश्चयः श्रूयतां मे यदि न भवति भर्त्ता नैषधः क्षोणिपालः ।
जलगरलहुताशोद्बन्धनाद्यैरुपायैस्तदहमिह समन्तादात्मघातं करोमि ॥ ३१ ॥



नल एव मे प्रिय इति दमयन्त्या निश्चयः॥

समं मखभुजां रुषा वपुषि मे विनाशं गते समं मम मनोरथैर्विदलितेषु मे बन्धुषु ।
भवन्तु जगतीजुषः सकलसौख्यभाजः प्रजाः सतां हृदयदाहिना किमिह जीवितव्येन मे ? ॥ ३२ ॥
तदतिशयसदुःखं साभिमानं सशङ्कं वचनमिदममुष्या वैरसेनिर्निशम्य ।
निजमनसि निकामं विस्मयव्याकुलोऽभूदमरपतिविधेयात्यन्तचिन्तापरोऽपि ॥ ३३ ॥
कश्चिद् नवो मधुरिमाऽभिनवं सुशीलं प्रेमाप्यहो ! मयि च किञ्चिदपूर्वमस्याः ।
किं ब्रूमहे तदिह भीमभुवः प्रतिष्ठां ? नेयं प्रयाति विकृतिं हि भवान्तरेऽपि ॥ ३४ ॥
एतां विहाय भुवि कैव बभूव सा स्त्री यस्यां स्वयं सुरवरैर्विहितोऽनुरागः ।
स्वोपज्ञकान्तरसभावविक्रिया कया वा ? शक्रादयोऽपि गणिता न हि याचितारः ॥ ३५ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने द्वितीये दूत्यस्कन्धे चतुर्दशः सर्गः ॥ १४ ॥

## द्वितीये दूत्यस्कन्धे पञ्चदशः सर्गः ।

इति चेतसि सञ्चिन्त्य मृद्व्यां काठिन्यमुद्वहन् । एकान्तकृतदिक्पालपक्षपातं जजल्प सः ॥ १ ॥
वशीकृता नलेन त्वं यन्त्रमन्त्रादिभिर्ध्रुवम् । निःशेषदेवनाथं यद्धरिं हित्वा नले रतिः ॥ २ ॥

यदि त्वं त्रिदशक्रोधादात्मघातं करिष्यसि । तद् भविष्यति किं तेषां कलङ्कोऽनुशयो नु वा ? ॥ ३ ॥
घृणा जन्तुषु दीनेषु न लोकोत्तरतेजसाम् । क्व पतत्सु पतङ्गेषु दया दीपस्य जायते ? ॥ ४ ॥
अम्भोधौ मग्नपोतानां यथा न शरणं क्वचित् । तथा दिक्पतिभीतानां न स्थानमिह वर्त्तते ॥ ५ ॥
यदि त्वं कण्ठपाशेन व्योमसंस्था विपद्यसे । तत् पतिर्गगनस्थानां वासवः किं न नेष्यति ॥ ६ ॥
यदि वह्निप्रवेशेन प्राणत्यागं करिष्यसि । ततस्त्वं तस्य संप्राप्ता स्वयमुत्सङ्गसङ्गिता ॥ ७ ॥
जुहोषि यदि वा देहं जले जलजलोचने ! । सिद्धानि पयसां पत्युस्तत् कार्याणि जगत्त्रये ॥ ८ ॥
विधिनाऽन्येन केनापि दिष्टान्तं चेद् विधास्यसि । ततः प्रियातिथीभावं धर्मराजस्य यास्यसि ॥ ९ ॥
इत्थं भक्त्या च शक्त्या च दुःखेन च सुखेन च । इह चामुत्र च प्राप्तो दिक्पालानां ग्रहस्तव ॥१०॥
तद् विहाय नलं शीघ्रं दिक्पालानुररीकुरु । मुग्धे ! मुञ्च महामोहं स्वर्गभोगान् भज स्वयम् ॥११॥
इत्थमर्थयमानं मां प्रमाणीकुरुषे न चेत् । अहमेव किल द्वेषी तत्पूर्वं तव संप्रति ॥१२॥
इति तद्वाग्महामन्त्रदृढावेशविसंस्थुला । सहसैव हि वैदर्भी बुद्धिभ्रंशमवाप सा ॥१३॥
तथेति प्रत्ययं चित्ते तन्वाना स्विन्नविग्रहा । बभूव शुष्ककण्ठौष्ठी भयभ्रान्ता सवेपथुः ॥१४॥
सञ्चिन्त्य च प्रियवियोगमसाध्यमन्तः सा निःसहा निबिडमन्युनिरुद्धकण्ठी ।
मन्दं रुरोद भयनिर्भरमीक्षमाणा दीनेन साश्रुनयनेन सखीजनेन ॥१५॥

आपानजर्जरतरैः पृथुभिः समन्ताद् विक्षिप्तसूक्ष्मकणिकोत्करके सराढ्यैः ।
तन्नाऽपविन्दुभिरभूष्यत भूमिपीठं सद्यः कदम्बकुसुमप्रकरं हसद्भिः ॥१६॥

हा ! तात ! तात ! विहितस्त्रिदशैस्तवायं क्रुद्धैः स्वयम्वरविधिर्विफलः सुतायाः ।
यस्याः स्वकीयमपि नास्ति सुखं हताशा सा किं करोतु तनया तत्र तात ! सौख्यम् ॥१७॥

हा नाथ ! विश्वजनवत्सल ! मां कथं न श्रीवीरसेनसुत ! रक्षसि दिक्पतिभ्यः ।
आराधिता हि सततं भवता पुराऽपि स्थास्यन्ति किं तव ते मुखलज्जयापि ? ॥१८॥

श्लाघ्यस्त्वदर्थमिह मृत्युरपि ध्रुवं मे भूयात् त्वया सह वरं नरकेऽपि वासः ।
यः पूर्वमित्थमिह मे हृदयं दुनोति कीदृक् करिष्यति सुखं त्रिदिवा स पश्चात् ॥१९॥

यस्मिन् पुराणसुकृतव्यय एव नित्यं नैवाज्र्यतेऽभिनवधर्मलवोऽपि यत्र ।
उच्छृङ्खलः परिवृढः कठिनाश्च भृत्यास्तस्मै नमोऽस्तु सकलाय सुरालयाय ॥२०॥

हा तात ! हा जननि ! हा स्वजनाः ! समस्ताः । कस्य प्रयामि शरणं शरणोज्झिताऽहम् ? ।
युष्मासु कः किल ममाद्य नलं हि कान्तं ? कर्त्तुं क्षमः प्रकुपितेषु दिगीश्वरेषु ॥२१॥

प्राणाः प्रयान्ति मम नूनममी इदानीं जिह्वे ! समुच्चर भृशं नलनाममन्त्रम् ।
यन्नैकदाऽपि दयितेन निरीक्षिताऽहं तन्मे दुनोति हृदयं मरणागमेऽस्मिन् ॥२२॥

इति वदनसमक्षं भीमभूपालपुत्रीं कलमृदुविलपन्तीं वीक्ष्य विक्षिप्तचित्तः।
स सपदि सुरदूत्यं तत्र विस्मृत्य वीरः सुललितमिदमूचे वाक्यमाश्वासनाय ॥२३॥
विरम विरम कान्ते ! न प्रिये ! रोदितव्यं मलिनयति मुखं ते हन्त ! बाष्पाम्बुपूरः।
अयि ! कथय किमर्थं धार्यते देवि ! दुःखं विलुठति चरणान्ते नन्वयं नैषधस्ते ॥२४॥
सफलय मम शीघ्रं देवि ! सिंहासनार्द्धं ननु सुमुखि ! मदीयोत्सङ्गमङ्गीकुरुष्व।
अहह ! किमिदमुक्तं क्षम्यतां वाक्यमेतत् तव खलु विपुलं मे वक्ष एवासनं यत् ॥२५॥
इत्थं वदन् विपुलमन्मथमन्थराणि वाक्यानि कानिचन तां प्रति राजसिंहः।
स स्वं विवेद पुनरेव हि देवदूतं योगीव कालवशवृत्तसमाधिभङ्गः ॥२६॥
अहह ! बत मयाऽऽत्मा किं प्रकाशीकृतोऽयं ? किमिव स मम वक्ता दूषणं देवराजः।
न कृतममरकृत्यं खेदिता राजपुत्री द्वयमपि हि विनष्टं वञ्चितो वञ्चितोऽस्मि ॥२७॥
स्खलितमिह यदेतद् यत्नभाजोऽपि जातं ददति मम न तस्मिन् दूषणं लोकपालः।
कथमनुचितवादी रञ्जनीयो जनोऽयं ? स हि सततमतूर्यं नर्त्तितुं वेत्ति सम्यक् ॥२८॥
इति तमथ समन्ताच्छोचमानं नलोऽयं ध्रुवमिति दमयन्ती चेतसा चिन्तयन्ती।
व्यवहितसुरनाथप्रार्थनातङ्कशङ्का सपदि विपुललज्जावारिराशौ ममज्ज ॥२९॥

निरुपमरमणीयं व्यक्तसौभाग्यभाजः सपदि निषधभर्त्तुः सन्निधौ सा निषण्णा ।
किमपि हि वलितुं वा वीक्षितुं जल्पितुं वा श्वसितुमपि न सेहे ह्रीलतापाशबद्धा ॥३०॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने द्वितीये दूत्यस्कन्धे पञ्चदशः सर्गः ॥ १५ ॥

## द्वितीये दूत्यस्कन्धे षोडशः सर्गः ।

अत्रान्तरे तरन् व्योम्ना मनसो विस्मयं ददत् । कुर्वाणः कूजितं रौप्यकिङ्किणीक्वाणकोमलम् ॥ १ ॥
आमभ्रशापपर्यन्तचिन्तासन्तुष्टमानसः। समाजगाम वेगेन बालचन्द्रः स पक्षिराट् ॥ २ ॥
जयशब्दमुखः पक्षी प्रत्यभिज्ञाय भूभुजा । विहितावर्जनः प्रीतः प्रत्युवाच विचक्षणः ॥ ३ ॥
यदित्थमयमेतस्यां द्राक् निष्कारणवैरिणा । कुकूल इव मालत्यामातङ्को निहितस्त्वया ॥ ४ ॥
अहो ! ते सौम्यरूपस्य हृदयं हन्त ! निर्दयम् । कोमलस्यापि नालं वा कमलस्य हि कर्कशम् ॥ ५ ॥
राजपुत्रि ! न भेतव्यं भवत्या नृपभाषितैः । वाक्पारुष्यमयः सोऽयं दूतानां धर्म एव हि ॥ ६ ॥
न महेन्द्रादयो देवा बलात् कुर्वन्ति किञ्चन । असुराणामयं धर्मो यदेवं ग्रहणं स्त्रियः ॥ ७ ॥
देवदूत्यमियत्कालं त्वया राजन् ! समर्थितम् । भूयः कण्ठगतप्राणामपेक्षस्व प्रियामपि ॥ ८ ॥

इयन्तमवधिं यावज्ज्वलन्तीं विरहाग्निना । नैनां दुर्वाक्यवात्याभिरुद्दीपयितुमर्हसि ॥ ९ ॥
मृदुत्वं मृदुषु श्लाघ्यं काठिन्यं कठिनेष्वपि । भृङ्गः क्षिणोति काष्ठानि प्रसूनं न दुनोति च ॥ १० ॥
महीपतिसुताऽप्येषा तिर्यञ्चमपि मां पुरा । दासीव त्वदुदन्तार्थमभ्यर्थितवती भृशम् ॥ ११ ॥
प्रसीद सदयं राजन्निदमभ्यर्थसे मया । देवार्थप्रार्थनाभङ्गं भैम्यास्त्वं सोढुमर्हसि ॥ १२ ॥
स्वयम्वरं प्रपन्नेषु प्रातस्त्वयि च तेषु च । स्वमनीषितमेवेयं राजपुत्री वितन्वताम् ॥ १३ ॥
एतर्हि गर्हितादस्मात् स्वामिन् ! विरम कर्मणः । द्रुतं व्रज निजावासं स्वल्पा संप्रति यामिनी ॥ १४ ॥
अस्ति च त्वद्गृहं प्राप्तः पाकशासनशासनात् । त्वदीयनिर्गमापेक्षी नैगमेषी सुरोत्तमः ॥ १५ ॥
स्वस्ति वां श्वः समासन्नमङ्गलाभ्यां मनस्विनौ । इत्थमापृच्छ्य तौ विद्वान् प्रसभं प्रययौ खगः ॥ १६ ॥

तस्मिन् गते सरभसं मुदिता समन्ताद् भैमी वरं तमुपलभ्य महेन्द्रदूतम्
चक्रुः प्रणम्य शिरसा विनयावनम्राः सख्यः क्षितीशदुहितुः पुनरर्घमस्मै ॥ १७ ॥

केयूरि ! केसरिणि ! केरलि ! केतकाक्षि ! कौमारि ! कौतुकिनि ! कौमुदि ! कामसेने ! ।
कक्कोलि ! केकिनि ! कलापिनि ! कम्बुकण्ठि ! कर्पूरकेलि ! करयोः करकं कुरुध्वम् ॥ १८ ॥

दूर्वादुकूलदधिचन्दनशालिरत्नमुक्ताफलप्रभृतिभिर्भुवनावतंसम् ।
अभ्यर्च्य ताः प्रणयगद्गदकण्ठमित्थं तस्मै स्वयम्वरनिमन्त्रणमन्ववोचन् ॥ १९ ॥

अथोत्थितः सत्वरमेष भैमीमनुव्रजन्तीं प्रसभं निषिध्य ।
अन्तर्दधे वज्रधरप्रभावः स्वभावधीरो निषधाधिराजः ॥ २० ॥
अद्य ध्रुवं त्रिभुवनं वशवर्त्ति जातं नूनं मया च सदृशः सुकृती न कोऽपि ।
प्राप्तः प्रसन्नमहिमा गृहमभ्युपेतः प्राणेश्वरः स मम लोचनगोचरं यत् ॥ २१ ॥
इत्थं प्रभूतभयविस्मयहर्षशोकस्तम्भत्रपापरवशं हृदयं दधाना ।
तत्तद्विधानकमपूर्वमनुस्मरन्ती भैमी सखीपरिवृता शयनीयमाप ॥ २२ ॥
संप्राप्तः स्वशिविरसन्निवेशमुच्चैस्तत् सर्वं निजकरणीयमभ्युदीर्य ।
प्रीतेन प्रतिवलसूदनं विसृष्टस्तुष्टाऽऽत्मा निषधनृपेण नैगमेषी ॥ २३ ॥
इति विधाय वचः स दिवौकसामनवमङ्गलगोचरजीवितः
गमयति स्म कथञ्चन यामिनीं ससमयं शयने शयितो नृपः ॥ २४ ॥
एतत् किमप्यनवमं नवमङ्गलाङ्कं यन्निर्ममे मुनिमनोहरयोर्विधाता ।
तस्याऽऽर्यकर्णनलिनस्य नलायनस्य स्कन्धो जगाम रमणीयरुचिर्द्वितीयः ॥ २५ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने द्वितीये दूत्यस्कन्धे षोडशः सर्गः ॥ १६ ॥

इति द्वितीयः स्कन्धः समाप्तः ।

# तृतीयः स्कन्धः ।

## तृतीये स्वयंवरस्कन्धे प्रथमः सर्गः ।

ततः कृत्वा तमावेशं वैदर्भीनलयोस्तयोः । ययौ कुर्कुटशब्देन शाकिनीव विभावरी ॥ १ ॥
क्रथकैशिकनाथस्य शासनेन महीपतीन् । प्रावर्त्तन्त समाह्वातुं सचिवाः शुचिवादिनः ॥ २ ॥
शचीबलिविधानस्य भेरीभाङ्कारमिश्रिताः । विष्वग् जजृम्भिरे वारनारीमङ्गलगीतयः ॥ ३ ॥
इत्थं दिनमुखे तस्मिन् देवदूत्यकदर्थितम् । प्राबोधयन् प्रसुप्तं तं नलं वैतालिका नृपम् ॥ ४ ॥
सारस्वतमयमूर्त्तिर्धर्मात्मा जगति विजयते वीरः। अपि दानैरपि कीर्तिभिराशाः परिपूरयन् सकलाः ॥ ५ ॥

कलाकेलिकल्लोलिनीलब्धपारः कुले वीरसेनस्य धर्मावतारः ।
जयश्रीवधूकण्ठशृङ्गारहारः सदा नैषध ! त्वं सदाचारसारः ॥ ६ ॥

धीरपि कुशाग्रनिशिताऽसितप्रभं करतले च करवालम्। भरतावनीशकुलकमलिनी दिनकरस्य पृथुयशसः ॥ ७ ॥

यशोराशिभिर्निर्जितक्षीरनीरः परानीकिनीमेघमालासमीरः
कथं वर्ण्यसे वीरकोटीरहीरः ? क्षितौ नैषध ! त्वं हि गम्भीरधीरः ॥ ८ ॥

भीमभूपतिना स्वयम्वरार्थं प्रेषिताः सचिवाः ॥

महाधर्मनिर्माणबद्धावधानः प्रमोदप्रधानः प्रसिद्धिं दधानः ।
न कश्चित् परो दत्तमन्मानदानः क्षितौ नैपधक्ष्मापते ! त्वत्समानः ॥ ९ ॥
शीतलमचन्दनद्रवममूलमन्त्रं जगद्वशीकरणममृतमसामुद्रमिदं गीतमहो ! नैपधनृपस्य ॥ १० ॥
अहो ! नैषधस्य क्षितीशस्य गीतं क्षणं यैरभिव्यक्तवर्णं निपीतम् ।
स्मरन्ति ध्रुवं तेन दत्तं गृहीतं न जानन्ति ते केचिदुष्णं न शीतम् ॥ ११ ॥

षट्पदी

आगमतर्कपुराणवेदपरमार्थविशारद ! याचकजनचातकसमूहनवकाञ्चनवारिद ! ।
वापीकूपतडागचैत्यमण्डितभूमण्डल ! निर्मलतरनिजकीर्त्तिनिचयनिर्जितविधुमण्डल ! ।
आबालकालकलिमलरहित ! धर्मकर्मनिर्माणपर ! तव सुप्रभातमनुदिनमुदितवीरसेनसुत ! नृपवर ! ॥ १२ ॥

सर्वलघुरेकस्वरः

अमलतम ! सरल ! नवकमलदलसमचरण ! समरभरतरलतर ! सकलभटमदहरण ! ।
घनरवजलजलदरव ! मदनरसमयकरण ! भरतनरवरतनय ! जय सभयजनशरण ! ॥ १३ ॥
अलिकुलविलुलितमृदुदलविसरसरसिजवनतनुविरचितविभवम् ।
विभवद ! विदलितरिपुजन ! सविता वितरतु तव नृप ! सुखमुपसि भृगम् ॥ १४ ॥

अयमपि सुरतश्लथजनसुखदो विलुलितसकलद्रुमकुसुमचयः ।
दिशि दिशि शिशिरः श्रमजलविजयी । दिनवदनभवः प्रवहति पवनः ॥ १५ ॥
इयमपि रमणीया जातरूपाऽऽत्मकस्य त्रिदशनिकरभाजो भूधरस्योपकण्ठम् ।
यदरुणकरमाला दृश्यते संपतन्ती तदुदयसमयोऽयं त्यज्यतां नाथ ! निद्रा ॥ १६ ॥
इत्थं तेषामनुपमविभवः श्रुत्वा वाचं क्षितिपतितिलकः ।
त्यक्त्वा तल्पं सरसिजवदनः प्रातःकृत्यं स सपदि विदधे ॥ १७ ॥
नैवेद्यपुष्पफलचन्दनधूपदीपतोयाक्षतैः क्षितिधरप्रवरस्तदानीम् ।
अभ्यर्च्य भक्तिपरमः परमेष्ठिनं स प्रीतस्ततः स्तुतिमिमामपठत् पटिष्ठः ॥ १८ ॥
विश्वस्थितिस्थपतये भगवन् ! जना ये तुभ्यं नमन्ति कमलासनसंस्थिताय ।
ब्राह्मीपितुर्निरुपम ! ध्रुव ! सर्वथापि तेषां हि नाभिभव ! नाभिभवः कदापि ॥ १९ ॥
स्वामिन् ! जटामुकुटमालितमौलिभागं कन्दर्पदर्पदलनं वृषभध्वजं त्वाम् ।
ध्यायन्ति ये हृदि महेश्वर ! भव्यसत्त्वाः सर्वज्ञ ! ते शिवपदं सहसा लभन्ते ॥ २० ॥
लक्ष्मीनिवास ! नरकान्तक ! सौम्यरूप ! श्रीवत्सलाञ्छन ! सनातन ! विश्वनाथ ! ।
भास्वत्सुदर्शन ! विभो ! पुरुषोत्तम ! त्वां नत्वा प्रियं जिन ! जना जनयन्ति किं न ? ॥ २१ ॥

इत्थं प्रणम्य पुरतः पुरुषोत्तमं तं शंभुं जगत्त्रयगुरुं परमेष्ठिनं च ।
शृङ्गारमारभत कर्तुमनन्तरं स श्रीमान् स्वयम्वरसमाजमुपेतु कामः ॥ २२ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने तृतीये स्वयम्वरस्कन्धे प्रथमः सर्गः ॥ १ ॥

## तृतीये स्वयम्वरस्कन्धे द्वितीयः सर्गः ।

अथाऽऽजग्मुर्जगन्मौलिमण्डनाः कुण्डिनान्तरे । स्वयम्वरं स्वयं वीरा महीभाजो महाभुजाः ॥ १ ॥
प्राक्प्रत्यगुदगवाचां दिग्मुखानामधीश्वराः । तत्रामिलन् महीपालास्तले रविरथस्य ये ॥ २ ॥
वरीतुं कुलजाः केऽपि हर्तुं धीरोद्धताः परे । द्रष्टुमन्ये महासत्त्वाः स्पृहयन्ति स्म भीमजाम् ॥ ३ ॥
अकामुको न कोऽप्यासीद् नाभूत् कश्चिदनागतः । कतमोऽपि तदा तत्र न चाभवदनीश्वरः ॥ ४ ॥
चकाशमासिरे तुङ्गा मञ्चाः काञ्चननिर्मिताः । अपि चेतसि कुर्वाणा विस्मयं विश्वकर्मणः ॥ ५ ॥
रत्नसिंहासनाऽऽसीना मञ्चेषु पृथिवीभुजः । गिरीन्द्रशिखरस्थानां चक्रुः केसरिणां श्रियम् ॥ ६ ॥
सन्ध्याभ्रसन्निभैश्छन्नं वितानैर्निखिलं नभः । नृपाणामनुरागस्य पटलैरिव देहिभिः ॥ ७ ॥
सुवर्णाण्डकमञ्चाग्रैः सुवर्णकलशैस्तदा । बभावुदितबालार्कसहस्रमिव पुष्करम् ॥ ८ ॥
दन्दह्यमानकर्पूरकृष्णागरुसमुद्भवैः । रुद्धा दश दिशो धूपैरकालजलदैरिव ॥ ९ ॥

ततस्ततघनानद्धशुषिराक्षरभेदतः । पञ्चशब्दसमाहारः समकालमजायत ॥१०॥
मृदङ्गशङ्खभेरीणां झुम्बर्याः पणवस्य च । झल्लरीवेणुवीणानां डक्काडमरयोरपि ॥११॥
इत्येतेषामनेकेषामन्येषामपि निर्भरः । ध्वनिर्द्ध्वानवाद्यानां दिक्निकुञ्जोदरम्भरिः ॥१२॥
प्रतिमञ्चं प्रतिद्वारं प्रतिभूपं प्रतिक्षणम् । तत्राभवन् विचित्राणि प्रेक्षणीयानि लक्षशः ॥१३॥
न दूतानां न सूतानां न द्विजानां न वेत्रिणाम् । न तत्र वारनारीणामपि पारं ययौ जनः ॥१४॥
अथाऽऽजगाम स श्रीमान् क्रौञ्चकर्णनिषूदनः । निःशेषनृपसौभाग्यगर्वसर्वङ्कषो नलः ॥१५॥
प्रतीहारगणैरीशः स निर्दिष्टं पुरःसरैः । आरुरोह महामञ्चं कैलासमिव शङ्करः ॥१६॥
तस्य सिंहासनं हैमं समन्तादधितस्थुषः । बभासिरे महीपालाः परे भूमिगता इव ॥१७॥
तावदासीत् प्रभा तेषां यावद् नायाति नैषधः । आगतश्च नलः श्रीमान् नष्टं कान्त्या च भूभुजाम् ॥१८॥
बलिनाऽपि प्रयत्नेन प्रकृतिर्नानुगम्यते । न हंसलीलया याति स्पर्द्धमानोऽपि टिट्टिभः ॥१९॥
मुक्तास्रग्नायकेनेव धिष्ण्यपङ्क्तिरिवेन्दुना । अशोभत सभा तेन भूपालतिलकेन सा ॥२०॥
इत्थं स्वयम्वरारम्भे वर्त्तमाने मनोहरे । चिन्तयाञ्चक्रिरे चित्ते शक्रमुख्या दिवौकसः ॥२१॥
अहो ! नलप्रिया भैमी देवानपि न वाञ्छति । विकुर्मस्तद् वयं तावद् नलरूपं कथं न हि ? ॥२२॥
बाला नलभ्रमेणापि सा कदाचिद् वृणीत नः । इति सञ्चिन्त्य शक्राद्या नलरूपं विचक्रिरे ॥२३॥

परिवृत्य तमासीना महसा सा चतुर्नली । ययौ विस्मितचित्तस्य नलस्य विषयं दृशोः ॥ २४ ॥
तैरनादर्शसम्भूतैः प्रतिबिम्बैरिवात्मनः । बभार पञ्चरूपत्वं वैशाख इव नैषधः ॥ २५ ॥
नन्दनोद्यानवीथीव पञ्चभिः कल्पपादपैः । नलाकृतिधरैर्वीरैः राजराजी रराज सा ॥ २६ ॥
तान् विज्ञाय समायातान् तत्र शक्रादिकान् सुरान् । कौतुकोत्तरलाः सर्वे सुपर्वाणः समाययुः ॥ २७ ॥
तालवृन्तैः क्षतस्वेदाः निर्निमेषाः कुतूहलैः । छत्रैरम्लानमाल्याश्च विभिदुर्न नरामराः ॥ २८ ॥
यक्षैरक्षीणसौभाग्यैर्गन्धर्वैर्गर्वबन्धुरैः । किन्नरैश्च रयात् प्राप्तं तत्र किंपुरुषैरपि ॥ २९ ॥
ते ते तक्षककर्कोटशङ्खचूडादयोऽपि हि । महोरगाः समाजग्मुः सहाश्वतरकम्बलाः ॥ ३० ॥
आससाद तदास्थानं वासुकिर्नागवासवः । विष्वक् पातालबालाभिर्बालव्यजनवीजितः ॥ ३१ ॥
अनाक्षुण्णेन कायेन स्पर्शग्राह्येण केवलम् । बभ्राम तत्र सर्वत्र वायुः प्रकृतिचञ्चलः ॥ ३२ ॥
दूरादपश्यदत्युच्चे रुद्रदिग्भागसंस्थितः । प्राप स्वयम्वरं वृद्धः स्वयं नतु पितामहः ॥ ३३ ॥
अपेक्ष्य चपलां लक्ष्मीं गृहच्छिद्रस्य शङ्कया । नाजगाम परित्यज्य पातालनिलयं हरिः ॥ ३४ ॥
विज्ञाय ज्ञानवीर्येण स्वपदे भाविनं नलम् । मन्यमानः स्नुषां भैमीं नाययौ नरवाहनः ॥ ३५ ॥
एकपादेन देवेन प्रियार्द्धस्यूतमूर्त्तिना । शृङ्गारैकरसेनापि हरेण न समागतम् ॥ ३६ ॥
यामिका इव दूरस्था ददृशुस्तं निशाचराः । स्थानीयं नयनानन्दि जनविक्षोभशङ्कया ॥ ३७ ॥

अनावृतादयस्ते ते जम्बूद्वीपादिनायकाः । सरित्सागरशैलानां संप्राप्ताश्चाधिदेवताः ॥ ३८ ॥
अप्सरोभिरभिव्याप्तं सिद्धैश्च निखिलं नभः । ऋषिभिर्नारदाद्यैश्च ग्रहैश्चापि बुधादिभिः ॥ ३९ ॥
संममौ तत्र तत् सर्वं त्रैलोक्यमपि लीलया । दिव्ये देवाधिदेवस्य सर्वज्ञस्येव संसदि ॥ ४० ॥
सेहे सकलरूपाणां समर्दं भीमभूपतिः । सर्वसिन्धुजलौघानां संपातमिव सागरः ॥ ४१ ॥
अन्यत्रापि हि देवानां सान्निध्यं संप्रधार्यते । किं ब्रूमस्तत्र सम्प्राप्ता देवा एव स्वयम्वराः ? ॥ ४२ ॥
भूमीतले दशसु दिक्षु नभोऽन्तराले सञ्जल्पतां नवनवैरनुवादभेदैः ।
ब्रह्माण्डभाण्डदलनोद्यमकर्मठोऽभूत् कोलाहलः स खलु कोऽपि तदा जनानाम् ॥ ४३ ॥
अवनतमिव जातं व्योम हस्तावचेयं मिलितमिव समन्तात् किञ्च दिक्चक्रमासीत् ।
इयमपि च समन्तादुत्थितेवाभवद् भूस्त्रिभुवनजनतानां तावता मेलकेन ॥ ४४ ॥
द्रुतमवनिमसिञ्चंस्तत्र गन्धाम्बु मेघाः सपदि मलयवातास्तालवृन्तीबभूवुः ।
सुरयुवतिविमुक्तैः सान्द्रसिन्दूरपूरैः समजनि रमणीयः पूर्वसन्ध्यानुबन्धः ॥ ४५ ॥
उपर्युपरि सन्ततं विनिपतन्ति वैमानिकाः समग्रमधिरोहिणीक्रमवशेन रुद्धं नभः ।
अहं च हरिणा स्वयं समधिगम्य रुद्धोऽधुना किमत्र भवितेत्यभूद् हृदि नलो भयव्याकुलः ॥ ४६ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने तृतीये स्वयम्वरस्कन्धे द्वितीयः सर्गः ॥ २ ॥

स्वयम्वरार्थमागता देवा राजानश्च ॥

## तृतीये स्वयम्वरस्कन्धे तृतीयः सर्गः ।

अथ निन्तितवान् चित्ते सहसा विस्मयाकुलः । विभाव्य तमसम्भाव्यं समाजं भीमभूपतिः ॥ १ ॥
धन्योऽस्मि मम यस्यैते देवासुरनरोरगाः । स्वयमेव समायाताः स्वयम्वरमहोत्सवे ॥ २ ॥
अहो ! सकलकन्यासु वत्सा भाग्यवती मम । यामन्वेष्टुं समाजग्मुः सर्वे भूचरखेचराः ॥ ३ ॥
अनुरूपमिदं सर्वं जातं विधिवशादिह । कथं पुनर्विधातव्यं गोत्रसङ्कीर्त्तनादिकम् ? ॥ ४ ॥
न तावत् तादृशः कोऽपि मम राज्येऽपि वर्त्तते । य एषां वदति स्थानमभिधानं कुलक्रमम् ॥ ५ ॥
अज्ञानकुलशीलं चेत् कदाचिद् वृणुते सुता । तदा कुलकलङ्को मे परेषां चापि मत्सरः ॥ ६ ॥
तदिदानीं मत्पुत्र्यर्थे निःसहायः करोमि किम् ? । अनेन हेतुना नूनं भविष्यति विडम्बना ॥ ७ ॥
अथवा या स्वयं दत्ता देव्या च दमनेन च । यस्यास्तत् तादृशं भाले विशेषकमलौकिकम् ॥ ८ ॥
यज्जन्मनि च या तादृक् जाता वागशरीरिणी । यस्याः स्वयम्वरे सोऽयमित्थं सुरसमागमः ॥ ९ ॥
तस्याः प्रभूतभाग्याया वत्सायाः पुण्यजन्मनः । भाग्याकृष्टः कथं कश्चित् साहाय्यं न करिष्यति ? ॥ १० ॥
त्रिभिर्विशेषकम् ।

इत्थं चिन्ताप्रपन्नेऽस्मिन् जनके दमनस्वसुः । कन्याप्रवेशविष्कम्भमुपलभ्य समुत्सुकाः ॥ ११ ॥

सुरास्तत्र समायाताः स्वयम्वरदिदृक्षया इत्थमभ्यर्थयामासुर्देवीं वाचामधीश्वरीम् ॥ १२ ॥युग्मम्
किं कुर्मस्त्वत्पुरो वाणि ! भवद्वर्णनकौशलम् ? । उपरिष्ठान्महाम्भोधेरासारं वारिदा इव ॥ १३ ॥
और्वाग्निशमनादीनि तानि तानि सहस्रशः । सर्वदा सुरकार्याणि त्वं कुरुष्व कुरुष्व च ॥ १४ ॥
तदिदानीमपि ब्राह्मि ! गोत्रसङ्कीर्त्तनादिकम् । इहापि क्रियतां नूनं मौनं कर्त्तुं न ते क्षणः ॥ १५ ॥
वराः सुरा वधूर्भैमी याचितारश्च ते वयम् । कन्यासान्निध्यमाधातुं प्रसीद परमेश्वरि ! ॥ १६ ॥
त्रैलोक्यलोकसङ्कीर्णा सर्वपण्डितमण्डिता । इयमेवंविधा संसद् न भूता न भविष्यति ॥ १७ ॥
वक्तुं सदसि दिव्येऽस्मिन् त्वदन्यः कोऽपि न क्षमः । न हि स्वर्णमये चैत्ये काष्ठघण्टा विराजते ॥ १८ ॥
द्रुतमवतर हंसस्कन्धतो वन्ध्यलज्जे ! सफलय सुरयाच्ञां शारदे ! मुञ्च मौनम् ।
अपनय भयभाजो भीमभूपस्य चिन्तां भगवति ! दमयन्त्यां सुप्रसन्ना भव त्वम् ॥ १९ ॥

इति विचार्य वचांसि दिवौकसामवसरं परिभाव्य सरस्वती ।
भगवती जगतीतलमाययौ परिषदि क्रथकैशिकभूभुजः ॥ २० ॥
तां सर्वशास्त्रमयरम्यतराङ्गभागां गङ्गातरङ्गविमलावरणां पुरस्तात् ।
मुक्ताफलाभरणमद्भुतमुद्वहन्तीं कर्पूरवल्लिमिव भूमिपतिर्ददर्श ॥ २१ ॥
व्याकुर्वती शशिकलेव शरीरभासा सा निर्भरं दश दिशः सहसा सहासाः ।

सप्रश्रयं समभिगम्य ससंभ्रमेण श्रीभीमभूमिपतिना कृतमर्घमाप ॥ २२ ॥
आगन्तुभिर्निरुपमैः शकुनस्वराद्यैर्गत्वैव काचिदियमित्यनुचिन्तयन्तम् ।
वाग्देवता नृपमभाषत शोचमानं मानप्रदा कविकुलक्रमकामधेनुः ॥ २३ ॥
वैदर्भीजनक ! विमुञ्च हन्त ! चिन्तां जानीहि स्वजनमिमं जनं जनेश ! ।
वक्तव्यं तव दुहितुः पुरो वराणां सर्वेषामपि हि मया कुलक्रमादि ॥ २४ ॥
तदनु भीमनृपेण समर्पितं सकलदुर्जयदुर्जनतर्जनम् ।
कनकदण्डनखण्डमुपाददे भगवती वचसामधिदेवता ॥ २५ ॥

इतिश्रीमाणिक्यदेवसूरिकृते नलायने तृतीये स्वयम्वरस्कन्धे तृतीयः सर्गः ॥ ३ ॥

## तृतीये स्वयम्वरस्कन्धे चतुर्थः सर्गः ।

अथामन्द्राणि मान्द्राणि धीराणि सरसानि च । भैमीप्रवेशवाद्यानि तानि तानि निरुच्छ्रसुः ॥ १ ॥
स मङ्गलमृदङ्गानां पर्जन्यानामिवारवः । जगन्मनोमयूराणां ददौ ताण्डवडम्बरम् ॥ २ ॥
सहस्रपुरुषोदार्यं सहस्रांशुसमप्रभम् । सहस्रशिखराकीर्णं सहस्राक्षसभोपमम् ॥ ३ ॥

सफेनमिव पुष्पौघैः सेन्द्रधन्वेव तोरणैः । ससन्ध्याभ्रमिवोल्लोचैः सविद्युदिव केतुभिः ॥ ४ ॥
चतुरस्रं चतुर्द्वारं चतुरैः शिल्पिभिः कृतम् । भेजे रत्नमयं यानं दमयन्ती सखीवृता ॥ विशेषकम् ॥ ५ ॥
दमो दमनदान्तौ च राजपुत्रास्त्रयोऽपि ताम् । अन्वगच्छन् समं सैन्यैः सन्नद्धा रुद्धभूमयः ॥ ६ ॥
तैस्तैः कर्पूरभृङ्गारताम्बूलस्थगिकादिभिः । केकिकोकिलकीराद्यैस्तैस्तैः क्रीडनकैरपि ॥ ७ ॥
स्वैरं व्यग्रकराग्राणां राज्योपकरणैर्भृशम् । तस्या नासीरदासीनां वृन्दानि नृपवर्त्मनि ॥ ८ ॥ युग्मम्
प्रत्यासन्नां परिज्ञाय भैमीं शशिकलामिव । स त्रैलोक्यसभालोकः समग्रोऽपि हि चुक्षुभे ॥ ९ ॥
प्रविशन्तीं सभामध्ये समुद्रोत्थां सुधामिव । ततः पपुरपाङ्गैस्तां देवासुरनरोरगाः ॥ १० ॥
देवदूत्यव्यलीकेन नलनिग्रहहेतवे । प्राप्तां पाशमिवादाय बन्धूककुसुमस्रजम् ॥ ११ ॥
विवृत्तवदनः कश्चित् कुर्वन् मित्रैः समं कथाः । ताम्बूलाय करं चक्रे स्थगिकाधरसंमुखम् ॥ १२ ॥
विघट्टयन् समासक्तां तदीयदलसन्ततिम् । मन्दमुन्मीलयामास कश्चित् कमलकोरकम् ॥ १३ ॥
निवेश्य पीडयन् गाढं तर्जनीमध्यमान्तरे । ताम्बूलीदलसन्दर्भं कोऽपि त्वरितमच्छिदत् ॥ १४ ॥
अन्यः सहचरैः क्रीडन् करद्वितयमध्यगान् । अक्षान् निर्वर्त्तयामास सारिदायं विचारयन् ॥ १५ ॥

द्रुतमलभत रोम्णां हर्षमभ्युष्ट कोटी रतिरसजलसेकैर्धातवः सप्त भिन्नाः ।
निरुपमदमयन्तीदर्शनादेव सद्यस्त्रिकरणमपि जज्ञे तन्मयं पार्थिवानाम् ॥ १६ ॥

इयमिह दमयन्ती नाम या भीमपुत्री तिलकमिदममुष्याः किञ्च नैसर्गिकं तत् ।
समजनि सफलो नः सर्वथा मार्गखेदः क्षणमपि यदवासा द्रष्टुमप्यङ्गनेयम् ॥ १७ ॥
त्रिकालविद्भिस्त्रिजगन्नमस्यैः सुदुष्करं केवलिभिः कृत यत् ।
स्त्रीरत्नमीदृग् भुवि भावि सम्यग् ज्ञात्वाऽपि तैर्मुक्तिरुपार्जिता यत् ॥ १८ ॥
नेपं वयः परिजनं विभवं कुलं वा रूपं विलासमथवा किमु वर्णयामः ? ।
एकैकमप्यनुपमं मनसि स्मरन्तो भूमिभुजः प्रविविशुर्गहनं तदानीम् ॥ १९ ॥
दूरे परे नृपतयः स वदाकुलोऽभूद् भैमीं विलोक्य तु नलोऽपि हि धीरधुर्यः ।
यो वा समुत्तरति बाहुबलेन रेवां तस्यापि दुस्तरतरा जलदागमे सा ॥ २० ॥
किमपि रजनिवृत्तध्यानलज्जातिजिह्मा पुनरभिलपितार्थप्राप्तये सावधाना ।
इयमभिनवरूपा काचिदन्या किमित्थं नलहृदि विदधे सा विस्मयं दृश्यमाना ॥ २१ ॥
रात्रौ परार्थकृततादृशदूत्यकृत्यः प्रातर्वरीतुमपि च स्वयमागतः सन् ।
आगन्तवद्वरणवाञ्छितसिद्धिमाप्य लज्जामुवाह मनसा निषधाधिराजः ॥ २२ ॥
अन्ये नलं हृदि समीक्ष्य जहुस्तदाशां तादृक् चतुर्नलमयं तु नलोऽपि भेजे ।
प्राप्तुं नरेश्वरसुतां दृढनिश्चयस्तु कस्यापि न त्रिभुवनेऽपि तदा बभूव ॥ २३ ॥

नूनं न कश्चिदिह विश्वजनस्य मध्ये निःशेषसौख्यसहितः सततं जनोऽस्ति ।
ईर्ष्यां हि बिभ्रति धनाधिपतौ दरिद्रा लक्ष्मीपतेः कितवलोकभयं तु शश्वत् ॥ २४ ॥
एकैवासीद् भुवनवलये तत्र सा स्त्रीषु भैमी नाभूत् पुंसां सपदि विषयस्तद्दिदृक्षां विहाय ।
जज्ञे मुक्त्वा न रतिमितरः कोऽपि भावस्तदानीं वीरः कश्चिद् न च पुनरभूत् पञ्चबाणद्वितीयः ॥ २५ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने तृतीये स्वयम्वरस्कन्धे चतुर्थः सर्गः ॥ ४ ॥

## तृतीये स्वयम्वरस्कन्धे पञ्चमः सर्गः ।

अथ हस्तगृहीतेन हेमदण्डेन भास्वता । छायापथविभिन्नाया विभ्रमं बिभ्रती दिवः ॥ १ ॥
अकालकौमुदीकेलिं बिभ्राणा दन्तकान्तिभिः । स्वयं भगवती वक्तुं समारभत भारती ॥ २ ॥ युग्मम्
भो भोस्त्रिभुवनावासस्तम्भाः ! सुरनरेश्वराः ! । क्षोभं विहाय पश्यन्तु पश्यन्तो भीमसम्भवाम् ॥ ३ ॥
अपि त्रैलोक्यराजीवमकरन्दमधुव्रताः । युवानः प्रेक्ष्य वो भैमीं क्व तृप्तिर्वर्षकोटिभिः ? ॥ ४ ॥
इयं युष्माकमास्थानीं कल्पद्रुमवनीमिव । सफलीकर्तुमात्मानं दमयन्ती समागता ॥ ५ ॥

इह तावदमी बाले ! कालेयकविलेपनाः । बद्धकक्षाः परेलक्षा यक्षास्त्वद्वरणं प्रति ॥ ७ ॥
अधिष्ठाय निधानानि तिर्यग्लोकनिवासिनः । अकुतो भयसञ्चाराः समयं गमयन्त्यमी ॥ ८ ॥
विलोकय दृशा सर्वान् अमङ्ख्येयतमानिमान् । पृथग् विवर्णतां येषां यान्ति वत्सरकोटयः ॥ ९ ॥
एषु किञ्चिद् मनोऽभीष्टं वृणीष्व वरवर्णिनि ! । यदि निश्चिन्तमक्षीणविभवं सुभ्रु ! वाञ्छसि ॥१०॥
इत्युक्ते भक्तिसंयुक्तां तत्प्रणामपरायणाम् । निन्युरन्यत्र तां धन्यां कन्यां यानधुरन्धराः ॥११॥
तामूचे भारती भूयो भक्तिपर्यस्तमस्तकाम् । अमी सर्वेऽपि गन्धर्वाः स्वगर्वोद्धुरकन्धराः ॥१२॥
वहन्ति वल्लकीदण्डानुद्दण्डान् तुम्बचुम्बिनः । स्वरग्रामार्णवोत्तारतरण्डश्रीविडम्बिनः ॥१३॥ युग्मम् ।
एतावतैव कल्याणि ! स्वर्गस्य स्पृहणीयता । यत् तत्र किल गान्धर्वं गीतगानं प्रवर्त्तते ॥१४॥
इत्थं संकीर्त्यमानेषु तेषु प्रागल्भ्यलीलया । सदृष्टिसौष्ठवां भैमीं भूयोऽभाषिष्ट भाषया ॥१५॥
कच्चिद् विदित एवायं तव तामरसानने ! । सहस्रवदनः श्रीमान् वासुकिर्नागवासवः ॥१६॥
नागेन्द्रमन्तरेणैवं कस्त्वां वक्तुमपि क्षमः ? । द्विगुणो वदनेभ्योऽपि यस्य जिह्वासमुच्चयः ॥१७॥
अमी च भुवनाभोगस्फीतस्फुरितमूर्त्तयः । अमी तक्षककर्कोटशङ्खचूडादयो भटाः ॥१८॥
उद्द्योतयन्ति दिक्चक्रं दिवापि द्युतिमण्डलैः । यत्फणामणयो बाले ! भाले ! तिलकवत् तव ॥१९॥
सानन्दनन्दनक्रीडारतोऽपि स्वर्गिणां गणः । अमी तु त्रिपु लोकेषु विख्याता भैमि ! भोगिनः ॥२०॥

एतेऽपि गतनिर्वेदा विद्याधरधुरन्धराः । सन्ति वैदर्भि ! सम्भूता वैताढ्यगिरिवासिनः ॥२१॥
कुले नमिविनम्योर्ये पृथक्पत्तनसंस्थिताः । गान्धारा रौहिणेयाद्या महेन्द्रस्पर्द्धिसिद्धयः ॥२२॥
गन्धर्वेषु न सर्वथा तव रतिर्नागेषु रागो न ते वैलक्ष्यं बहुयक्षलक्षविषये चित्तं न दैत्येष्वपि ।
सामान्यस्य पिशाचभूतपलभुग्वर्गस्य वार्त्तैव का ? तद् दिव्या तव सृष्टिरेव सकला नूनं न भैमि ! प्रिया ॥२३॥
अतिस्मरसि न सम्यग्ज्ञानविज्ञानभाजा भुजबलकलितेन व्यक्तकेलिक्रमेण ।
शशिमुखि ! न हृतं ते देवलोकेन चित्तं तदिह भवतु भैमि ! प्रेक्ष्यतां राजलोकः ॥२४॥
इत्थं प्रविश्य भणिता सविलासहासं तत्तत्प्रलोभनपरायणयाऽपि देव्या ।
गङ्गेव देवविषयात् क्षितिपाललोकं सोत्कण्ठमाप रभसेन विदर्भसुभ्रूः ॥२५॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने तृतीये स्वयम्वरस्कन्धे पञ्चमः सर्गः ॥ ५ ॥

## तृतीये स्वयम्वरस्कन्धे षष्ठः सर्गः ।

ततस्तामवदद् वाचं साचीकृतविलोचनाम् । अजिह्मघटनां ब्राह्मी घटप्रतिभटस्तनीम् ॥ १ ॥
अयं शशिमुखि ! श्रीमान् सूर्यवंशविभूषणः । पुरः प्रभुरयोध्याया ऋतुपर्णोऽभिधानतः ॥ २ ॥



शारदा दमयन्तीं परिचयं कारयति॥

॥ ६१ ॥

नरेन्द्रकमलाधारं लोकशोकमलापहम् । कमलाक्षि ! विमुच्यैनं कमलङ्कर्तुमर्हसि ॥ ३ ॥
इत्यमुक्तवतीं देवीं मौनं कर्तुमजिज्ञपत् । सा लीलयैव कुर्वाणा करं कुड्मलमीलनम् ॥ ४ ॥
पुरस्थनृपनेपथ्यसङ्क्राताकृतिदर्शनात् । तद्विरक्तिविदः शीघ्रं जन्या याति स च स्वयम् ॥ ५ ॥
अभ्यधायि पुनर्देव्या पुरस्तन्वङ्गि ! नन्वयम् । अङ्गाधिपतिरध्यास्ते पुरीं पुष्पकरण्डिनीम् ॥ ६ ॥
मातिभिन्नेभकुम्भस्य सङ्ख्ये विक्षिप्तमौक्तिकः । अस्यासिः करकासारं कुर्वाण इव वारिदः ॥ ७ ॥
इति स्तुतिपरां भैमीदृक्तरङ्गप्रणोदिता । अकाले दत्तकर्पूरा चेटी देवीं न्यवारयत् ॥ ८ ॥

उवाच वाचं पुनरेव देवता वितीर्णहर्षा विदुरां विदर्भजाम् ।
इमं पुरस्तक्षशिलापुरीपतिं प्रतीच्छ निर्मत्सरमुच्छलद्गुणम् ॥ ९ ॥

शार्ङ्गाभिधस्य धनुषः पुरुषप्रवीरः कर्णे करोति विदुषां च गुणं गुणज्ञः ।
एकत्र यत् पुनरयं दृढबद्धमुष्टिरन्यत्र मुक्तकर एव तदद्भुतं नः ॥ १० ॥

न गिरिषु न च वज्रे केवलं मांसमात्रे क्षिपति विधुरयं यत् तेन लज्जाधिकं नः ।
इति दलितविपक्षाः क्ष्मातलं यान्ति नाशं समरशिरसि बाणा यस्य दण्डप्रमाणाः ॥ ११ ॥

गुरुरिति कविसार्थैरर्थिभिः कल्पवृक्षः स्मर इति रमणीभिर्वैरिभिर्वज्रपातः ।
जनक इति जनौघैर्योगिभिश्चापि नित्यं नरपतिरयमेकः स्मर्यतेऽनेकरूपः ॥ १२ ॥

क्वापि प्राङ्गणभूमिका क्वचिदपि प्रच्छाद्यते स्थण्डिलं धाराणां निकरैरपि प्रतिदिनं धाराधरे वर्षति ।
अस्य क्षोणिधवस्य विश्वजयिना खड्गस्य धाराद्वये मग्नानि द्विषतां गृहाणि सहसा शैलाग्रलग्नान्यपि ॥ १३ ॥
दानिना विनयिना विवेकिना मानिना प्रणयिना यशस्विना ।
नन्वनेन वसुधासुधांशुना गूर्जरेण सह गौरि ! गम्यताम् ॥ १४ ॥
अयं च चञ्चद्गुणवल्लिपल्लवः समुल्लसच्छौर्यरसैकपल्वलम् ।
अवन्तिभर्त्ता विततायतेक्षणः क्षिणोति दुःखं सुमुखि ! क्षणादपि ॥ १५ ॥
कन्दर्पाकुलिता मनाक् मुकुलिता लावण्यकल्लोलिता लीलासंवलितास्त्रपाशबलिता भावोदयान्दोलिताः ।
कर्णान्तस्खलिता विलोमवलिताः प्रज्ञाबलोन्मीलिता नन्वस्मिन् निपतन्तु सन्ततममी नेत्रत्रिभागास्तव ॥ १६ ॥
इति हि चतुरगम्यैश्चेष्टितैः सावहित्थैः प्रतिपदमपि भैम्या विस्तरं वार्यमाणा ।
उचितसमयमात्रं देवता तत्र वाचामकथयदभियुक्ता भूयसो भूमिपालान् ॥ १७ ॥
प्रेमाकुलेऽपि सकले सति राजलोके चित्तं चकर्ष पुनरेव नलस्तदीयम् ।
के के रुचिं विरचयन्ति च चन्द्रिकायां तत्पानकर्मचतुरस्तु चकोर एव ॥ १८ ॥
राजकादपगमय्य ततस्तां रक्तकोकनदकोरकहस्ताम् ।
आनिनाय नलपञ्चकमश्वं यानधुर्यनिवहः सहसैव ॥ १९ ॥

त्रिपथगामिव नैषधवारिधेर्गणयतां हृदि तामविनिर्गमाम् ।
सपदि वर्णितशेषमहीभुजां स्वकुलकीर्त्तनकौतुकमप्यगात् ॥ २० ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने तृतीये स्वयम्वरस्कन्धे षष्ठः सर्गः ॥ ६ ॥



## तृतीये स्वयम्वरस्कन्धे सप्तमः सर्गः ।



सा ददर्श सरोजाक्षी सहसा नलपञ्चकम् । रुरुधे च त्रपातङ्कप्रेमविस्मयसाहसैः ॥ १ ॥
तामसामान्यसौभाग्यां पुरः प्रेक्ष्य पतिंवराम् । इन्द्रादयोऽपि दिक्पालाः क्षणं क्षोभं प्रपेदिरे ॥ २ ॥
परमार्थं परिज्ञातुं कथ्यमानं तदग्रतः । बभूवुः सहसा सर्वे सावधाना महीभुजः ॥ ३ ॥
अविभिन्नान् प्रतिहारी कथं नः कथयिष्यति ? । इति शक्रनलाद्यास्ते चित्ते चिरमचिन्तयन् ॥ ४ ॥
अथ भूतभवद्भाविवृत्तचित्रैकतूलिका । त्रैलोक्यदीपिका देवी स्वयं वचनमब्रवीत् ॥ ५ ॥
दिष्ट्या विदर्भतनये ! तव सुप्रभातं सोऽयं नलो भवति यद्विबुधाधिराजः ।
वज्रं करेण दधता दलिताभिमानो भूभृद्गणः सुमुखि ! येन कृतो विपक्षः ॥ ६ ॥
अभिनन्दितवीरसेनमेनं समरे विद्धि च सुभ्रु ! पाशपाणिम् ।

मृदुपाणिरपुष्पराजिराजो वरुणोऽयं तरुणि ! प्रियस्तवास्तु ॥ ७ ॥
अविनयिषु च दण्डं धारयन् धर्मराजः स्मृतिपरिचयदक्षो दक्षिणाशां पिपर्त्ति ।
तदयमुदययुक्तो मुक्तदुर्वृत्तसङ्गः शशिमुखि ! निजचित्ते धार्यतां जीवितेशः ॥ ८ ॥
विभ्राणः किमपि सुदुःसहं च तेजः पूज्यत्वं जगति गतो जनव्रजानाम् ।
उत्फुल्लस्थलकमलानने ! (ऽ) नलोऽयं काष्ठानां रचयति लीलयैव रक्षाम् ॥ ९ ॥
इत्यन्तः प्रयतसरस्वतीप्रयुक्तं शक्रादिस्तवनमिदं नलस्तवोक्तम् ।
कर्पूरव्यतिकरितं प्रपद्य सद्यः श्रीखण्डद्रवमिव सा जडीबभूव ॥ १० ॥
सुव्यक्ते सति कथिते भयं सुरेभ्यः प्रच्छन्ने भवति च वञ्चिता कुमारी ।
तद् ब्राह्मी नलनृपतिं सलोकपालं प्रस्तोतुं पुनरपि मिश्रवागवादीत् ॥ ११ ॥
किमसुं न वेत्सि कमलाक्षि ! नलं सदृशोऽमुना न भुवि कोऽपि नृपः ।
अनुकारमिन्द्रवरुणाग्नियमा यदि तावदस्य वपुषा दधति ॥ १२ ॥
इत्थमुक्तवति दैवते गिरां दत्तकर्णनयनाऽपि भीमजा ।
नाससाद खलु तत्र पञ्चके रोममात्रमपि किञ्चिदन्तरम् ॥ १३ ॥
परिकलितसुधर्मं निर्मलं लोकपालं कथमपि न वृणीषे देवमेनं मृगाक्षि ! ।

त्यजसि यदि कदाचिद् भीरु ! भर्त्तारमेनं क इह तव तदानीं सुन्दरि ! प्राणनाथः ? ॥ १४ ॥

चिन्त्यते बत विलम्ब्यते च किं ? लज्जया जडतया च पूर्यताम् ।
स्वीकुरु प्रियतमं प्रमोदतां मन्मथश्च सुजनश्च भामिनि ! ॥ १५ ॥

इत्यनेन बहुलार्थवृत्तिना सा मुमोह वचसा विशेषतः ।
वैमत्याधिकतया हि लोचने नूनमन्धयति वैद्युतं महः ॥ १६ ॥

अप्यमन्यत नलं तु दिक्पतिं दिक्पतिं च नलमप्यमन्यत ।
प्रत्यपद्यत न निश्चयं क्वचित् कीर्त्तनादपि विलोकनादपि ॥ १७ ॥

एकस्मिंस्तत्र रागं विधातुं भिन्दन् बाणैः पञ्चभिः पञ्चबाणः
भैमीलक्ष्ये शस्त्रसङ्ख्यां स्वकीयां सार्थंचक्रे पञ्चभावाद् नलस्य ॥ १८ ॥

कञ्चुकिनिभया भगवत्या प्राप भीमतनयाऽपि न मार्गम् । भीमभूमिपतिना सह सर्वं व्याकुलं नृपतिमण्डलमासीत् ॥ १९ ॥

मूकमङ्गलमृदङ्गहर्म्यं सावधानमकलस्वजनं च । गीतनृत्यरहितं हतहर्षं तत्क्षणं बत बभूव सदस्तत् ॥ २० ॥

स्पृश्यमानमनिलस्य नरैर्दृश्यमानमखिलक्षितिपालैः । भीतभीमतनया कररुद्धं न स्वयं वरणदाम रराज ॥ २१ ॥

कण्ठपीठगतजीवितमङ्गं धूसरधरदलं कलयन्ती । इत्यचिन्तयदचिन्त्यचरित्रा भीमभूपतनया हृदयेन ॥ २२ ॥

एक एव स नलः किल पूर्वं पञ्च संप्रति कुतः पुनरेते । निर्जले कथमपि प्रतिबिम्बं दृश्यते न खलु चन्द्रमसोऽपि ॥ २३ ॥

यन्मया विरहनिस्सहया वा वीक्षितो दशसु दिक्षु स कान्तः । मदृशस्तदधुनापि पुरावत् किन्तु तत्परिचयं रचयन्ति ॥ २४ ॥
कौतुकी किमथवा नल एव व्याचकार बहुरूपतया स्वम् । अर्जितार्यहृदयः स कदाचिद् वेद भूपतिरिमामपि विद्याम् ॥ २५ ॥
ज्ञातमेतदथवा किमिवान्यत् हन्त ! निश्चितमयं मयि कश्चित् । मत्प्रियं प्रसभमेष पिधत्ते लोकपालकपट्टस्तु कपाटः ॥ २६ ॥
स्वल्पसत्त्वविभवेऽपि जनेऽस्मिन् मन्युरेष बत दिक्पतयः किम् । स्वामिनामनुचितं हि चरित्रं तृणेष्वपि कठोरकुठारः ॥ २७ ॥
अद्य भाग्यविपरीततया मे स्वामिनोऽपि गमिताः स्वरिपुत्वम् । वात्ययेव सलिलं जलदानां यत्परोपकरणं विरतं च ॥ २८ ॥
पल्वलं ज्वलति शुष्यति शाखी मर्मरं वपुषि वर्षति चन्द्रः । वासरः सृजति रात्रिविभागं भाग्यभङ्गसमये हि जनस्य ॥ २९ ॥
अद्य सर्वमपि हि प्रतिकूलं लोकपालकपटे मम रुष्टे । याति रेणुरपि दुःसहभावं भास्करव्यतिकरेण हि सद्यः ॥ ३० ॥
कस्य यामि शरणाय समीपं कः करोति मयि कारुणिकत्वम् । किं करोमि ? कमुपायमुपैमि ? व्याकुलाऽस्मि विषमे पतिताहम् ॥ ३१ ॥
दुर्जनः सुरगणः सकलोऽयं नषैधोऽपि मिलितः सह देवैः । यः पुरापि मयि निर्मितरङ्गः सोऽपि संप्रति न हंसविहङ्गः ॥ ३२ ॥
अत्र कश्चिदपि सत्यनलो यः स्वीकरोतु स पुनर्वरमालाम् । उच्यमानमिति विश्वसमक्षं नानुरुध्यति कथञ्चन लज्जा ॥ ३३ ॥
वीरसेनतनयं वरमालां प्रापयेति यदि नाम नियुञ्जे । वेत्रिणीं भवति हन्त ! तदस्या विग्रहः सह सुरैर्मदुपज्ञः ॥ ३४ ॥
स्वार्थसिद्धिविषये सुहृदर्थं यो विनाशयितुमिच्छति मूढः । स प्रतीच्छति मुखे निपतन्तं पाणिना निविडशस्त्रनिपातम् ॥ ३५ ॥
लोकपालपरिषत्परिरब्धे नैषधे पृथगनु ध्रियमाणे । अस्तु हस्तगतहानिरियं मे मूढता तदपरः परिवादः ॥ ३६ ॥
इत्यादि चेतसि चिराय विचारयन्ती दिक्पालदम्भगहनग्रहगोचरस्था ।

आवर्त्तगर्त्तपतिता बलदर्पिताऽपि न प्राप वारणवधूरिव निर्गमं सा ॥ ३७ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने तृतीये स्वयम्वरस्कन्धे सप्तमः सर्गः ॥ ७ ॥

## तृतीये स्वयम्वरस्कन्धे अष्टमः सर्गः ।

इत्येव नैषध ज्ञातुं ततः सा देवसेवया । गम्यते परमं ब्रह्म किमनाराध्य वाङ्मयम् ? ॥ १ ॥
दिक्पालपरिचर्यां च कल्पवल्लीव लीलया । इयं हि द्वितयी पुंसां ददाति दयितं फलम् ॥ २ ॥
एतदेव हि दानार्थे समन्तादन्तरं तयोः । दूराद् ददाति यत्पूर्वा तटस्थानां पुनः परा ॥ ३ ॥
समुद्दिश्य दिशामीशान् समाधिस्था समन्ततः । चिरं चकार चाटूनि चेतसा चारुहासिनी ॥ ४ ॥
नमोऽस्तु मम युष्मभ्यं दिक्पालेभ्यो दिवानिशम् । कुमार्यां सुकुमारत्वं यूयं भजत देवताः ! ॥ ५ ॥
अद्य युष्मासु रुष्टेषु यूयमेव गतिर्मम । अन्नविद्वेषिणां कायो वायुना हि न धार्यते ॥ ६ ॥
सर्वकार्यप्रभावेषु का नाम प्रतिमल्लता ? । न विध्यापयितुं शक्तिस्तृणानां हि दवानलम् ॥ ७ ॥
स्वल्पेषु भूबलं ज्ञातुं बलिनां वितथा रतिः । को हि विश्वम्भरां मुक्त्वा मेरुमुद्वोढुमीश्वरः ॥ ८ ॥
यद् दहन्ति न मार्तण्डा न क्षुभ्यन्ति यदब्धयः । यच्च शक्तास्तितिक्षन्ते तेनेदं वर्त्तते जगत् ॥ ९ ॥

युष्मासु दूरतः शक्तिर्भक्तिरप्यतिदुष्करा । केनापि हि न शोष्यो हि पोष्योऽपि हि न सागरः ॥ १० ॥
केवलं करुणां कर्तुं यतध्वं जगदीश्वराः ! । भर्तृभिक्षाप्रदानेन जनोऽयमनुगृह्यताम् ॥ ११ ॥
यदि नैषधवर्जे मे परस्मिन् रमते मतिः । तद् भवद्भिर्विधातव्यो निग्रहस्तत्क्षणं मम ॥ १२ ॥
इत्थमन्तः स्मरन्ती सा तच्चतुष्टयतुष्टये । प्राप मोहार्णवोत्तारतरण्डं ज्ञानमात्मना ॥ १३ ॥
नलप्रत्ययकारिण्या बुद्धेर्दत्तावलम्बनाम् । प्रत्यपद्यन्त तां सद्यः सहाया इव हेतवः ॥ १४ ॥
नुनोद हृदये तस्याः सङ्केतकमिवाचरन् । देवेषु नैषधभ्रान्तिं निमेषः क्ष्मापचक्षुषोः ॥ १५ ॥
अकथ्यत नलस्तस्यास्त्रिदशाङ्गविलक्षणैः । कदम्बमुकुलप्रायैरङ्गैः पुलकवाहिभिः ॥ १६ ॥
प्रत्यग्रमिव वैदर्भ्या नृपस्य समदृश्यत । स्वेदद्रवलवैर्भिन्नं भाले तिलकचन्दनम् ॥ १७ ॥
सम्भाव्येव भविष्यन्तीं स्वस्थाने भीमसम्भवाम् । हृदि म्लानतमां मालामालुलोक नलस्य सा ॥ १८ ॥
चरणौ रणवीरस्य वीरसेनसुतस्य सा । ददर्श भर्तृभक्त्येव स्पृशन्तीव वसुन्धराम् ॥ १९ ॥
इति स्वेदादिभिर्भावैर्भिन्नैश्छलनलव्रजान् । मनुष्यलक्षणैर्लेभे वैदर्भी निजवल्लभम् ॥ २० ॥
दिक्पालपरितोषेण ज्ञातसत्यनला ततः । वाणीविलसितं वाचां देव्याश्चिरमचिन्तयत् ॥ २१ ॥
वाग्भिः कर्तुं विपर्यस्तमनुष्यत्रिदशं जगत् । न ब्रह्मतनयां मुक्त्वा सृष्टिसामर्थ्यमीदृशम् ॥ २२ ॥
इति लब्धनलख्यातिः सङ्ख्यातिगगुणान्विता । धृतगाम्भीर्यसम्भारं भारत्या मुखमैक्ष्यत ॥ २३ ॥

कुमारि ! कुरु निःशङ्कं मानिनि ! स्वमनीषितम् । स्वेच्छापुरस्सरोऽयं ते जनो जनकनन्दिनि ! ॥ २४ ॥
उचितेवार्चनां कर्तुं देवेऽस्मिन् वरमालया । इति धृत्वा करे कन्यां निनायाभि पुरन्दरम् ॥ २५ ॥
ततः सकङ्कणक्काणं हस्तमुन्मुच्य हेलया । तां नलाभिमुखं यान्तीं रुरोधाश्लिष्य भारती ॥ २६ ॥
यत्प्रसादादिदं सर्वं ये पूज्यास्त्रिजगत्स्वपि । समुदाचरितुं तेभ्यः कथमित्थं प्रमाद्यसि ? । ॥ २७ ॥
इत्युक्तिकृतविश्रामा लज्जावनतकन्धरा । तेषां पपात सोत्कण्ठं चतुर्णां चरणेषु सा ॥ २८ ॥
प्रणमन्ती च शिष्येव स्नुषेव दुहितेव च । अदृश्यत तदा देवैर्दमयन्ती ससम्भ्रमम् ॥ २९ ॥
प्रणतेषु कृपालुत्वं लज्जालुत्वं च संसदि । श्रद्धालुत्वं सुशीलेषु प्रकृतिर्महतामियम् ॥ ३० ॥
ततः सा सर्वदिक्पालदत्तरङ्गप्रणुन्नया । अनीयत सरस्वत्या स्वयं नैषधसन्निधौ ॥ ३१ ॥
अथ कथमपि कम्पस्वेदरोमाञ्चजाड्यप्रभृतिभिरभिरामा काचिदन्या भवन्ती ।
सरभसमिव गत्वा सा नलस्योपकण्ठं स्वयमपि वरमालां कण्ठपीठे मुमोच ॥ ३२ ॥
मसृणकनकभासि स्फारविस्तारसारे प्रतिफलितशरीरा तस्य वक्षोविभागे ।
शुचिनिपुलगुणत्वात् क्षिप्रमन्तर्गतेव स्फुटकुसुमसमृद्धा सा विरेजे वरस्रक् ॥ ३३ ॥
ततस्तन्माङ्गल्यप्रहतघनतूर्यध्वानिभरं तिरःकुर्वन् विष्वक् चलचकितचेटीश्रुतिकटुः ।
अकाण्डब्रह्माण्डस्फुटनघटनाकृत् क्षितिभुजां भटक्ष्वेडानादः समजनि जनक्षोभजनकः ॥ ३४ ॥

यावद् भीमसुतार्थिनो नलरुषा संक्षोभयन्तः सभां व्यावल्गन्ति महीभुजो भुजबलैः कोलाहलव्याकुलाः ।
तावद् दिक्पतिभिः समं स भगवान् प्रत्यक्षरूपः प्रभुर्वज्रं वज्रधरः करेण कलयन्नुच्छल्यमित्यूचिवान् ॥ ३५ ॥
भूपालेषु विदर्भराजसुतया पत्यौ वृते नैषधे रोषाद् यस्य हि कस्यचित् किल शिरःशूलं समुत्पत्स्यते ।
मद्वज्राहतिजर्जरं जडमतेस्तस्याधुना मिश्रितं साक्षादार्जकमञ्जरीव शतधा शीर्णं शिरो यास्यति ॥ ३६ ॥
प्रस्थाने स्थितिषु स्थलेषु च जले रात्रौ तथा वासरे स्वप्ने जागरणे वने च भुवने दुःखे सुखे वा क्वचित् ।
भैमीं भोक्तुमतः परं बलमुखो यः कश्चिदारिप्सते पापात्मा भुवि भस्मसात् स भविता दत्तो मयाऽयं वरः ॥ ३७ ॥

तव च पार्थिवनायक ! जायतां ध्रुवमपत्ययुगं युगपावनम् ।
जलधराश्च मनीषितवर्षिणो नल ! भवन्तु भुवं त्वयि शासति ॥ ३८ ॥
अथ यमस्तमभाषत पार्थिवं मम गिरा मिथुनप्रसवस्य यत् ।
अपरुजःपुरुषायुपजीविनो जगति जानपदास्तव सन्त्विति ॥ ३९ ॥
तमवदद् वरुणः पृथुकद्वयं त्वमधिगच्छत वैभववाञ्छया ।
जलमपि स्थलतां व्रजतु ध्रुवं भवतु वापि तदीयविपर्ययः ॥ ४० ॥
हुतवहोऽपि बभाण शिशुद्वयं भवतु ते भवतश्च मनीषया ।
अविकृतस्य महामदसाधनं मिहिररश्मिषु सङ्क्रमणं मम ॥ ४१ ॥

आधाय रूपमथ पुस्तकहस्तमन्तःप्रीतिं प्रकाशितवती विशदस्मितेन ।
वाग्देवता भगवती नलमाबभाषे सा खेचरीनिचयचुम्बितपादपद्मा ॥ ४२ ॥
वार्त्तासु वर्त्मनि वधूषु विवाहकाले प्रातः प्रदोषसमयेषु च कीर्त्यमानः ।
त्वं सार्वभौम ! भविता भुवि मानवानां क्षेमाय वाञ्छितफलाय च तुष्टये च ॥ ४३ ॥
इत्थं देवैर्विरचितवरः पार्थिवैर्मन्यमानः शोभां बिभ्रन् भुवनविजयी भक्तिनम्रेण मूर्ध्ना ।
भैमीभर्ता नृपतितिलकस्तुष्टुवे हृष्टचित्तः पुण्यश्लोकस्त्रिभुवनजनैः पुष्पवृष्टिं किरद्भिः ॥ ४४ ॥
अत्रान्तरे तरलयन् हृदयं जनानां देवैः स्वयं विदितदूत्यकलावदातः ।
भैमीनलप्रणयपूर्वमुपेत्य हंसः श्रीशारदाचरणपीठमलञ्चकार ॥ ४५ ॥
तस्मै तुतोष सविशेषमशेषविद्या वैदग्ध्यवारिनिधये वचसामधीशा ।
तत् तादृगद्भुतवधूवरसङ्गमैकबीजप्ररोहजलदाय विहङ्गमाय ॥ ४६ ॥
इत्युद्दामं किमपि ललितं निर्मलं निष्कलङ्कं त्रैलोक्यस्य प्रमदजननं विस्मयोत्पादनं च ।
स्वेच्छावृत्तं त्रिभुवनजुषां दर्शयित्वा समन्तादन्तर्धानं सपदि विदधे लोकपालैः सदेवैः ॥ ४७ ॥
दत्तं दानं धृतिरुपहिता चारितं विप्रवृन्दं शीलं चापि स्फुटमिह कृतं भीमभूपालपुत्र्या ।
तैरागत्य त्रिदशतिलकैः क्ष्मातलं नागलोकादाकल्पान्तं जगति सकले नैषधः स्थापितश्च ॥ ४८ ॥

मिलितमिह महीपतिं व्रजन्तं निजपुरगोपुरवासिनं विनीतः ।
सकलमपि निमन्त्रितं वितेने सपदि विदर्भपतिर्विवाहसज्जः ॥ ४९ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने तृतीये स्वयम्वरस्कन्धे अष्टमः सर्गः ॥ ८ ॥

## तृतीये स्वयम्वरस्कन्धे नवमः सर्गः ।

प्रविश्य च प्रमोदेन जवादन्तःपुरं नृपः । सुतामातरमित्यूचे तातः स दमनस्वसुः ॥ १ ॥
अयि ! प्रतीच्छ तं वीरं प्रिये ! जामातरं नलम् । यस्यानुकारकर्त्तव्ये देवानामपि कौतुकम् ॥ २ ॥
नूनं नलेन जामात्रा लोकोत्तरगुणेन नः । क्रथकैशिकवंशोऽयमाकल्पान्तं विभूषितः ॥ ३ ॥
किमन्यत् तत्र तादृक्षं त्रिलोकीनाथमेलके । तनया यदि जानाति विवेक्तुं वरमीदृशम् ॥ ४ ॥
प्राप्तकालक्रमं सम्यक् शीघ्रं सपरिवारया । तत् कल्याणि ! क्रियाः सर्वा वितन्यन्तामनन्तराः ॥ ५ ॥
इत्युक्त्वा पुनरास्थाय स्वयमास्थानमण्डपम् । दिदेश सादरं सर्वान् कृत्येषु कुलपुत्रकान् ॥ ६ ॥
आकीर्णमभवत् सर्वं मङ्गल्यैः संविधानकैः । व्यग्रत्वमनिशं भेजे समग्रो नगरीजनः ॥ ७ ॥
विधाय विधिवत् तस्या विवाहस्नानमङ्गलम् । प्रसाधिकाभिरारेभे विभूषणमहोत्सवः ॥ ८ ॥

लोलैरुल्लकल्लोलैर्वाचालितदिगन्तरः । समुद्र इव दध्वान मण्डपः स्वजनाकुलः ॥ ९ ॥
तदा प्रमोदनृत्यं च प्रीतिदानं च निर्भरम् । विरेजे वचनातीतं भीमभूपालसंसदि ॥ १० ॥
आमन्त्रयितुमायातैस्त्वरितो भीमबन्धुभिः । सोत्कण्ठं क्रौञ्चकर्णारिः प्रतस्थे रथकोटिभिः ॥ ११ ॥
तमनुव्रजतां राज्ञां रत्नकोटीरकोटिभिः । उपरिष्ठाद् ययौ वर्षन् सपक्ष इव रोहणः ॥ १२ ॥
वेणुवीणादिभिर्वाद्यैर्वाद्यमानैरनेकशः । नासीरसीम्नि तस्यासीत् स्वरग्राममयं नभः ॥ १३ ॥
सौभाग्यशशिमुचुङ्गं मूर्तिमन्तमिवोत्थितम् । तं विलोक्य तदा लोका ममज्जुः प्रेमवारिधौ ॥ १४ ॥
त्रुट्यन्हारं क्षरत्पुष्पं सर्वतस्तद्दिदृक्षया । अधावन् शीघ्रमारोढुं गवाक्षान् प्रति योषितः ॥ १५ ॥
तासां दृग्मुखदन्तौष्ठैर्गवाक्षास्तत्क्षणं बभुः । अम्भोजशशिमाणिक्यप्रवालखचिता इव ॥ १६ ॥
विधाय तन्मुखश्रद्धां लीलाकमलचुम्बिनी । प्राप कापि रसोद्रेकं भ्रमरव्रणिताधरा ॥ १७ ॥
निर्भरं न्यपतन् तस्मिन् समकालं मृगीदृशाम् । कटाक्षा दृष्टिपभ्रेभ्यः पाणिभ्यो लाजवृष्टयः ॥ १८ ॥
अहो ! जयति वैदर्भी मत्यमद्य शचीमपि । यतो न स्त्रीकृतो भैम्या संप्राप्तोऽपि हि तत्पतिः ॥ १९ ॥
इति कुण्डिननारीणां स्वयमाकर्णयन् गिरः । प्राप सर्वश्रुतग्राही स गृहान् भीमभूभुजः ॥ २० ॥
समुल्लङ्घ्य प्रतोलीं च सप्तद्वारान्तराणि च । प्रसन्नः प्रविवेशान्तः प्रतीहारपुरस्सरः ॥ २१ ॥
मधुपर्कं निराचम्य श्वसुरेणोपकल्पितम् । प्रतिजग्राह तत्रार्थं दुकूलाभरणानि च ॥ २२ ॥

पुरोधाः सौषधीकल्पौ दम्पत्योः कोमलौ करौ । तयोः साङ्गुष्ठसन्देशौ दर्भबद्धावयोजयत् ॥ २३ ॥
रुरुचाते विचित्रं तौ मिश्रहस्तौ वधूवरौ । संसक्तपल्लवौ गाढं फलिनी बकुलाविव ॥ २४ ॥
अथ रतिललितानि व्यक्तलीलोज्ज्वलानि प्रणयभरगुरूणि व्रीडया व्याकुलानि ।
स्वजनसदसि तारामेलके कार्यमाणे बहुनलदमयन्त्योश्चिक्षिशुर्लोचनानि ॥ २५ ॥
समदनफलहस्तौ बद्धवस्त्राञ्चलौ तौ हुतवहमभिरामं चक्रतुस्त्रिः परीतम्
तदनु सपदि कन्यायोजकस्तत्र वह्नौ द्विजवरगुरुवाचा लाजमोक्षं चकार ॥ २६ ॥
अयुतमिभपतीनामर्बुदं वाडवानां प्रयुतमनुपमानां चारुवाराङ्गनानाम् ।
अगणितमपि कुप्याकुप्यशस्त्रासनादि व्यतरदथ स भीमः पाणिमुक्तौ नलाय ॥ २७ ॥
भूयश्चतुर्थदिवसे चरुपाकमेकं भुक्त्वैकभाजनगतं च मिथः प्रदत्तम् ।
तौ सार्वलौकिकमथो चतुरस्रवेद्यामाद्रीक्षतव्रजनिवेशनमन्वभूताम् ॥ २८ ॥
नानाविधानि सरसानि कुतूहलानि तूर्यत्रयव्यतिकराबहवश्च ते ते ।
तत् तच्च सर्वमपि मङ्गलसंविधानं तत्राभवद् विभवशीलकुलानुरूपम् ॥ २९ ॥
भीमः स्वयम्वरसमागतपार्थिवानां पूजां तदा सुमहतीं विदधे विधिज्ञः ।
कन्यार्पणप्रणयतोऽपि यथाऽर्जितं तैः सन्मानपूर्णहृदयैः सविशेषसौख्यम् ॥ ३० ॥

तथा नलमहीभुजा भुजविनिर्जितद्वेषिणा वितीर्णमखिलावनीवलयकल्पवृक्षेण च ।
बभूव सहसा यथा कनकभूषणानां भरैः परिश्रमपरम्परा वपुषि याचकानामपि ॥ ३१ ॥
भैमीसख्यो निजदुहितरः प्रीतियोगं विदद्भिः पृथ्वीपालैर्ललितरचनादक्षिणैर्दाक्षिणात्यैः ।
श्रेष्ठैः सार्कं नलसहचरैः पार्थिवैः शुद्धवंशैः सम्यक्पाणिग्रहणविधिना योजिताः शीलवत्यः ॥ ३२ ॥
स्थित्वा मासं प्रियपरिजनैरुत्सवादुत्सवेन स्वीयं देशं प्रति जिगमिषौ नैषधे राजचन्द्रे ।
पत्युर्गेहं प्रियदुहितरं प्रेष्यमाणां सबाष्पां प्रत्याह स्म प्रणतशिरसं साश्रुदृग् भीमभूपः ॥ ३३ ॥
जानासि सर्वमपि संवृणु पुत्रि ! बाष्पं किं शिक्ष्यसे क इव नो वचनावकाशः ।
स्नेहस्तथापि किमपि व्यवहारसारं चन्द्रस्य चन्दनविलेपनमाचरामः ॥ ३४ ॥
निश्छमता गृहपतौ गुरुषु प्रणामः स्नेहः कुले परिजने च महन्महत्त्वम् ।
सापत्न्यकेऽपि मृदुता प्रतिघः प्रियारौ निर्मोक्तयः प्रियसखे ! च कुलाङ्गनानाम् ॥ ३५ ॥
गृहिणि वदति नम्रा पादयोर्दत्तदृष्टिः स्वयमुपचरति द्राक् दत्तशिष्टासना च ।
शयममपि न शेते तस्य जागर्त्ति पूर्वं सुमुखि ! कुलवधूनामेष सिद्धान्तधर्मः ॥ ३६ ॥
इत्यूचिवान् विनयिनीमनुगृह्य पुत्रीं जामातरं स्वयमनुव्रजति स्म धीरः ।
तिस्रः प्रयाणनगतीः सह संनिविश्य प्रत्याजगाम च नलानुमतः स्वदेशम् ॥ ३७ ॥

उल्लङ्घ्य वर्त्म विपुलं च नलः प्रयाणैरानन्दसौहृदसमृद्धसमग्रसैन्यः ।
स प्राप सन्मुखसमागतपौरलोकामुत्तुङ्गतोरणगणाऽऽकुलराजधानीम् ॥ ३८ ॥
दैवज्ञवृन्दकथिते विपुले मुहूर्त्ते कृत्वोत्सवेन महता स पुरप्रवेशम् ।
निःशेषलोककृतमङ्गलसंविधानः सन्मानदानविधिभिः स्वजनं पुपोष ॥ ३९ ॥
एतत् किमप्यनवमं नवमङ्गलाङ्कं श्रीमद्यशोधरचरित्रकृता कृतं यत् ।
तस्यार्यकर्णनलिनस्य नलायनस्य स्कन्धो जगाम रसवीचिमयस्तृतीयः ॥ ४० ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने तृतीये स्वयम्वरस्कन्धे नवमः सर्गः ॥ ९ ॥

समाप्तस्तृतीयः स्कन्धः ।



## चतुर्थे स्कन्धे ।

### प्रथमः सर्गः ।

ैर्मानलसंवर्द्धैः कथालापैः परस्परम् । न लङ्घ्यमानमध्वानं जानन्ति स्म महाभुजाः ॥ १ ॥
इति तैर्व्योम्नि गच्छद्भिः पुरः सम्मुखमापतन् । स्वर्गगङ्गातटं प्राप्तैर्जनौघः कश्चिदैक्ष्यत ॥ २ ॥
तेषु केऽपि खरारूढाः केचिद् महिषवाहनाः । उत्कूर्दनपराः केचित् केचित् स्खलितचारिणः ॥ ३ ॥
नृत्यन्तश्च हसन्तश्च रुदन्तश्च निरर्थकम् । विडम्बयन्तः स्वमपि पश्यन्तस्तृणवद् जगत् ॥ ४ ॥
सप्तव्यसनिनः सर्वे पञ्चपातकिनोऽखिलाः । कृतघ्नाश्चैव सकलाः समस्ता आततायिनः ॥ ५ ॥
अश्रूयन्त च कस्यापि तत्र वाक्यानि वन्दिनः । अधिकृत्य जगल्लोकं शिक्षापूर्वं प्रजल्पतः ॥ ६ ॥
रे रे ! त्यजत दुर्बोधं कुरुध्वं कामशासनम् । अनित्यस्य शरीरस्य फलं नयत बालिशाः ! ॥ ७ ॥
नास्त्येव पुनरावृत्तिः प्राणिनां मृत्युतः परम् । पयोनिधौ निमग्नानां ग्राव्णामुन्मज्जनं कुतः ? ॥ ८ ॥
केयं वर्णक्रमव्यक्तिः स्वजातीयेषु जन्तुषु ? । सर्वसाधारणं तावद् भास्करः कुरुते महः ॥ ९ ॥
इह पापं च पुण्यं न मनसो विभ्रमावुभौ । शङ्का विषसमा नित्यं न हि धीरं विलुम्पति ॥ १० ॥
स्वाध्यायध्यानकृच्छ्राणि भिक्षाभ्रमणमेव च । प्रायः पौरुषहीनानां जीवनोपायकौशलम् ॥ ११ ॥

इति प्रलपतस्तस्य शक्रभ्रूभङ्गनोदितः । नैगमेषी सुरश्रेष्ठः साक्षेपमिदमब्रवीत् ॥ १२ ॥
अरेरे ! कोऽयमत्यन्तं धर्मकर्माणि कृन्तति ? । सुधर्माधिपतौ विश्वं पाति धर्मधुरन्धरे ॥ १३ ॥
तिष्ठ तिष्ठ दुराचार ! क्व चिरं जीव्यतेऽधुना ? । आतालुमूलतो जिह्वामयमुन्मूलयामि ते ॥ १४ ॥
कृत्याकृत्यविवेकश्चेद् न कश्चिदिह वर्त्तते । तेजसस्तमसश्चापि तुल्यत्वं तत् कथं न हि ? ॥ १५ ॥
प्रत्यक्ष एव विश्वेऽस्मिन् प्रपञ्चः पापपुण्ययोः । यद् विभिन्नं जगत् सर्वं सुखदुःखव्यवस्थया ॥ १६ ॥
एके कुर्वन्ति साम्राज्यं परे दधति दासताम् । स भवान्तरबद्धानां विपाकः कर्मणामिह ॥ १७ ॥
न दृश्यते हि भगवान् आत्मा सर्वत्र सङ्क्रमन् । सञ्चरन् पुष्पजातिभ्यो गन्धः पात्रान्तरेष्वपि ॥ १८ ॥
समानेऽपि हि वृक्षत्वे भेदश्चेदाम्रनिम्बयोः । तथा तुल्येऽपि मर्त्यत्वे वर्णानामन्तरं महत् ॥ १९ ॥
अधुनैव भवेत् सर्वमेकार्णवमयं जगत् । मर्यादासेतुबन्धोऽयं श्लथीभवति चेद् मनाक् ॥ २० ॥
तज्जगत्प्रलयं नेतुं स्थितिभङ्गं चिकीर्षताम् । वधः शीघ्रं विधातव्यो नास्तिकानां दुरात्मनाम् ॥ २१ ॥
अयं हि विभ्रमान्धानां चार्वाकमतवर्त्तिनाम् । उत्पथस्खलितं हन्ति राजदण्डो महाबलः ॥ २२ ॥
तदेष प्राप्यसे प्रान्तं दुरात्मन्नित्युदीर्य सः । आददे त्रिदशः शक्तिं किङ्किणीजालमालिनीम् ॥ २३ ॥
तां विलोक्य तडिद्भासं दिव्यशक्तिं भयातुरः । पपात स लुठन् बन्दी पुरस्तात् शक्रपादयोः ॥ २४ ॥
रक्ष रक्ष जगन्नाथ ! व्यक्तं वैतालिकोऽस्म्यहम् । युक्ता कृतापराधेऽपि कृपैव कृपणे सताम् ॥ २५ ॥



चार्वाक-मतवर्त्तिनां केषांश्चित् मनुजानां शक्र-प्रेरितस्य नैगमेषिण उपदेशः ॥

युक्तायुक्तं न जानन्ति स्वभावेनैव सेवकाः । परमार्थः परं तेषां प्रभुचित्तानुवर्त्तनम् ॥ २६ ॥
अनादिगमिदं सर्वं तदहं कलिगुह्यकः । इत्युक्त्वा दर्शयामास कलिमायां तमग्रतः ॥ २७ ॥
अथ्यद्युत्यसुगं मत्वा नतम्तं त्रिदिवौकसः । दक्षिणेन सुवर्णाद्रिं गन्तुमारेभिरे दिवि ॥ २८ ॥
मार्गान्तरेण व्रजतः समग्रान् विज्ञाय देवान् प्रणयीव गाढम् ।
प्रतीक्षतां वासव ! वासवेति जल्पन् स तिर्यग्वलितुं दधावे ॥ २९ ॥

इतिश्रीमाणिक्यदेवसूरिकृते नलायने चतुर्थे स्कन्धे प्रथमः सर्गः ॥ १ ॥

## चतुर्थे स्कन्धे द्वितीयः सर्गः ।

मनभानकरूपं तं कृष्णं किल्बिषिकाधिपम् । कलिं विलोकयन्तोऽपि न देवाः पूर्वमब्रुवन् ॥ १ ॥
पश्यन्नपि पुरः सर्वान् सुरूपान् सुरसत्तमान् । आत्मानं न कलिर्मेने मनागपि स दुर्भगम् ॥ २ ॥
उपेत्य निकटं तेषामदत्त प्रणयोऽपि सः । सौजन्यवानिव स्वैरं जगाद मुदितो भृशम् ॥ ३ ॥
दिष्ट्या विजयतां वज्री कृशानो ! कुशलं तव । वैवस्वत ! विशल्योऽसि वरुण ! प्रणयीभवन् ! ॥ ४ ॥
यत् सत्यमभवद् भाग्यं भवन्तो मिलिताः पथि । शकुनं शकुनेभ्योऽपि दर्शनं सुहृदां यतः ॥ ५ ॥

वयं तावद् व्रजन्तः स्मः श्रीकुण्डिनपुरं प्रति । स्वयम्वरसभामध्ये वरीतुं भीमसंभवाम् ॥ ६ ॥
तिष्ठन्ति मिलितास्तत्र बहवोऽपि महीभुजः । अस्मासु नु प्रपन्नेषु कथं मर्त्यं वृणीत सा ? ॥ ७ ॥
तद् ब्रूत मम वृत्तान्तमात्मीयं सुरसत्तमाः ! । कुतः संप्रति युष्माभिरिदमागम्यते पुनः ? ॥ ८ ॥
ततस्तं वासवः प्राह हन्त ! युक्तं कृतं त्वया । मिलितोऽसि यदस्माकं वरणोत्कण्ठितोऽपि सन् ॥ ९ ॥
तद् विमुञ्च वृथाऽऽरम्भं माभूत् तव परिश्रमः । व्यावर्त्तस्व सहास्माभिः स्वावासं प्रति संप्रति ॥ १० ॥
व्यतीतः स हि वृत्तान्तस्त्रिजगज्जनरञ्जनः । तत एव वयं प्राप्ताः सांप्रतं प्रीतचेतसः ॥ ११ ॥
सत्स्वमर्त्येषु मर्त्येषु पन्नगेषु नगेषु च । निषधाधिपतिः श्रीमान् दमयन्त्या वृतो नलः ॥ १२ ॥
मुक्त्वा यक्षान् सवैलक्ष्यान् नागान् रागातुरांस्तथा । देवान् सेवापरान् हित्वा सा मेने निर्मलं नलम् ॥ १३ ॥
तत् क्व यास्यसि तत्र त्वं तां गृहीत्वा गते नले । महोत्सवमपि द्रष्टुं न प्राप्तिरभवत् तव ॥ १४ ॥
मूलादपि च नाभूत् ते गन्तुं युक्तं स्वयम्वरे । नैष्ठिकब्रह्मचारीति यत् त्वां गायन्ति योगिनः ॥ १५ ॥
इति वासववाक्यानामभिप्रायप्रियं ततः । ववर्ष वाक्शरासारं भारती तारतम्यतः ॥ १६ ॥
अहो ! बत प्रसुप्तस्य व्यतीतं ग्रहणं तव । वीक्षितुं हि विभाते त्वं प्रमार्जयसि चक्षुषी ॥ १७ ॥
अभवद् भवतैकेन नूनमूनः स्वयम्वरः । स सर्वगुणपूर्णोऽपि कलङ्केनेव चन्द्रमाः ॥ १८ ॥
अमुना खलु रूपेण वेषेण विभवेन च । आस्तां भीमोद्भवा साक्षादन्यापि त्वां वृणीत यत् ॥ १९ ॥

स्वयम्वरार्थं गच्छतः कलेर्देवानां मीलनं वासवस्य व्यावर्त्तनाय प्रेरणा ॥

धिग् भवन्तमनात्मज्ञमकालज्ञममंयतम् । दुर्भगं सुभगंमन्यमधन्यं धन्यमानिनम् ॥ २० ॥
न लज्जसेऽपि वैदर्भीं प्राप्स्यामीति ब्रुवन्नपि । प्रवेष्टुमपि यद् दृष्टौ न लब्धस्त्वादृशः खलः ॥ २१ ॥
साभिलाषां नमेवैकं परमं पुरुषं प्रति । त्वमन्त्यज इवाप्नोषि श्रद्धोपनिषदं क ताम् ? ॥ २२ ॥
अतः परं परस्त्रीं तां चित्ते चेच्चिन्तयिष्यसि । ततो मुहूर्त्तमात्रेण भस्मसात् त्वं भविष्यसि ॥ २३ ॥
ज्ञातोऽसि ब्रह्मचारी त्वं मास्म कालमुखं गमः । इतोऽपसर दुर्बुद्धे ! गन्तुं देहि दिवौकसाम् ॥ २४ ॥
इति शक्राज्ञया ज्ञात्वा सरस्वत्या स तर्जितः । वृक्षात् कपिरिव भ्रष्टः स्तिमितः स्थितवान् क्षणम् ॥ २५ ॥
अनुभूय सुभूयोऽपि व्यथां वृश्चिकदष्टवत् । विहाय वाग्मिनीं ब्राह्मीं दिक्पालानवदत् कलिः ॥ २६ ॥
हुं वृता दमयन्ती सा हुं ततो यूयमागताः । कथं दृष्टं न युष्माभिरनार्यं कार्यमीदृशम् ? ॥ २७ ॥
धिग् युष्मान् विमुखान् मूर्खान् पर्वहीनान् सुपर्वणः । तिष्ठत्सु येषु युष्मासु मानव्या मानवो वृतः ॥ २८ ॥
निपात्य नृपतीन् सर्वान् अपहृत्य च मानवीम् । स्वर्गमागच्छतो युष्मान् प्रतिषेद्धुं क ईश्वरः ? ॥ २९ ॥
अद्य स्वर्गस्य युष्माभिर्महिमा सकलो हृतः । अमर्त्त्या अपि ते यूयं मर्त्त्यहीना हि संप्रति ॥ ३० ॥
सर्वां ददत यूयं च ब्रह्मचर्यस्य देशनाम् । कान्तानितम्बलुब्धाश्च स्वयं याताः स्वयम्वरम् ॥ ३१ ॥
अहो ! कथकवल्लोकः परस्मै धर्मदेशकः । स्वयं च कुरुते तत् तद् यद् यस्मै च प्ररोचते ॥ ३२ ॥
तत् किं न वदत व्यक्तं यद् वयं विफलश्रमाः । ततः स्वयम्वरात् सर्वे तृणीभूय समागताः ॥ ३३ ॥

तदद्यापि मया सार्द्धं व्यावर्त्तध्वं भुवं प्रति । अपहृत्य समेष्यामो नलं हित्वा विदर्भजाम् ॥ ३४ ॥
इति तद्वचनं श्रुत्वा देवाश्चकितचेतसः । कर्णौ पिधाय मा मेति शान्तं शान्तमवीवदन् ॥ ३५ ॥
आः पाप ! भवतो वाक्यैः प्रविष्टैः कर्णकोटरे । सान्द्रैरिव मषीपङ्कैरन्तरात्मापि लिप्यते ॥ ३६ ॥
आत्मवद् मन्यसे दुष्ट ! देवानपि हि विप्लुतान् । परमार्थं न जानासि मूढ ! गूढतरं पुनः ॥ ३७ ॥
न दृष्टस्ते नलो राजा सा च देवी नलप्रिया । अप्रत्यक्षं तयोरेतद् वृथा ते गलगर्जितम् ॥ ३८ ॥
तस्यास्तस्य च राजर्षेः सतीत्वं शान्ततां च ताम् । वक्तुं यदि हि जानाति स्वयं देवी सरस्वती ॥ ३९ ॥
इति साक्षीकृता देवैर्दिक्पालैर्वासवादिभिः । स्वयम्वरप्रतीहारी व्याजहार कलिं प्रति ॥ ४० ॥
कले ! कलय चैतन्यं कालुष्यं त्यज दुर्मते ! । मा विडम्बय गीर्वाणान् माधिक्षिप च नैषधम् ॥ ४१ ॥
तत्र तावत् सभाशोभां नलाय च विदर्भजाम् । उभयोश्च वरं दातुं ययुर्देवाः स्वयम्वरे ॥ ४२ ॥
तस्मिन् सतीमये वह्नौ न लक्षित्वा नलोल्वणे । प्रसभं शलभायन्ते भ्रान्तिमन्तो भवादृशः ॥ ४३ ॥
मधुदिग्धाऽधिगन्तव्या खड्गधारा विदर्भजा । तामिच्छद्भिर्दुराचारैर्दूरमूर्ध्वं विदीर्यते ॥ ४४ ॥
नहि तस्य च राजर्षेः पुण्यश्लोकस्य धीमतः । नलस्य सदृशः कोऽपि धैर्यवीर्यादिभिर्गुणैः ॥ ४५ ॥
इत्यारब्धं सरस्वत्या श्रुत्वा स नलवर्णनम् । सहसा कुपितः प्रोचे कलिः कलकलाकुलः ॥ ४६ ॥
मुञ्च मुञ्च कथां तस्य वाचालासि सरस्वति ! । अहो ! वहन्ति मर्त्त्यस्य देवा वैतालिकव्रतम् ॥ ४७ ॥



दमयन्तीमपहरणार्थं कलिर्देवान् प्रेरयति देवाश्च तं तीरस्कुर्वन्ति ॥

कथं वर्णयितुं योग्यो युष्माकं स नराधमः ?। रत्नचौरः सभावैरी त्वर्थहानिकरो नलः ॥ ४८ ॥
तदद्य रिपुकल्पाग्नौ क्रुद्धे सति कलौ मयि । जास्यते खलु पापात्मा स स्थास्यति सुखं यदि ॥ ४९ ॥
अद्यप्रभृति मे वैरं नलेन सह निश्चलम् । नित्यं जगन्ति गायन्तु कृत्वा पटहघोषणम् ॥ ५० ॥
अपि तं दश दिक्पालाः पितरो लिङ्गिनोऽथवा । सतीत्वं दमयन्त्या वा यः कश्चिदपि रक्षतु ॥ ५१ ॥
यदि तं हतगर्वं राज्यभ्रष्टं क्षुधातुरम् । विद्वेष्यं सर्वलोकानां कातर धैर्यवर्जितम् ॥ ५२ ॥
दुर्गतिं परिजाय स्वयं त्यक्त्वा निजप्रियाम् । वनं वनेन सीदन्तं रुदन्तं भ्रमयामि न ॥ ५३ ॥
तदा मम न दातव्यं सभायां पुनरासनम् । न च भूयोऽपि कर्त्तव्या लोकयात्रा मया सह ॥५४॥ त्रिभिर्विशेपकम् ।
इत्यमुक्तवचनस्तस्य कोपारुणितचक्षुषः । प्रशमं सामभिर्वाक्यैः कर्त्तुमारभिरे सुराः ॥ ५५ ॥
त्यज त्यज कले ! कोपं प्रसन्नं हृदयं कुरु । विषमं व्रजसि स्वैरं कथमुन्मार्गमन्धवत् ? ॥ ५६ ॥
यदि तत्र वयं प्राप्ताः स्वयम्वरमहोत्सवे । अस्मिन्निमित्त एवायं तत्क्रोधस्तव किं नले ? ॥ ५७ ॥
इह स्त्री वा मनुष्यो वा धनवान् निर्धनोऽथवा । युवा वा जरठो वाऽस्तु सर्वस्याचरणं महत् ॥ ५८ ॥
आचाराढ्य मर्त्योऽपि देवानामपि दैवतम् । यस्तत्परिचयं कुर्यात् स परं पुण्यवान् जनः ॥ ५९ ॥
कर्पूरेऽपि हि कालुष्यं चण्डत्वं चन्द्रमस्यपि । सत्संसर्गेऽपि शाठ्यं च विचिन्तयति दुर्जनः ॥ ६० ॥
यस्य गजनयावाऽस्ति गुणरागश्च निश्चलः । स विभुः स सुखी लोके परः पामर एव हि ॥ ६१ ॥

११

श्लाघ्यते खलु सर्वत्र सर्वोऽपि गुणवान् जनः । तथाहि गुणसंपन्नं सूत्रं शिरसि धार्यते ॥ ६२ ॥
दमयन्त्या महासत्या नलस्य च महात्मनः । वर्ण्यमाने गुणग्रामे किमयं मत्सरस्तव ? ॥ ६३ ॥
धर्मज्ञेन कृतज्ञेन निर्वैरेण महात्मना । का वैरसेनिना सार्द्धं तव वैरायितुं रतिः ? ॥ ६४ ॥
अत्यगाधमपारं च नलमुच्छेत्तुमिच्छता । आरब्धं टिट्टिभेनेव त्वया जलधिशोषणम् ॥ ६५ ॥
परिश्रमफलं मोघं परिहासकरं नृणाम् । तद् विमुञ्च कले ! सद्यो नलेन सह मत्सरम् ॥ ६६ ॥
इति प्रसन्नगम्भीरैर्वचोभिस्त्रिदिवौकसाम् । जज्वाल स भृशं भूयः कलिः कलहसागरः ॥ ६७ ॥
सम्विधाय करास्फोटं पश्यन्नंसौ मुहुर्मुहुः । उच्चैरुवाच वाचं च भ्रकुटिभीषणः कलिः ॥ ६८ ॥
मूर्खो वा चतुरोऽसि वा दिविषदां किं सेऽनया चिन्तया नो निर्वास्य नलं पुनः क्षितितलात् स्वर्गं विशामि ध्रुवम् ।
अत्रार्थे हत एप वामचरणो मुक्ता मयेयं शिखा सर्वे बध्यत यूयमेव भवतां साक्ष्ये प्रतिज्ञा मम ॥ ६९ ॥

इमां समाकर्ण्य कलिप्रतिज्ञामनर्थशङ्कां हृदये दधानः ।
प्रत्युत्तरं न स ददाति तस्मै भूयस्ततः किञ्चन नाकिलोकः ॥ ७० ॥

हन्त ! कुप्यति हितैरुपदेशैर्दुर्जनः किमपि चित्रममुत्र ? ।
जायते हि सविषः सविशेषं क्षीरभोजनवशेन भुजङ्गः ॥ ७१ ॥

सर्पिषा यदि हि नाम कृशानुः प्रायशः प्रशममेष्यति सिक्तः ।

दिवौकसां कलये उपदेशः कलेश्च प्रतिज्ञा ॥

नन्वलोऽपि कलयिष्यति शान्तिं सामवाग्भिरभिरामतराभिः ॥ ७२ ॥
ध्रुवमधिकतरः स्यात् सामवाक्यैर्नवीनज्वर इव जलसेकैरस्य मूर्खस्य मन्युः ।
परिहरत तदेनं दूरतो दुर्विनीतं द्रुततरमिति मत्वा निर्ययौ देवसार्थः ॥ ७३ ॥
ताद्दक तदीयगुणवर्णनमूलमन्त्रैरुद्दीपितः परुपरोपकपायिताक्षः ।
भैमीकरग्रहणवैरमिव स्मरद्भिः कृत्या कृतः किल नले कलिरेव देवैः ॥ ७४ ॥
पुरः सुराणां विहितप्रतिज्ञो नलस्य निष्कारणशत्रुभूतः ।
चचाल कालानलकल्पकोपः कलिर्महीमण्डलमाययियासुः ॥ ७५ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने चतुर्थस्कन्धे द्वितीयः सर्गः ॥ २ ॥

## चतुर्थे स्कन्धे तृतीयः सर्गः ।

अथ त्रिदशवीराणां प्राप्तानाममरावतीम् । आसन् कलिनलद्वेपपरिणामाश्रयाः कथाः ॥ १ ॥
अहो ! नाधु यभूवेदं वैदर्भ्या यद् वृतो नलः । कष्टं तु यत् कलिः पापी नलमुच्छेत्तुमिच्छति ॥ २ ॥

यदि स्वयम्वरे भैमी कान्तं कृतवती नलम् । किमत्रारक्षकः सोऽयमस्थापितमहत्तरः ? ॥ ३ ॥
अस्य पश्यत दौर्जन्यं कलेर्निर्वैरवैरिणः । अहो ! दित्सति दुष्टोऽयमेकहस्तेन तालिकाम् ॥ ४ ॥
अब्धेरौर्वोऽनिलोऽब्जानां राहुर्भानां सतां खलः । चतुर्णामत्र चत्वारो वैरिणः कारणं विना ॥ ५ ॥
पश्यन्ति पर्वते वह्निं नात्मीयपदयोः पुरः । स्वनाशमपि वाञ्छन्ति परनाशेच्छुकाः खलाः ॥ ६ ॥
हीनेन हि समर्थोऽपि च्छिद्रलीनेन जीयते । कर्णमध्यप्रविष्टेन मशकेनेव कुञ्जरः ॥ ७ ॥
तद् यतध्वं नलस्यास्मिन् प्राप्ते कलिपराभवे । सौमनस्यं सुमनसः सर्वे कुर्वन्तु संप्रति ॥ ८ ॥
अस्ति पातालवास्तव्यो नागः कर्कोटकाभिधः । पितृव्यो नलभूभर्त्तुर्वीरसेनस्य बान्धवः ॥ ९ ॥
स च रक्षतु पुण्यात्मा पूर्वस्नेहेन पन्नगः । बुद्धिभ्रंशमये काले नलं कलिसमाकुलम् ॥ १० ॥
इतश्च कलिरप्याशु संप्राप्य पृथिवीतलम् । आर्यलोकसमाकीर्णमार्यावर्त्तं विलोकयन् ॥ ११ ॥
सर्वधर्ममयं देशं तं दृष्ट्वा बद्धसाध्वसाः । न पुरः पदमप्येकं चिक्षिपुः कलिसैनिकाः ॥ १२ ॥
ततस्तानात्मनो भृत्यान् पश्यन् चकितचेतसः । अवोचत् स कलिर्वाचं सहसा साहसी हसन् ॥ १३ ॥
एवमेव मदान्धानां भृशमुत्तानपातिनाम् । आपातमात्रसाध्यो हि नास्माकं निषधेश्वरः ॥ १४ ॥
ततः संप्रति सर्वेऽपि यात यूयं यथागतम् । अहमेव गमिष्यामि विग्रहाय कृताग्रहः ॥ १५ ॥
स्थास्यामि चिरकालं च निभृतं यत्र कुत्रचित् । तृतीयोपायसाध्यस्य नैषधस्य जिघांसया ॥ १६ ॥

सैन्येन सह कलेरागमनम् ॥

आनाय विवरं तस्य प्रविश्य बलवत्तया । सवेगं दर्शयिष्यामि स्वस्वभावमरुन्तुदम् ॥ १७ ॥
वैदर्भीनलयोर्मध्यात् परस्परनियुक्तयोः । अहं हत्वा कमप्येकं सङ्क्रमिष्यामि वः पुनः ॥ १८ ॥
इति तानात्मनो भृत्यान् कान्दिशीकान् विसृज्य सः । एक एव स्वयं शीघ्रं प्रपेदे नैषधीं पुरीम् ॥ १९ ॥
तत्र प्रविश्य पश्यन् स विश्रामस्थानमात्मनः । त्रिकचत्वररथ्यासु चचार चरटश्चिरम् ॥ २० ॥
नानगाद् क्वचित् किञ्चित् कलिः परिचितं निजम् । नले स युगपद् दुःखी युगशेषः सुखासिके ॥ २१ ॥
निपपात पतद्दन्तो भग्नजानुर्महीतले । उल्लङ्घयन् सुमेध्यानि सुरस्नात्रोदकानि सः ॥ २२ ॥
सिद्धान्ताध्ययनध्यानैः शिष्याणां वाचनासु सः । उवाह सव्यथौ कर्णौ तप्तत्रपुभृताविव ॥ २३ ॥
तुतोष कृतशृङ्गारा नारनारीर्निलोकयन् । रुरोष पुनरालोक्य नृत्यन्तीः सुरवेश्मसु ॥ २४ ॥
इत्यमाकुलितो मध्ये निःसृत्य नगराद् बहिः । मनोऽभिराममारामं विश्रामाय जगाम सः ॥ २५ ॥
तत्र द्रुमसमूहानां चैत्यपूजोपयोगिनाम् । छाया तमदहत् कामं कामार्त्तमिव कौमुदी ॥ २६ ॥

उपरि सकलभूभृन्मण्डलस्य स्थितेन स्वजनकमलखण्डश्रीसमुल्लासकेन ।
नलदिनकरनाम्ना निर्मले तत्र देशे तमस इव न कोऽपि क्वापि तस्याश्रयोऽभूत् ॥ २७ ॥
अथ कथमपि खेदच्छेदवाञ्छां दधानः कलिरलसशरीरः स्वैरसञ्चारमुक्तः ।
प्रचलदलसमृद्धेर्दत्तसङ्केतमात्रं प्रणयिनमिव दूरादक्षवृक्षं ददर्श ॥ २८ ॥

नृत्यन् ततो विततबाहुरुपेत्य वेगादालिङ्ग्य तं विटपिनं विटचक्रवर्त्ती ।
क्रोशार्द्धतुङ्गवपुषः सुखसङ्क्रमस्य तस्यारुरोह शिखरं स खरस्वभावः ॥ २९ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने चतुर्थस्कन्धे तृतीयः सर्गः ॥ ३ ॥



## चतुर्थे स्कन्धे चतुर्थः सर्गः ।



स वायस इवारूढो दुष्टबुद्धिर्विभीतके । एकदृग् नलसाम्राज्यं पश्यति स्म दिवानिशम् ॥ १ ॥
षष्टिवर्षसहस्राणि तेन तत्रैव तस्थुषा । न स्वल्पमपि संप्राप्तं विवरं तस्य भूभुजः ॥ २ ॥
स हि शीलकुलोपेतः पुण्यश्लोकः प्रजापतिः । शासिता दुर्विनीतानां गोप्ता विनयवर्त्तिनाम् ॥ ३ ॥
दक्षः स्वपरदोषज्ञो गुणवान् गुणवत्सलः । भयङ्करश्च सौम्यश्च धीरोऽपि ललितोऽपि च ॥ ४ ॥
नित्यं धर्मार्थकामेषु तुल्यभावेन संस्थितः । इह लोकफलं भुङ्क्ते परलोकाद् बिभेति च ॥ ५ ॥ त्रिभिर्विशेषकम् ।
वशीकृतारिषड्वर्गं चातुर्विद्यविशारदम् । शक्तित्रितयसंपन्नमुदयत्रयभूषितम् ॥ ६ ॥
नित्यमभ्यर्चिता देवा गुरवो नित्यपूजिताः । नित्यसंपन्मयं राष्ट्रं तस्य नित्योत्सवं मनः ॥ ७ ॥
वर्णाश्रमेषु सर्वेषु पौरजानपदेषु च । न कश्चिदभवत् तस्य स्थितिभङ्गं करोति यः ॥ ८ ॥

रथाश्वगजसङ्कीर्णं भूपालकुलसङ्कुलम् । दृश्यते तत्सभाद्वारं छत्रच्छन्नं नभस्तलम् ॥ ९ ॥
निर्विकारं निरायासं निःसपत्नं निरामयम् । स निनीति निरातङ्कं राजा राज्यं विनिर्ममे ॥ १० ॥
विशेषेण च वैदर्भी तस्य राज्यमभूषयत् । तत्तद्वेषकलादानैर्वैदग्ध्या दाक्षिणात्यया ॥ ११ ॥
आपाणिग्रहणाद् नित्यं क्षणमप्यवियुक्तयोः । तयोस्तदभवत् प्रेम गौरीशङ्करयोरिव ॥ १२ ॥
चक्रवाकौ वियुज्येते हीयेते रात्रिवासरौ । अवियुक्तमहीनं च दाम्पत्यं तत्पुनस्तयोः ॥ १३ ॥
पुष्पावचयसङ्गीतदोलासलिलकेलिभिः । नलश्च दमयन्ती च चिक्रीडतुरहर्निशम् ॥ १४ ॥
तयोः परस्परप्रेमपरंपरितचित्तयोः । उभयोः कीर्तनद्वन्द्वैर्मण्डितं क्षितिमण्डलम् ॥ १५ ॥
दिक्पालवरसंपन्नः स्वेच्छागतजलानलम् । सूर्यपाकौदनं चक्रे नित्यं भैमीकृते नलः ॥ १६ ॥
सद्गुणलक्षणोपेतमपत्यद्वितयं नलः । गीर्वाणवरवीर्येण दमयन्त्यामजीजनत् ॥ १७ ॥
तदा तस्यासमुद्रान्तपृथ्वीपतिशिरोमणेः । सन्ततिश्रवणात् सर्वं मुमुदे मध्यमं जगत् ॥ १८ ॥
उपागतसमाकीर्णो बन्धुभिर्बद्धतोरणः । स्त्रीभिर्विहितमाङ्गल्यः सामन्तैः कृतकौतुकः ॥ १९ ॥
प्रधानपुरुषैः ग्रामो भीमस्य च महीभुजः । दुकूलमौक्तिकच्छन्नसमस्तोदीच्यमण्डलः ॥ २० ॥
दानैः पूर्णार्थिसङ्घातस्तूर्यैर्बधिरिताम्बरः । एकविंशत्यहोरात्राण्यश्रान्तोऽभवदुत्सवः ॥ २१ ॥
इन्द्रादिभिः प्रदत्तस्य तस्य द्वन्द्वस्य पार्थिवः । इन्द्रसेनाभिधां चक्रे स चक्रधरविक्रमः ॥ २२ ॥

रेजे राजकुलं ताभ्यामपत्याभ्यामहर्निशम् । व्योमेव पुष्पदन्ताभ्यां संचरद्भ्यामितस्ततः ॥ २३ ॥
तेन तेनोदयेनास्य सपत्नीकस्य भूभुजः । शुशोष कलिरत्यन्तं जलेनेव जवासकः ॥ २४ ॥
अथ कदाचन पान्थमनस्विनीघनमनोरथसाधनसारथिः । पिकवचः प्रतिभागुरुराययौ रसमयः समयो मधुमाधवः ॥ २५ ॥
समनिशादिवसो यदि विस्तरः समहिमातपनिर्गमसङ्गमः ।उभयतस्तुलया विधृतं दधौ भुवनमाशु वसन्तमहोत्सवः ॥ २६ ॥
क इव नाम न संप्रति मन्यते जगदलङ्घ्यतमं स्मरशासनम् । इति विचेतुमिवावजगाहिरे वसुमतीवलयं मलयानिलाः ॥ २७ ॥
ज्वलयितुं हृदयानि वियोगिनां दहनसङ्गमपिङ्गमयात्मभिः । समुदितं नव चम्पककोरकैर्मकरकेतनबाणफलैरिव ॥ २८ ॥
श्रुतिसुखप्रदहंसकुलक्कणभ्रमरगुञ्जितकोकिलकूजितैः । हृदयवेश्मसु बालमृगीदृशां सपदि जागरितो मकरध्वजः ॥ २९ ॥
किमधुना मधुनाम्नि मनोरमे रसमये समये समुदीर्यते । उपवने पवने हृतपल्लवे नवनवा वनवासजुषां रतिः ॥ ३० ॥
सह सतीभिरुपपल्लवयन्मुनीन् सह विटैर्घटयन्नटयोषितः । सह च पान्थवधूः पथिकव्रजैर्विरचयन्नुचितं विदधे मधुः ॥ ३१ ॥
प्रियमाप कापि शिरसा दधती नवमालिकाकुसुमदाम हितम् । अभिसारिका चपलचित्ततया नवमालिका कुसुमदामहितम् ॥३२॥
न कासरो लम्बतरङ्गतारं नकासरोलम्बतरङ्गतारम् । न कासरोलम्बतरङ्गतारं न कासरोलम्बतरङ्गतारम् ॥ ३३ ॥
रेजे स कामरसतामरसप्रसक्तप्रोद्दामदामडमरभ्रमरो वसन्तः । उत्तालजालकजटालरसालशालवाचालवालमदलालसकामतालः॥३४
तत्रैकदा सुविरचय्य वसन्तपूजां गीतात् परं सुपरितोषितगायनस्य ।
भैमीसखस्य सुखगोष्ठिगतस्य तस्य वैतालिका निजगदुर्दिवसावसानम् ॥ ३५ ॥

नलस्य उत्कर्षः कलिं ज्वालयति ॥

त्यक्त्वा दूरं हृदयदयितां पद्मिनीं लब्धनिद्रां हित्वा विष्वक् द्युतिपरिकरं जिह्मभावं दधानः ।
संप्रत्येकः प्रतितरुवरं दत्तपक्षिप्रलापः क्वापि क्षिप्रं पतति गहने वासराणामधीशः ॥ ३६ ॥
आकर्ण्य मूलच्यवनं तमसा कृतोऽयं प्रक्षिप्तये वहति निःप्रभतां पतङ्गः ।
श्यामीभवन्ति ककुभो विरुवन्ति काकाः स्तोकापि नास्ति वियति स्खलना किमन्यत् ? ॥ ३७ ॥
विरहदुःखदशामतिशोकयोः सदयचित्त ! विलोकय कोकयोः ।
यदनया विधिविशसजं भयं भवति कस्य जनस्य न पश्यतः ॥ ३८ ॥
गन्तुकाममुपलक्ष्य षट्पदं पद्मिनी कृतपलाशबन्धना । आदधे च सुगृहीतमञ्जसा मञ्जुभाषिणमियं निशामुखे ॥३९॥
कां ते करोमि मम मान्यविवेकपास्ति ? यां नाथ ! वाञ्छसि न कुत्र ममाथ वाञ्छा ? ।
इत्थं विलासमयवक्रगिरं वदन्तीं वक्रोक्तिभिः प्रणयिनीं स वदन्नुदस्थात् ॥ ४० ॥
अत्रान्तरे त्वरितमेव जयं विधातुं तस्मिन् प्रमोदकृतपादसरोजशौचे ।
पश्यन्नलभनजलमङ्गुलिगन्धिरन्ध्रं छिद्रं प्रपद्य कलिरस्य विवेश कायम् ॥ ४१ ॥
सम्यक् शौचेन हीनं कृतविवशतनुं मुक्तकेशं हसन्तं निष्ठीवन्तं रुदन्तं मदनपरवशं जृम्भमाणं स्खलन्तम् ।
भीतभ्रान्तं विरागं परिकलितरुषं लङ्घितोच्छिष्टधान्यं छिद्रं लब्ध्वा विशन्ति ध्रुवमिह पुरुषं प्रायशो दुष्टदेवाः ॥ ४२ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने चतुर्थस्कन्धे चतुर्थः सर्गः ॥ ४ ॥

देवि ! वैदर्भि ! कच्चित् ते चित्ते सुखमखण्डितम् ? । निरातङ्कानि गात्राणि कच्चित् तव तनूदरि ? ॥ २७ ॥
को दधाति त्वयि द्वेषं ? कस्त्वामुल्लङ्घ्य वर्त्तते ? । कुतस्तव भयं भीरु ! कस्मै मनसि कुप्यसि ? ॥ २८ ॥
सुता भीमस्य राज्ञस्त्वं वीरसेनस्य च स्नुषा । पक्षद्वयविशुद्धायाः कथं कलुषता तव ? ॥ २९ ॥
अयि ! प्रसीद वैदर्भि ! हृदयं सदयं कुरु । प्रिये ! प्रयच्छ मे हन्त ! हन्तकारं च वाङ्मयम् ॥ ३० ॥
इति जल्पन् करे धृत्वा निवेश्य निजसन्निधौ । अभिप्रायप्रकाशाय स तस्याः शपथं ददौ ॥ ३१ ॥
ततः शिरसि कुर्वाणा करकुड्मलशेखरम् । उवाच वचनं देवी दमयन्ती नलं प्रति ॥ ३२ ॥
कथमित्थं महाराज ! वृथा मनसि दूयसे ? । यत्तनोरेव मां पश्यन्नलङ्कारैरलङ्कृताम् ॥ ३३ ॥
किं माणिक्यमयैः कार्यं भारभूतैर्विभूषणैः ? । त्वमेव देव ! नित्योऽसि शृङ्गारो मम जङ्गमः ॥ ३४ ॥
पतिसन्मानिता नारी निर्वेषापि विराजते । शोभते हि पयःपूर्णा पद्महीनापि दीर्घिका ॥ ३५ ॥
प्रतिकूलप्रियाणां किं पुरन्ध्रीणां प्रसाधनैः । सत्त्वसाहसहीनानां सेनानां डिण्डिमैरिव ॥ ॥ ३६ ॥
स्वामिन् ! धवलितं विश्वं तव कीर्त्या चराचरम् । स एव हि ममोद्द्योतः शृङ्गारमण्डनं विना ॥ ३७ ॥
त्वदर्धासनसान्निध्यं लभमाना मनोरमम् । न श्रद्दधाम्यहं नाथ ! पौलोमीमपि सुस्थिताम् ॥ ३८ ॥
इत्थं भवत्प्रसादेन सर्वोत्कर्षजुषोऽपि हि । भाग्यहानिः पुनः शीघ्रं संप्राप्ता मम संप्रति ॥ ३९ ॥
यत् त्वां मदपकर्षन्ती हरन्ती हृदयं तव । शश्वदक्षवतीयं ते सपत्नीमामुपस्थिता ॥ ४० ॥

पण्याङ्गनेव निर्व्रीडा द्यूतक्रीडा धनापहा । न नग्नङ्करणी कस्य परिणामे नरेश्वर ! ॥ ४१ ॥
इमां मज्जनविद्वेष्यां भजतामयशस्करीम् । धनस्य प्रथमा हानिर्द्वितीया स्वसुखस्य च ॥ ४२ ॥
न काले भोजनं निद्रा न काले देवतार्चनम् । न काले स्नानदानाद्यं कितवस्य कदाचन ॥ ४३ ॥
प्रभवन्ति भृशं रोगाः शीघ्रं कुप्यन्ति देवताः । भ्रश्यन्ति सर्वकार्याणि द्यूतासक्तस्य देहिनः ॥ ४४ ॥
स्वजना दूरतो यान्ति, न विश्वसिति कोऽपि हि । लक्ष्मीर्विलीयते शीघ्रं, द्यूतव्यसनशीलिनः ॥ ४६ ॥
न तिष्ठति विना क्रीडां जितमेव हि पश्यति । पराजितस्त्वनिर्वाच्यं लभते दुःखमाक्षिकः ॥ ४५ ॥
कपिकच्छूः करद्वन्द्वे दृशौ मरुमरीचिका । दवाग्निमर्मरो देहं द्यूतकारस्य नोज्झति ॥ ४७ ॥
उत्खातनयनघ्राणाश्छिन्नकर्णकरक्रमाः । अंकिता इव दृश्यन्ते द्यूतदासा नराधमाः ॥ ४८ ॥
अकीर्त्या मलिनं पूर्वं जायते सकलं कुलम् । निर्जितस्य परैः पश्चात् कितवस्य मुखं पुनः ॥ ४९ ॥
एकत्र कलितान्येन व्यसनानि परस्परम् । एकमङ्गीकृतं येन स सर्वैरभिगम्यते ॥ ५० ॥
वरं हालाहलं भुक्तं भृगुपातः कृतो वरम् । वरं वह्निप्रवेशो वा नतु द्यूतं निषेवितम् ॥ ५१ ॥
आस्तां परजनैः सार्द्धं द्वयोर्बान्धवयोरपि । विभेदकारिणी क्रीडा कुभार्येव परस्परम् ॥ ५२ ॥
श्रूयते हि पुराणेषु भगिन्योरुभयोरपि । कद्रुविनतयोरासीद् वाग्द्यूतमपि दारुणम् ॥ ५३ ॥
तथाहि ते अपि प्रातः कदाचिद् गन्धमादने । ज्योतिष्कशक्रमुद्यन्तं पश्यतः स्म दिवाकरम् ॥ ५४ ॥

धृतलाक्षारुणच्छत्रं चलद् माञ्जिष्ठचामरम् । रक्तोत्पलदलोत्तंसं गैरिकारक्तवाससम् ॥ ५५ ॥ युग्मं
तस्य दीर्घारुणोष्णांशुबर्बरीजालमालिनः । सद्यः प्रतिहतं तेजस्तेजसा चाक्षुषं तयोः ॥ ५६ ॥
कृष्णवर्णान् हरेर्वाहान् वर्णयन्ती भ्रमद्दृशम् । हरितस्तान् प्रजल्पन्ती कद्रूं च विनताऽहसत् ॥ ५७ ॥
तन्निमित्तं विवादोत्थं वाग्द्यूतमुभयोरभूत् । सुधाकलशमेकैकं पणीकृत्य परस्परम् ॥ ५८ ॥
अतिवेलाऽधुना जाता प्रातर्निर्णय एव नौ । इति द्वे समयं कृत्वा जग्मतुः स्वस्वमन्दिरम् ॥ ५९ ॥
नागेभ्यो निजपुत्रेभ्यस्तच्च कद्रूरचीकथत् । मिथ्या दृष्टमिदं मातरित्यूचुस्तां भुजङ्गमाः ॥ ६० ॥
ततो मातुर्भयार्त्तायाः परित्राणाय पन्नगाः । अवेष्टयन् रवेर्वाहान् मैत्र्या योक्त्रफणाभृतः ॥ ६१ ॥
ततः सङ्केतवेलायां ते द्वे रविरथं गते । ददर्श सहसा श्यामान् विनताऽपि तुरङ्गमान् ॥ ६२ ॥
अजानती च तां मायां कद्र्वा सापि पराजिता । याच्यमाना सुधाकुम्भं विनता वाक्यमब्रवीत् ॥ ६३ ॥
अहं कुमारी निर्वीरा दद्यां कथमृणं तव ? । प्रतीक्षस्व कियत्कालं भविष्याम्यनृणा तव ॥ ६४ ॥
यावद् दत्से न मे देयं तावद् मद्दास्यमुद्वह । इत्युक्ता सा निजस्वस्रा तथेति विनताऽवदत् ॥ ६५ ॥
तदातिकिङ्करीभूतां वाहनीकृत्य तां स्वयम् । आरुह्य भुवनं सर्वं कद्रूरभ्रमदन्वहम् ॥ ६६ ॥
संवाहनादिभिस्तैस्तैर्दुष्करैरेव कर्मभिः । अखेदयच्च तां बालां कद्रूः कठिनमानसा ॥ ६७ ॥
इत्थं वर्षशतेऽतीते सा भगिन्याः पराभवात् । रुरोद जाह्नवीतीरे कदाचित् करुणस्वरम् ॥ ६८ ॥

तस्याश्च रुदितं श्रुत्वा कश्यपो मुनिरागतः । सर्वमापृच्छ्य वृत्तान्तं प्रददावण्डकद्वयम् ॥ ६९ ॥
इतः पुत्रवती भूत्वा त्वमानृण्यं प्रपत्स्यसे । इत्युक्त्वा कश्यपे याते प्रमोदं विनताऽवहत् ॥ ७० ॥
पञ्चवर्षशतेभ्यश्च सा दास्येन कदर्थिता । कालक्षेपासहिष्णुत्वात् कोशमेकं व्यदारयत् ॥ ७१ ॥
ततः प्रादुरभूद् दीप्तः पुमान् रूपेण कुब्जकः । श्रीमानकाण्डजातत्वात् पङ्गुभावेन दूषितः ॥ ७२ ॥
सुनिष्पन्नाद् द्वितीयाण्डाद् भविता यो ममानुजः । स हि त्वामनृणीकर्त्ता विनतामित्युवाच सः ॥ ७३ ॥
स तेजःपटलं वर्षन् दुःसहं दैत्यदानवैः । प्रथमोदयमुद्दिश्य सारथ्यं ग्राहितो रवेः ॥ ७४ ॥
ततो वर्षसहस्रान्ते स्वयं विघटिताद् द्रुतम् । प्रादुरासीद् द्वितीयाण्डाद् गरुडो नाम पक्षिराट् ॥ ७५ ॥
निषादान् प्रथमं जग्ध्वा भुक्त्वा कुञ्जरकच्छपौ । भङ्क्त्वा च रोहिणीं शाखां स प्राप्तो मातृसन्निधौ ॥ ७६ ॥
तस्याश्च दास्यवृत्तान्तं ज्ञात्वा मनसि दुःखितः । प्रतस्थे पन्नगः शीघ्रममृताहरणाय सः ॥ ७७ ॥
क्षिप्त्वा पक्षानिलैर्वृक्षान् वह्निं विध्याप्य वारिभिः । निहत्यारक्षकान् चञ्च्वा नखैरुत्क्षिप्य पञ्जरम् ॥ ७८ ॥
तस्यादाय सुधाकुम्भं स्वस्थानाभिमुखस्य च । बभूव यायिनो युद्धं सह सेन्द्रैः सुरासुरैः ॥ ७९ ॥ युग्मम्
विनतामनृणीचक्रे कद्रुदेयं समर्प्य सः । सापि कर्त्तुं सुधापानं निजपुत्रानजूहवत् ॥ ८० ॥
दर्भेषु कलशं मुक्त्वा यावत् स्नानाय ते ययुः । तावद् हृत्वा सुधाकुम्भं प्रययौ पाकशासनः ॥ ८१ ॥
सुधारसकणक्लिन्नान् लिलिहुः पन्नगाः कुशान् । द्विजिह्वास्ते ततोऽभूवन् तद्धाराभिर्विदारिताः ॥ ८२ ॥

अथ मातुः स्मरन् दास्यं क्रोधान्धो गरुडः क्रमात् । सर्पान् व्यापादयामास पातालानि प्रकम्पयन् ॥ ८३ ॥
ततः कर्त्तुं कुलत्राणं प्राहिणोत् तस्य वासुकिः । मनोज्ञं सर्पमेकैकं वध्यं नित्यकरप्रदः ॥ ८४ ॥
इत्थं विशसतस्तस्य सर्पान् मलयपर्वते । कालक्रमात् समुत्तस्थुः स्थूलकूटाः फणाभृताम् ॥ ८५ ॥
कदाचित् तत्र संप्राप्तो मलयेन्द्रसुतावरः । ज्ञात्वा तत्सर्परक्षार्थं तस्थौ जीमूतवाहनः ॥ ८६ ॥
स च वध्यशिलासुप्तः शङ्खचूडस्य वारके । गरुडेनार्द्धजग्धः सन् परिवृत्य ददौ वपुः ॥ ८७ ॥
संप्राप्ते शङ्खचूडे च ददति स्वं वपुः पुरः । जीमूतवाहनं ज्ञात्वा तुष्टः सत्त्वेन पक्षिराट् ॥ ८८ ॥
सर्परक्षावरं तस्मै वाञ्छितं गरुडो ददौ । यथावस्थितदेहं च तं चक्रे विनतासुतः ॥ ८९ ॥

तदतिविषममेतत् कुत्सितं छद्मभूलं सुजनहृदयशून्यं कीर्त्तिकूलङ्कषं च ।
परिहर नरदेव ! द्यूतमुद्भूतपापं परिचिनु दुरवापं निर्मलं धर्मकर्म ॥ ९० ॥
अवन्ध्यविज्ञप्तिरियं सदैव प्रसादपात्रं तव भीमपुत्री ।
तदार्यपुत्र ! क्रियतां मदुक्तमुक्त्वेति सा तत्पदयोः पपात ॥ ९१ ॥
तुभ्यं शपे यदि दुरोदरमाचरामि स्वास्थ्यं भज स्वहृदि भीरु ! भयं विहाय ।
इत्थं त्रपापरवशो नृपतिर्ब्रुवाणः प्राणेश्वरीं सरभसं भृशमुच्चकर्ष ॥ ९२ ॥
किं शर्मणापि मम तेन न यत् प्रियं ते भूयाच्च दुःखमपि तद् मम यत् तवेष्टम् ।

मा भूद् मुहूर्त्तमपि मे दयिते ! विना त्वाम् । त्वं जीवितं च हृदयं च ममोत्पलाक्षि ! ॥ ९३ ॥

इत्यादिभिर्बहुविधैरनुरुध्य वाक्यैः स्वं सापराधमिव चेतसि मन्यमानः ।
नम्रश्रयप्रणयमुत्कलिकाकुलोऽसौ तामालिलिङ्ग च चुचुम्ब च सन्दधे च ॥ ९४ ॥

धिग् धिग् कष्टं मनसि सुतरां दूयते हन्त ! देवी स्वार्थभ्रंशः कुलमलिनता द्यूततो यद् ममेति ।
भैमीस्पर्शः सपदि नृपतेश्चन्दनालेपहृद्यो दीप्तं चित्तज्वरमिव चिरं तस्य दूरीचकार ॥ ९५ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने चतुर्थस्कन्धे पञ्चमः सर्गः ॥ ५ ॥

---

## चतुर्थे स्कन्धे षष्ठः सर्गः ।

---

तस्योषितस्य तां रात्रिं दमयन्तीनिकेतने । अभूद् भावपरावृत्तिर्मलयाद्रौ तरोरिव ॥ १ ॥
अभिगम्य न वृत्तान्तं नर्मदामीभिरीरितम् । अवहन् हृदये दर्पं श्रुतशीलादयस्तदा ॥ २ ॥
प्रातः कृत्यं यथापूर्वं स चकार महीपतिः । नाज्ञापि द्यूतविद्याया बभार महतीं त्रपाम् ॥ ३ ॥
भूयो मध्याह्नसन्ध्यायां भोजनावसरे कृते । चुकोप तस्य सोत्कर्षं विषमज्वरवत् कलिः ॥ ४ ॥
न सेहे सहसा स्थातुं शारिक्रीडां विना नलः । विसस्मार प्रियापार्श्वे स प्रतिश्रुतमात्मनः ॥ ५ ॥

अक्षान् देवितुमारेभे स सभायां सकूबरः । प्रतिष्ठाभङ्गमूलं हि द्यूतकारस्य चेष्टितम् ॥ ६ ॥
आससाद तदा राजा वारं वारं पराजयम् । वामत्वं मन्मथस्येव द्यूतस्य हि परा रतिः ॥ ७ ॥
हस्त्यश्वरथवारस्त्रीग्रामाकरपुरादिकम् । यद् यत् पणं नलश्चक्रे तत् तत् सर्वमहारयत् ॥ ८ ॥
न ददर्श पुनर्भैमीं न द्यूताद् विरराम च । दिने दिने ददौ दुःखं जिगीषुरधिकाधिकम् ॥ ९ ॥
अक्षक्रीडाविदग्धोऽपि कूबरेण स निर्जितः । न कश्चिदथवा विद्वान् दैवस्यैकस्य कौशलम् ॥ १० ॥
न तं चकमिरे पौरा न भृत्यास्तमजीगणन् । उपेक्ष्य मन्त्रिणस्तस्थुरसद्व्यसनिनं नृपम् ॥ ११ ॥
हीयमानः श्रिया नित्यं स त्यक्तः सेवकैरपि । अन्वगच्छद् जनः सर्वः कूबरं जितकाशिनम् ॥ १२ ॥
पद्मतः कुमुदं याति सन्ध्यायां मधुपव्रजः । धिक् ततश्चापलं लक्ष्म्यास्तदासक्तं जनं च धिक् ॥ १३ ॥
किं कुर्वन्ति महामात्याः कस्य साध्यो हि भूपतिः ? । क्व नु शक्यः करी कर्णे धर्त्तुं मदभरोद्धुरः ॥ १४ ॥
म्लानेव निखिला बुद्धिर्विक्षिप्तमिव वायसः । विध्यातमिव धामापि नलस्य कलिकोपतः ॥ १५ ॥
अत्यगाधोऽप्यपारोऽपि कलशोद्भवमूर्त्तिना । जग्रसे कलिना शीघ्रं लीलया नलसागरः ॥ १६ ॥
द्वाररोधेन सामन्ता अनुद्घाटैर्वणिग्वराः । लङ्घनैश्चापि दायादास्तं दीव्यन्तं न्यवारयन् ॥ १७ ॥
आरूढपतनाशङ्की कूबरोऽपि न्यषेधयत् । नैव तस्थौ पुनर्दीव्यन् हारण्यावृत्तये नलः ॥ १८ ॥
धिगहो ! पैतृकीं लक्ष्मीं द्यूतेन गमयत्यसौ । वरमभ्रङ्कषज्वाले न जुहोति हुताशने ॥ १९ ॥

निषिद्धाचरणासक्तं व्यवस्थितमिमं नृपम् । साधु स्याद् यदि गृह्णाति सर्वं निर्जित्य कूबरः ॥ २० ॥
कथमस्य करप्राप्ता मौक्तिकस्रक् कपेरिव ? । चिरं स्थास्यति सौख्येन देवीयं भीमसंभवा ? ॥ २१ ॥
इदमन्यदपि स्पष्टं प्रभूतमनया दिशा । जजल्प जातवैराग्यो नलद्वेषाकुलो जनः ॥ २२ ॥
तद्वनेनैव संनद्धः कूबरस्तं जिगाय च । जायते हि विधौ वामे स्वशस्त्रमपि घातकम् ॥ २३ ॥
ततः सह महामात्यैर्वैदर्भी भर्त्तृवत्सला । सामान्तचक्रसङ्कीर्णं तत्सदः स्वयमाययौ ॥ २४ ॥
तत्र तस्यां समायान्त्यां सह कञ्चुकिनां शतैः । एति देवीति भीतानां वेत्रिणां तुमुलोऽभवत् ॥ २५ ॥
तां च दृष्टिपथप्राप्ताष्टाङ्गस्पृष्टभूमयः । प्रणेमुः संवृतैरक्षैः सामन्ताः कूबरोऽपि च ॥ २६ ॥
बभूव निभृतं सर्वं दूरस्थं राजमण्डलम् । बभार कूबरो लज्जां धार्ष्ट्यं भेजे पुनर्नलः ॥ २७ ॥
अथ व्यर्थामिमां कर्त्तुमपश्यन्निव तां नलः । स्वैरं परामृशन् सारीः सावलेप इवावदत् ॥ २८ ॥
किं संवृणोपि पाणिभ्यामक्षान् पातय कूबर ! । वृथा कालपरिक्षेपः क्रियते किमसाविति ? ॥ २९ ॥
वीक्ष्य तिर्यग्वलद्दृष्टि साभिप्रायं प्रियं प्रति । ततः कूबरमेवोचे कुण्डिनेन्द्रसुता स्वयम् ॥ ३० ॥
विमुञ्च देवर ! द्यूतं स्वधर्ममनुचिन्तय । वैवाह्यमिव वा युक्तं स्वगोत्रे किं दुरोदरम् ? ॥ ३१ ॥
जये पराजये वा वां तावदेकस्य कस्यचित् । द्वयोर्बान्धवयोर्मध्ये क्व दुःखं कुत्र वा सुखम् ? ॥ ३२ ॥
यदि तावद् महाराजोऽवधारयति वा न वा । तत् तवापि मतिभ्रंशो बभूव किमु कूबर ! ? ॥ ३३ ॥

न कस्यचन विश्वेऽस्मिन् सर्वथा जातु जायते । अन्यायोपार्जितं वित्तं स्थले जलमिव स्थिरम् ॥ ३४ ॥
जितं मयेति कितवो जितकाशी प्रजल्पति । जीयमानं तु जानाति नात्मानं व्यसनेन यत् ॥ ३५ ॥
त्वं यद्यधिकराज्याय द्यूतं देवर ! दीव्यसि । मालवेन्द्रमहाराष्ट्रं गृहाण मम पैतृकम् ॥ ३६ ॥
मणिमाणिक्यरत्नानि स्वर्णमुक्ताफलानि च । तानि स्वीकुरु सर्वाणि गृहे तिष्ठन्ति यानि मे ॥ ३७ ॥
हस्त्यश्वरथमुख्यं च साधनं सर्वमेव मे । त्वदङ्केनाङ्क्यतां शीघ्रं द्वारे च तव तिष्ठतु ॥ ३८ ॥
प्रसीद सद यं वत्स ! प्रार्थनां मे कृतार्थय । कुरु कूबर ! मद्वाक्यं त्यज दूरं दुरोदरम् ॥ ३९ ॥
त्वां वीक्ष्य विरतं द्यूताद् राजाप्यनु विरंस्यते । नह्यनात्मसमैः सार्द्धं द्यूतं युद्धं च भूभृताम् ॥ ४० ॥
इत्युक्तवति सोत्साहं भैमीनाम्नि बृहस्पतौ । अन्वभापन्त मन्त्रीशाः श्रुतशीलादयोऽपि यत् ॥ ४१ ॥
ततस्तथेति यत् किञ्चित् यावद् वदति कूबरः । अकार्षीदन्तरालापं तावद् वेगेन भूपतिः ॥ ४२ ॥
अहो ! ददाति यद् देवी सर्वस्वं तव कूबर ! । दास्याम्यहं पणीकृत्य स्वयमक्षमुखेन तत् ॥ ४३ ॥
तस्मिन्नपि हि सर्वस्मिन् हारिते सति दैवतः । इमामपि पणीकृत्य रन्तुं मम समुद्यमः ॥ ४४ ॥
गच्छन्तु मन्त्रिणः सर्वे न कार्या नौ निवारणा । द्रक्ष्याम्यहं परं पारमक्षाणां कूबरस्य च ॥ ४५ ॥
प्रविश्याभ्यन्तरं देवि ! त्वमपि व्रज सत्वरम् । द्यूतेऽपि रणवद् भीरु ! किमयं तव संभ्रमः ? ॥ ४६ ॥
चतुर्भिः कलापकम् ।

इति श्रुत्वा गिरं पत्युः प्रत्युवाच विदर्भजा । समन्युरपि साशङ्कं विनीता नतकन्धरा ॥ ४७ ॥
आर्यपुत्र ! कृतार्थाऽस्मि यत्पणीकर्त्तुमिच्छसि । नृणां संभावनापात्रं विरलाः खलु योषितः ॥ ४८ ॥
यः कश्चिदपि वाञ्छायाः प्रत्यूहो विहितो मया । तत्र प्रसीद राजेन्द्र ! मा स्म खेदं कथा मयि ॥ ४९ ॥
आयान्तु मन्त्रिणः सर्वे किं दृष्टिकटुभिः स्थितैः । द्यूतकौतुकविच्छेदं देवस्य किमु कुर्महे ? ॥ ५० ॥
अस्तु निर्मक्षिकमिति प्रत्युच्चरति भूपतौ । ततः खिन्ना ययुः सर्वे देव्या सह नियोगिनः ॥ ५१ ॥
प्राप्ता च मन्दिरं भैमी केशिनीं वीक्ष्य सत्वरम् । अवलम्ब्य भृशं कण्ठे रुरोद मृदुगद्गदम् ॥ ५२ ॥
रेजे राजीवनेत्रा सा वर्षन्ती बाष्पबिन्दुभिः । नभःश्रियः प्रमीताया ददानेव जलाञ्जलिम् ॥ ५३ ॥
प्रमृज्य नयने तस्याश्चिरमाश्वास्य भामिनीम् । उवाच सान्त्वनागर्भं केशिनी दीर्घदर्शिनी ॥ ५४ ॥
अयि ! प्रसीद वैदर्भि ! रम्भोरु ! रुदितं त्यज । प्रथमं हि प्रपन्नाऽसि व्यलीकं प्राणवल्लभात् ॥ ५५ ॥
न समा वासराः सर्वे नैकरूपमिदं जगत् । भवन्ति विविधैर्भावैः प्रायशः प्राणिनां दशाः ॥ ५६ ॥
न ते धर्मज्ञया सम्यक् शोचनीयं शुचिस्मिते ! । बन्धोदयविपाकाश्च सत्ता न क नु कर्मणाम् ? ॥ ५७ ॥
यदेनाक्षाः करे दत्तास्तस्य देवेन केनचित् । सत्यङ्कारस्तदैवासीत् त्वत्प्रीतिपरिमार्जने ॥ ५८ ॥
किं नैनं वेत्सि वात्सल्यात् संप्रति प्रीतिमोहिता । नलं नाम परावृत्तं कृतान्तं किञ्चिदात्मनः ? ॥ ५९ ॥
यन्नरं भूतवेतालाः पिशाचाः कटपूतनाः । अथैनमधितिष्ठन्ति दुष्टाः पलभुजोऽथवा ॥ ६० ॥

अन्तरेण समावेशं व्यन्तराणां दुरात्मनाम् । कथमित्थं भवेद् मुग्धे ! यदि शिक्ष्यः स्वयं नलः ॥ ६१ ॥
अतिक्रामति किं सत्यं विनयं वाति वर्त्तते ? । परित्यजति वा प्रीतिं कल्पान्तेऽपि कथं नलः ? ॥ ६२ ॥
नास्त्येव हि नलो राजा स भवत्प्राणवल्लभः । इदं तद्रूपमास्थाय भूतं किञ्चिद् विजृम्भते ॥ ६३ ॥
न नाम मङ्गलैरुक्तैर्माङ्गल्यमुपजायते । अपि कर्णकटु स्पष्टं शृणु पथ्यं वचो मम ॥ ६४ ॥
यद् मार्त्तण्डः परिधिवलयी व्योम्नि सूर्यद्वयं यद् रात्रौ चैन्द्रं धनुरपि च यत् यच्च युद्धं ग्रहाणां ।
उल्कापाता यदपि बहवः क्रूरकेतूदयो वा कालातीतौ यदपि रजनीभर्त्तुरस्तोदयौ च ॥ ६५ ॥
यद् दिग्दाहो यदपि च रजोवृष्टिभूमिप्रकम्पौ यद्गान्धर्वं व्रजति नगरं गोचरं लोचनानाम् ।
यच्चात्यन्तप्रसवविकृतिः कालतो रूपतो वा यच्चाकाले किल जलधरो वारि वर्षत्यभीक्ष्णम् ॥ ६६ ॥
ग्रामे वन्या वनभुवि च यद् ग्रामसत्त्वाः प्रवृत्ताः क्रूराक्रन्दं खरनखरिणो यच्च मिश्रं रसन्ति ।
दुर्गा नीडं मधु च सरघासम्भवं मन्दिरे यत् यत्सञ्जातः स्थलजलनभश्चारिणां स्थानभेदः ॥ ६७ ॥
चक्राकारं यदपि गगने गृध्रकङ्का भजन्ते काकप्राया यदपि विहगा हर्म्यमन्तर्विशन्ति ।
यद् दृश्यन्ते सुरतनिरताः श्वेतवर्णाश्च काका यत्सत्त्वानामतिविषयिणामन्ययोनौ प्रवृत्तिः ॥ ६८ ॥
पुष्पे पुष्पं फलमपि फले पल्लवे पल्लवं यत् यच्चात्यन्तं फलसुमनसां कापि चित्रा समृद्धिः ।
कन्दोद्भेदो यदपि विपिने हस्तपादादितुल्यः सस्यानां वा परिणमति यद् मांसरूपेण पाकः ॥ ६९ ॥

दमयन्त्यै केशिन्याः सान्त्वनम् ॥

पङ्कस्वेदश्रमपरिगता मूर्त्तयो यत्सुराणां यच्चैत्यानामथ विटपिनां निर्निमित्तं निपातः ।
यत्पर्यस्तो गृहिषु विधिवत्पूज्यपूजाक्रमो वा लब्धः सर्वैर्ऋतुभिरभितो यद्विपर्यासभावः ॥ ७० ॥
भम्भारावा यदपि रजनौ दर्दुराणां शिखा यत् सत्त्वा मत्स्यादिव समभवन् जातिमांसाशिनो यत् ।
मिथ्यादृष्टिः समजनि जनो यत्कुलिङ्गानुरोधाद् राजद्वारे यदपि सततं दुर्जनानां प्रवेशः ॥ ७१ ॥
ज्वालाधूमप्रभृति सहसा यच्च वह्निं विनापि त्रासोत्कम्पास्तुरगकरिणः कारणं यच्च मुक्त्वा ।
यद् दृश्यन्ते मदजलजुषो हस्तिनीनां कपोला यद् भज्यन्ते सपदि चमरच्छत्रदण्डाः स्वयं च ॥ ७२ ॥
त्यक्त्वाचाज्ञामपि बहुविधाः स्वस्वभावव्यवस्थां इत्थं विश्वं सकलमधुना यत्पराधृत्तमेतत् ।
अद्य श्वो वा नृपतितिलकं पूर्वमुच्छिद्य वेगादन्यः कश्चिद् भवति भुवने भूपतिर्निश्चितं तत् ॥७३॥ नवभिः कुलकम्॥
शय्यासनेषु गुणजालकमौर्णनाभं शब्दायितं च गृहमूर्धनि संहतेऽपि ।
श्यामत्विषः मशलभाश्च निशि प्रदीपा निर्वासनं तव वदन्ति सह प्रियेण ॥ ७४ ॥
हारस्रजश्च तव यद्विरलीभवन्ति सीमन्तपङ्क्तिरपि यन्मिलति प्रकामम् ।
तद् मन्यते तव निरन्तरदुःखदायी वैदर्भि ! कान्तविरहोऽपि भविष्यतीति ॥ ७५ ॥
एवं विचारचतुरे ! सुविचिन्त्य चित्ते कालोचितं रचयितुं तव युक्तमद्य ।
वैदर्भि ! दर्भमुखतीक्ष्णमतिस्त्वमेका छेकाऽसि किं शिथिलतामबले ! बिभर्षि ? ॥ ७६ ॥

इति परिणतिरम्यं वाक्यमाकर्ण्य तस्या विमलविपुलचित्ता धैर्यमालम्ब्य देवी ।
नरपतिकुलभक्तान् शीघ्रमामन्त्र्य सर्वान् निजगृहकरणीयं मन्त्रिपुत्रानपृच्छत् ॥ ७७ ॥

इतिश्रीमाणिक्यदेवसूरिकृते नलायने चतुर्थस्कन्धे षष्ठः सर्गः ॥ ६ ॥

## चतुर्थे स्कन्धे सप्तमः सर्गः ।

ते सर्वे समवायेन कर्त्तुं नलकुलोदयम् । देव्याः पितृगृहे स्थानं योग्यमाहुरपत्ययोः ॥ १ ॥
तद्वचो मन्त्रिपुत्राणां तथेति प्रतिपद्य सा । आहूय बाहुकं नाम सेनान्यं वाक्यमब्रवीत् ॥ २ ॥
व्रज बाहुक ! वेगेन त्वं मोक्तुं कुण्डिने पुरे । इन्द्रसेनं च मत्पुत्रमिन्द्रसेनां च मे सुताम् ॥ ३ ॥
यथा नाम महाराजो मां पणीकर्त्तुमिच्छति । वत्सावपि तथा कुर्यात् तदानीं ब्रूहि का गतिः ? ॥ ४ ॥
अपि नाम पुनर्वीक्षे मुखमायुष्मतोरहम् । निःसरिष्यामि जीवन्ती कैतवावर्त्ततो यदि ॥ ५ ॥
द्यूतं हि रममाणानां विजयस्य क्व निश्चयः ? । भक्षणे कालकूटस्य कदाचित् किं हि जीवितम् ? ॥ ६ ॥
अग्रेऽपि च सदादेशैरादरं प्रथयन् भृशम् । दौहित्रदर्शनोत्कण्ठां धत्ते तातः कृपानिधिः ॥ ७ ॥
तत् तत्र वत्सयोरेकं रक्षा तावद् कृता भवेत् । तातश्च वहते प्रीतिं निश्चिन्तत्वं तथा मम ॥ ८ ॥

मातामहगृहे वृद्धिमिन्द्रसेनः प्रपद्य च । कालान्तरेणापि निजं राज्यमाहर्तुमीश्वरः ॥ ९ ॥
कन्यायाश्चेन्द्रसेनायाः संप्राप्ते सति यौवने । विवाहं कारयिष्यन्ति मातुला एव कौतुकात् ॥ १० ॥
इतस्त्वयि गते तत्र कुर्वन्त्याः स्वामिसेवनम् । पश्चाद् यदा तदा वा मे यद् भाव्यं तद् भवत्विह ॥ ११ ॥
तथा विधेयं च यथा न पथि स्यादुपद्रवः । यथा च पुनरावृत्तिः शीघ्रं तव भवेदिह ॥ १२ ॥
इति देव्या वचः श्रुत्वा साश्रुराह स्म बाहुकः । यदादिशति देवी मां तत् करिष्यामि निश्चितम् ॥ १३ ॥
हन्त ! मे साधु संपन्नो निषधाया विनिर्गमः । नहि श्रोष्यामि कर्णाभ्यां पथि भर्तुः पराजयम् ॥ १४ ॥
धिक् शस्त्रमास्त्राहित्वं धिग् बुद्धिं धिग् बलं मम । यस्य मे त्याज्यते राज्यं भर्त्ता भृत्यस्य पश्यतः ॥ १५ ॥
भूपालभालपीठेषु मुकुटस्थपुटेष्वपि । यस्य विश्रम्य विश्रम्य विश्वमाज्ञा प्रसर्पति ॥ १६ ॥
तस्यैव रणवीरस्य वीरसेनाङ्गजन्मनः । वयं सेनाचराः सर्वे गर्वोद्धुरशिरोधराः ॥ १७ ॥
भूगोलमासमुद्रान्तं कृत्वाऽपि करगोचरम् । एतत् कष्टमयं प्राप्तं परचक्रं कुतोऽपि नः ॥ १८ ॥
तथा किं न जयी राजा यथा जयति कूबरः । नूनं मायाप्रपञ्चोऽयं दैवस्यैव दुरात्मनः ॥ १९ ॥
तदनेन नियोगेन गच्छतः कुण्डिनं प्रति । प्रत्यावृत्तिं न मे देवी संभावयितुमर्हति ॥ २० ॥
देवं भीममहं दृष्ट्वा दत्त्वा कन्याकुमारकौ । यास्यामि तीर्थयात्रार्थं स्वस्ति सौख्याय संप्रति ॥ २१ ॥
ततोऽहं पुनरावृत्तो न शक्तः शक्तिमानपि । द्यूतापहृतराज्यस्य द्रष्टुं भर्त्तुः पराभवम् ॥ २२ ॥ नवभिः कुलकम् ।

इति जल्पन् स वैदर्भ्या चिरमाश्वासितोऽपि सन् । शोभावचोभिरेवास्याः प्रमाणीकृतवान् वचः ॥ २३ ॥
सा पञ्चवर्षदेशीयं स्निग्धं युग्ममपत्ययोः । प्राणप्रियं तदुत्सङ्गे ददौ भीमसुता स्वयम् ॥ २४ ॥
आपृच्छ्य विह्वलां देवीं तद्युग्मं परिगृह्य च । प्रतस्थे स महाबाहुर्बाहुको बहुकोविदः ॥ २५ ॥
महता सह सैन्येन कतिचिद्भिः प्रयाणकैः । ज्ञात्वा तं कुण्डिनासन्नं भीमः प्रत्युद्ययौ नृपः ॥ २६ ॥
पुरप्रवेशमुद्दामं कारयित्वा महीपतिः । क्षेमं दौहित्रयोर्मातुर्जामातुरपि पृष्टवान् ॥ २७ ॥
प्रणम्य बाहुकस्तस्मै विदग्धो वदतांवरः । शशंस सकलं शस्तं दमयन्तीनलाश्रयम् ॥ २८ ॥
न च तं नलवृत्तान्तं देवी समदिशत् स्वयम् । न स्वामिवत्सलः किञ्चिद् बाहुकश्चाप्यचीकथत् ॥ २९ ॥
प्रमोदप्रवणो राजा दमयन्तीपिता तदा । दौहित्राय ददौ देशमिन्द्रसेनाय केरलम् ॥ ३० ॥
स राजा तस्य राज्ञी च स्वपुत्र्याः पृथुकद्वयम् । स्वकीयवपुषः पार्श्वाद् न दूरीचक्रतुः क्षणम् ॥ ३१ ॥
कृतकृत्यस्तयोर्देव्या विज्ञप्तिं बाहुको निजाम् । प्रैषीत् क्षेमोपलम्भाय श्रीभीमस्य च वाचिकम् ॥ ३२ ॥
बभूव सुस्थिता देवी सुतरां वार्त्तया तया । अपत्यविरहक्लेशं न बभार पतिव्रता ॥ ३३ ॥
विदर्भाधिपमापृच्छ्य प्रत्यावृत्तिमिषेण च । बभ्राम तीर्थयात्रार्थं बाहुकः सकलां भुवम् ॥ ३४ ॥
शक्रावतारतीर्थस्य विख्यातस्य दिदृक्षया । स कदाचिदयोध्यायां पुरि प्राप्तो महामतिः ॥ ३५ ॥
विज्ञाय बन्दिवृन्देभ्यस्तं तथाविधमागतम् । ऋतुपर्णनृपः प्रेम्णा स्थापयामास सन्निधौ ॥ ३६ ॥

इत्थं च बहवो वीराः कूबरद्वेपिणस्तदा । नलभक्ता महात्मानो राज्यं त्यक्त्वा विनिर्ययुः ॥ ३७ ॥
समयज्ञो महामात्यः श्रुतशीलोऽपि शीलवान् । निजमुद्रां परित्यज्य निर्ययौ तीर्थयात्रया ॥ ३८ ॥
इदं हि स्वामिभक्तानां धीराणां परमं व्रतम् । यत् प्रभुव्यसनं दृष्ट्वा न पश्यन्ति तटस्थिताः ॥ ३९ ॥
स तथैव दिवानक्तं दमयन्तीपतिर्नृपः । चिरं चिक्रीड निर्व्रीडः पीडितः कलिना नलः ॥ ४० ॥
अगाध्यो मन्त्रिवैद्यानां मुक्तः स्वपरचिन्तया । प्रत्यासन्नविनाशोऽभूत् सन्निपातज्वरीव सः ॥ ४१ ॥
तामिमामप्रतीकार्यां सम्भाव्य भवितव्यताम् । न भीमतनया देवी बभार मनसि व्यथाम् ॥ ४२ ॥
तदादि विदधे नित्यं सा तपांसि मनस्विनी । षोढा षोढा विभक्तानि बाह्यान्याभ्यन्तराणि च ॥ ४३ ॥
क्षेत्रेषु सप्तसु द्रव्यं निजमुप्तं तथा तया । तत् सहस्रगुणीभूतं यथा भूयोऽपि लप्स्यते ॥ ४४ ॥
कूबरेण हते राज्ये यथा चित्तं न दूयते । तथा रिक्तीकृतः कोशश्चिरं चतुरया तया ॥ ४५ ॥
नलोऽपि द्यूतसंज्ञेन परचक्रेण तेन सः । गृहीतदेशः सहसा दुर्गशेषः कृतोऽभवत् ॥ ४६ ॥
ततः परिभवं चित्ते भृशमाशङ्क्य कूबरात् । कल्लोलिनी–कमलिनी–केरली–कलिकादिकाः ॥ ४७ ॥
देवकन्यासमाः स्निग्धाः कुल–शील–गुणान्विताः । प्रजिघाय सखीः सर्वाः केशिन्या सह कुण्डिनम् ॥ ४८ ॥ युग्मम्।
रत्न–मौक्तिक–माणिक्य–मणि–स्वर्णादिकं च सा । इन्द्रसेनान्तिकं प्रैषीत् कोशसारं तया सह ॥ ४९ ॥
महिता परिवारेण कियतापि मनस्विनी । सा तस्थौ वपुरुद्दिश्य दैवं प्रति पतिद्रुहम् ॥ ५० ॥

अथ वनमिव वह्निस्तीव्रकोपस्तपो वा तटमिव जलपूरः कालकूटस्तनुं वा ।
विघटयति समन्ताद् यावता तावतैव व्यघटयदधिपत्वं द्यूतविद्या नलस्य ॥ ५१ ॥
सायाह्ने क्वचिदन्यदा सरभसं तस्मिन् सभामण्डपे
सर्वं राज्यमहो ! जितं जितमिति स्पष्टो महानिष्ठुरः ।
क्रूरैः कूबरसेवकैर्विरचितो बुम्बारवः कोऽप्यभूत्
सद्यः क्षोभमवाप येन नगरं भीता च भीमात्मजा ॥ ५२ ॥
कोशे गजेषु तुरगेषु पुरे प्रतोल्यां सर्वत्र कूबरनराः परिवृत्य तस्थुः ।
आत्मानुजेन हृतराज्यभरोऽपि राजा खिन्नः परं हृदि पराजयलज्जयैव ॥ ५३ ॥
मा खेदमुद्वह नरेन्द्र ! कुरुष्व किञ्चिद् भूयः पणं न विरतिर्विरतं विना त्वाम् ।
इत्थं तु कूबरवचांसि निशम्य राजा भीमोद्भवामपि जवेन पणीचकार ॥ ५४ ॥
पुरा हि सा तस्य महार्हचेतना बभूव राज्यादपि जीवितादपि ।
स्वकीयराज्यं तु दुरोदरापणे तदा तया क्रेतुमियेष नैषधः ॥ ५५ ॥
चिरमभवदभूतं द्यूतमुच्चावचं तत् विहितरसविशेषात् कूटमक्षा निपेतुः ।
नलमनु दमयन्ती पक्षपातेन लोकः समजनि विजयार्थी व्याकुलोऽभूत् कलिश्च ॥ ५६ ॥

दमयन्ती कोशादीन् रिक्ती-करोति कूबरेण च राज्यादिकं प्राप्तम् ॥

धिग् धिग् कथमयोग्यमेतदिति हि क्षोणीभुजां जल्पतां हाहाकारविदीर्णकर्णकुहरे लज्जापरे कूबरे ।
सूर्याचारविवर्तनैः क्षितितले खेदात् करं निघ्नता दीर्घं निःश्वसता नलेन दयिता देवी स्वयं हारिता ॥ ५७ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने चतुर्थस्कन्धे सप्तमः सर्गः ॥ ७ ॥

## चतुर्थे स्कन्धे अष्टमः सर्गः ।

इत्थं हारितसर्वस्वो विश्वैकविजयी नलः । न लेभे मनसा दुःखं दुःखितार्त्तिहरो नृपः ॥ १ ॥
स पञ्चशब्दनिर्घोषं नलसिंहासनस्थितः । अभ्यषिच्यत भूपालैः कूबरस्तत्क्षणं नृपः ॥ २ ॥
आज्ञा प्रवृत्ते तस्य नले गलिततेजसि । अस्तङ्गामिनि मार्त्तण्डे हविर्भुज इव प्रभा ॥ ३ ॥
राज्यभ्रष्टमहान्मानं मनसा निर्मलं नलम् । कूबरः शल्यमाशङ्क्य स्वदेशाद् निरकासयत् ॥ ४ ॥
कठोरमार्गिणः क्रूरान् मुक्त्वा सर्वत्र शस्त्रिणः । रुरोध सकलं लोकं नलमार्गानुगामिनम् ॥ ५ ॥
कनकावलिमुख्याश्च न मुमोच नलप्रियाः । वरं पितृगृहे प्रैषीत् तत्पितॄणां स याञ्चया ॥ ६ ॥
नलानुजीविभिस्त्यक्ता रुद्धा कूबरसेवकैः । विदर्भसम्भवा देवी न मेने किञ्चिदर्गलाम् ॥ ७ ॥
तां निशम्य समायान्तीं शीघ्रमुत्थाय कूबरः । प्रत्युज्जगाम सामन्तैः समन्तादुत्थितैः समम् ॥ ८ ॥

पट्त्रिंशत् पङ्ककोटीनां समुद्रं पृथिवीपतिम् । को हि तत्पितरं भीमं मनसा न विशङ्कयेत् ॥ ९ ॥
नलाय त्रिदशैर्दत्ता भ्रातृजाया पतिव्रता । न च सा तादृशं पात्रं युज्यते यत्र लाघवम् ॥ १० ॥
को दद्यादनले झम्पां कः सिंहीं दोग्धुमिच्छति ? । सर्वस्य जीवितं प्रेयो मरणं कस्य वल्लभम् ? ॥ ११ ॥
अतो नलप्रियां देवीं भीमपुत्रीं पतिव्रताम् । कूबरो जीवितव्यार्थी वाचाऽपि न विराद्धवान् ॥ १२ ॥
प्रणम्य परया भक्त्या तस्थिवांसं तमग्रतः । प्रत्यभाषत वैदर्भी कुलशीलोचितं वचः ॥ १३ ॥
राजन् ! प्रयच्छ मे गन्तुं स्वकीयस्वामिना समम् । कुरु निष्कण्टकं राज्यं पृथ्वीं पालय देवर ! ॥ १४ ॥
पुत्रस्त्वमपि तातस्य युक्तं राज्यं तवापि हि । वामे वा दक्षिणे वाऽपि, पाणौ भवति कङ्कणम् ॥ १५ ॥
न तु युक्तं निषेद्धुं ते कान्तानुगमनं मम । वपुर्मे हारितं पत्या प्रणयो न पणीकृतः ॥ १६ ॥
अपि नाम त्वया रुद्धा यद्वा तिष्ठाम्यहं किल । जीवितत्यागमार्गेऽपि कथं दण्डधरो भवान् ? ॥ १७ ॥
इति तस्या वचः श्रुत्वा त्रपातङ्कतिरोहितः । अवोचत विनीतात्मा कूबरः कालविद्वरः ॥ १८ ॥
आर्ये ! विसृज मात्सर्यं प्रसन्नं हृदयं कुरु । न त्वां प्रति विरुद्धोऽस्मि मनोवचनकर्मभिः ॥ १९ ॥
अहं नलस्य दास्यामि न स्थातुं निजमण्डले । नह्येकस्मिन् वने क्वापि घटते केसरिद्वयम् ॥ २० ॥
मया गृहीतसर्वस्वो निर्धनो निःपरिच्छदः । भ्रमिष्यति भुवं सोऽद्य देशाद् देशान्तरं व्रजन् ॥ २१ ॥
त्वं तेन सह गच्छन्ती देवि ! दुःखमवाप्स्यसि । अतएव हि रुद्धाऽसि न किञ्चित् कारणान्तरम् ॥ २२ ॥

नलेन सह गन्तुं कूबरं दमयन्ती प्रार्थयति ॥

त्वं हि देवि ! यथा राजा वीरसेनस्तथा मम । जननी वा स्वसा वाऽसि न मम त्वं प्रजावती ॥ २३ ॥
त्वमेव कुरु साम्राज्यं समादिश नियोगिनि ! । अहं तवास्मि सेनानीस्त्वदाज्ञा भुवि वर्त्तताम् ॥ २४ ॥
इति तद्वचसः प्रान्ते प्रत्युवाच विदर्भजा । एवमेव यथार्थत्वं कुलीनानामिदं व्रतम् ॥ २५ ॥
मयि भक्तिप्रसक्तस्य ज्येष्ठं प्रति विरोधिनः । विसंवदन्ति किन्त्वेतास्तव मायामयोक्तयः ॥ २६ ॥
परित्यज्य महाराजं कितवस्य तवान्तिके । ममावस्थितिमाधातुं युक्तमुक्तं त्वया किल ॥ २७ ॥
क्रौञ्चकर्णारिमुक्तेन फलं फल्गु वितृष्णवता । शाल्मलीपुष्पतुल्येन तव राज्येन किं मम ? ॥ २८ ॥
यत्र नास्ति मनःप्रीतिर्यत्र न प्रियदर्शनम् । यत्रास्ति परतन्त्रत्वं तद् राज्यं नरकं विदुः ॥ २९ ॥
यदि कूवर ! राज्येन मम कार्यं भविष्यति । आविन्ध्यादासमुद्रान्तं कस्य तद्दक्षिणापथः ? ॥ ३० ॥
स्वम्न्यस्तु तव भूपाल ! स्वसुखानि प्रमाणय । तव देवर ! संपत्त्या प्रीतिर्मम विशेषतः ॥ ३१ ॥
उक्तवानसि वक्तव्यं न दोषः कोऽपि तावकः । केवलं न ममैकस्यास्तव वाक्यं तु रोचते ॥ ३२ ॥
तदेतद् गम्यते शीघ्रं मा चित्ते खेदमुद्वह । सुखमास्स्व चिरं जीव राजन्नापृच्छ्यसेऽधुना ॥ ३३ ॥
इति किञ्चित् प्रजल्पन्ती राजद्वारं व्यतीत्य सा । प्रार्थितापि नृपैः स्थातुं निर्ययौ नलवर्त्मना ॥ ३४ ॥
तुभ्यं नमोऽस्तु निषधे ! कुलराजधानि ! मा वासवेश्म मम विस्मरणं विदध्याः ।
भूयो विलासवन ! यास्यसि दृक्पथं मे कार्या कदापि गृह ! चापि ममापि चिन्ता ॥ ३५ ॥

दृग्गोचरं चिरतरं क्व गवाक्ष ! यासि दोलानिवेश ! विजयी भव सर्वकालम् ।
मा सारिके ! विलप संवृणु कीर ! बाष्पं क्रीडामयूर ! विपिनं प्रति गच्छ वत्स ! ॥ ३६ ॥

आपृच्छ्य सर्वमिति भीमसुतां प्रयान्तीं लोकः समेत्य सकलो निषधाधिवासी ।
आगत्य साश्रुवदनः प्रणमन् पुरस्ताद् दूरीकृतः सपदि कूबरभृत्यवर्गैः ॥ ३७ ॥

हा ! हन्त ! हन्त ! हतदैव ! दुरन्ततां ते पृथ्वीभुजामपि यदेष दशाविवर्त्तः ।
धिग् धिग् विगीतमथवा भुवि राज्यलोभं ज्येष्ठे यदर्थमनुजोऽपि विमुक्तभक्तिः ॥ ३८ ॥

आत्मज्ञता तदखिला खलु कूबरस्य देव्या नलानुगमनं स न यद् रुरोध ।
नो चेद् नृपं तमशपिष्यत भीमपुत्री भीमोऽथवा सपदि राष्ट्रमभङ्क्ष्यदेतत् ॥ ३९ ॥

सत्यव्रतः किमपरं नल एव राजा यः कूबरस्य कितवस्य ददाति राज्यम् ।
युद्धेन कस्तृणमपि क्षमतेऽस्य नेतुं यः क्रौञ्चकर्णमपि तं हतवान् किलैकः ॥ ४० ॥

इत्थं मिथः सकलपौरवचांसि शृण्वन् प्राप्तः पुरीपरिसरे सरसीतटस्थम् ।
स्तम्भं महान्तमवलोक्य नलस्तदानीं दध्यौ महोदधिरिवाकलनीयरूपः ॥ ४१ ॥

यत्रागतः परिवृतः पृतनासहस्रैरुद्धूयमानचमरो विधृतातपत्रः ।
तत्रैव भीमसुतया सह राजमार्गे पश्यन्ति मां चरणचारिणमत्र लोकाः ॥ ४२ ॥

निर्जित्य किन्तु रिपुभिर्न हृता मम श्रीर्द्यूते जितो यदनुजेन ततः किमासीत् ? ।
निःसारतेव मयि सम्प्रति लोकचित्ते जानन्तु हन्त ! मम जानपदा बलं तत् ॥ ४३ ॥
इति समचतुरस्रं कोशषष्ठाङ्गतुङ्गं शतकरपरिणाहं स्तम्भमुन्मूलयंस्तम् ।
स वियति युगमात्रं शीघ्रमुत्क्षिप्य नीत्वा पुनरपि हि तथैव न्यस्तवान् वज्रहस्तः ॥ ४४ ॥
तद् विस्मिता नलबलं समुदीक्ष्य लोकाः स्तम्भे समेत्य लिखितां ददृशुः प्रशस्तिम् ।
भावी त्रिखण्डभरताधिपतिः स नूनमुत्थाप्य यः पुनरिमं विनिधास्यतीति ॥ ४५ ॥
ऐतिह्यमेतत् परिभाव्य सर्वैः सम्भाव्यमानप्रसरत् पुनः श्रीः ।
गङ्गातटं प्राप स भीमपुत्र्या देव्यानुयातो निषधाधिराजः ॥ ४६ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने चतुर्थस्कन्धे अष्टमः सर्गः ॥ ८ ॥

## चतुर्थे स्कन्धे नवमः सर्गः ।

तत्र राज्यपरित्यक्तः प्रियामात्रपरिच्छदः । अध्युवास वियापेतः स वेतसतरोस्तले ॥ १ ॥
पश्यन् पुरं परित्यक्तं दीर्घमुष्णं च निःश्वसन् । सापराधमिवात्मानं मेने मनसि पार्थिवः ॥ २ ॥

दृग्गोचरं चिरतरं क गवाक्ष ! यासि दोलानिवेश ! विजयी भव सर्वकालम् ।
मा सारिके ! विलप संवृणु कीर ! बाष्पं क्रीडामयूर ! विपिनं प्रति गच्छ वत्स ! ॥ ३६ ॥
आपृच्छय सर्वमिति भीमसुतां प्रयान्तीं लोकः समेत्य सकलो निषधाधिवासी ।
आगत्य साश्रुवदनः प्रणमन् पुरस्ताद् दूरीकृतः सपदि कूबरभृत्यवर्गैः ॥ ३७ ॥
हा ! हन्त ! हन्त ! हतदैव ! दुरन्ततां ते पृथ्वीभुजामपि यदेष दशाविवर्त्तः ।
धिग् धिग् विगीतमथवा भुवि राज्यलोभं ज्येष्ठे यदर्थमनुजोऽपि विमुक्तभक्तिः ॥ ३८ ॥
आत्मज्ञता तदखिला खलु कूबरस्य देव्या नलानुगमनं स न यद् रुरोध ।
नो चेद् नृपं तमशपिष्यत भीमपुत्री भीमोऽथवा सपदि राष्ट्रमभङ्क्ष्यदेतत् ॥ ३९ ॥
सत्यव्रतः किमपरं नल एव राजा यः कूबरस्य कितवस्य ददाति राज्यम् ।
युद्धेन कस्तृणमपि क्षमतेऽस्य नेतुं यः कौञ्चकर्णमपि तं हतवान् किलैकः ॥ ४० ॥
इत्थं मिथः सकलपौरवचांसि शृण्वन् प्राप्तः पुरीपरिसरे सरसीतटस्थम् ।
स्तम्भं महान्तमवलोक्य नलस्तदानीं दध्यौ महोदधिरिवाकलनीयरूपः ॥ ४१ ॥
यत्रागतः परिवृतः पृतनासहस्रैरुद्धूयमानचमरो विधृततातपत्रः ।
तत्रैव भीमसुतया सह राजमार्गे पश्यन्ति मां चरणचारिणमत्र लोकाः ॥ ४२ ॥

कर्माधीनमेव सर्वम् ॥

निर्जित्य किन्तु रिपुभिर्न हृता मम श्रीर्द्यूते जितो यदनुजेन ततः किमासीत् ? ।
निःसारनेव मयि संप्रति लोकचित्ते जानन्तु हन्त ! मम जानपदा बलं तत् ॥ ४३ ॥
इति समचतुरस्रं क्रोशषष्ठाङ्गतुङ्गं शतकरपरिणाहं स्तम्भमुन्मूलयंस्तम् ।
स नियति युगमात्रं शीघ्रमुत्क्षिप्य नीत्वा पुनरपि हि तथैव न्यस्तवान् वज्रहस्तः ॥ ४४ ॥
तद् विस्मिता नलबलं समुदीक्ष्य लोकाः स्तम्भे समेत्य लिखितां ददृशुः प्रशस्तिम् ।
भावी त्रिखण्डभरताधिपतिः स नूनमुत्थाप्य यः पुनरिमं विनिधास्यतीति ॥ ४५ ॥
ऐतिह्यमेतत् परिभाव्य सर्वैः सम्भाव्यमानप्रसरत् पुनः श्रीः ।
गङ्गातटं प्राप स भीमपुत्र्या देव्यानुयातो निषधाधिराजः ॥ ४६ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने चतुर्थस्कन्धे अष्टमः सर्गः ॥ ८ ॥

## चतुर्थे स्कन्धे नवमः सर्गः ।

तत्र राज्यपरित्यक्तः प्रियामात्रपरिच्छदः । अध्युवास वियापेतः स वेतसतरोस्तले ॥ १ ॥
पश्यन् पुरं परित्यक्तं दीर्घमुष्णं च निःश्वसन् । मापराधमिवात्मानं मेने मनसि पार्थिवः ॥ २ ॥

इति कर्त्तव्यतामूढः सर्वोपायपराङ्मुखः । न जजल्प स वैदर्भ्या देव्याऽपि सह पार्थिवः ॥ ३ ॥
राजदण्डभयापेक्षी कूबराज्ञानियन्त्रितः । नान्ववर्त्तत तं कश्चित् पौरजानपदो जनः ॥ ४ ॥
शय्याऽऽसनपरित्यक्तः पानाशनविवर्जितः । व्रतीव स बभौ राजा निरगारं वने वसन् ॥ ५ ॥
किं कुर्वन्नस्ति विध्वस्तो बलिना कलिना नलः । अवेक्षितुमिवात्युच्चैरारुरोह दिवाकरः ॥ ६ ॥
तस्याभिनवदुःखस्य चकार कमपि क्लमम् । निदाघसमयोत्पन्नस्तीव्रः कलिरिवातपः ॥ ७ ॥
ततस्तस्य मनो हर्त्तुं गङ्गामाहात्म्यपृच्छया । वैजयन्ती तमित्यूचे वैदर्भी कदलीदलैः ॥ ८ ॥
अयि देव ! दुरुत्तारा सैवेयं विश्वविश्रुता । रङ्गतुङ्गतरङ्गा किं गङ्गा नाम सरित् किल ? ॥ ९ ॥
इत्येतदनुयुक्तः सन् देव्या दयितभक्तया । कौञ्चकर्णारिरारेभे वक्तुं युक्ताभिरुक्तिभिः ॥ १० ॥
आम वामाक्षि ! यत्साक्षात् सैवेयं सुरनिम्नगा । दत्ते नव निधानानि या तुष्टा चक्रवर्त्तिनाम् ॥ ११ ॥
सुशीतं शतपत्राक्षि ! निर्मलं नर्मवादिनि ! । गङ्गावारि वरारोहे ! सुशीले ! परिशीलय ॥ १२ ॥
इति जल्पन् समं देव्या परिसर्पन् शनैः शनैः । विधिं माध्याह्निकं चक्रे गङ्गास्रोतसि नैषधः ॥ १३ ॥
विधाय वारिणा वृत्तिं विधिना विधुरीकृतः । वासरं वाहयामास वैरसेनिर्विशांवरः ॥ १४ ॥
वासतेयी ययौ तस्य वालुकातल्पशायिनः । वहन् मरुति निःसङ्गरथाङ्गे गाङ्गरोधसि ॥ १५ ॥
इत्थं च तथुस्पस्तस्य राज्ञस्तत्र दिनत्रयम् । सामन्ता योग्यभक्तयर्थमन्वमन्यन्त कूबरम् ॥ १६ ॥

शस्त्रास्त्रप्रपूर्णं व्याघ्रस्नायुसमन्वितम् । ते तस्मै तुरगोद्वाह्यं प्राहिण्वन् काञ्चनं रथम् ॥ १७ ॥
ततो भुक्त्वा रथारूढः प्रियया सह साहसी । अनुद्दिश्य दिशं राजा प्रतस्थे सारथिः स्वयम् ॥ १८ ॥
अतिक्रम्य स वेगेन राजा राजन्वतीं भुवम् । पपात पर्वतोद्देशं भिल्लपल्लीवनाकुलम् ॥ १९ ॥
तदीयरथनिर्घोषं श्रुत्वा निर्घातभैरवम् । अधावन् सहसारोद्धुं किराताः कृत्तिवाससः ॥ २० ॥
पुलिन्द्रसेनया रुद्धा रेजिरे गिरयः क्षणम् । विष्वक् प्रचलिता कालकालिकाकलिता इव ॥ २१ ॥
त्यज त्यजेति जल्पन्तः समं तेन डुढौकिरे । कृतकोलाहलाः सर्वे नाहलाः कलहायितुम् ॥ २२ ॥
दृढध्वानं धनुर्धुन्वन् वितन्वन् शरदुर्दिनम् । न पारं मारयन् प्राप किरातानां महाभुजः ॥ २३ ॥
संमोहनास्त्रमुख्यानि शस्त्राण्यपि हि तत्क्षणम् । देहं त्यक्त्वा ययुस्तस्य सहसा कलिकोपतः ॥ २४ ॥
भयादपि रथोत्सङ्गाद् भैमीमुत्तार्य सत्वरम् । दूरीबभूव भूपालः कालज्ञस्त्यक्तविग्रहः ॥ २५ ॥
ययुः स्यन्दनमादाय किराताः सर्वसंभृतं । अथार्थिनो हि ते दुष्टाः न पुनः प्राणवैरिणः ॥ २६ ॥
ततश्चरणचारेण प्रियया सह सञ्चरन् । प्राप श्वापदसङ्कीर्णां विकटामटवीं नलः ॥ २७ ॥
अतिक्रामन्नरण्यानीं नलः प्रबलसाहसः । ददर्श मस्करस्कन्धे चिन्वतः कर्णविष्किरान् ॥ २८ ॥
तान् वीक्ष्य पक्षिणो हैमान् विस्मयस्मेरलोचनः । देवीमुद्दिश्य वैदर्भीमिदं वचनमब्रवीत् ॥ २९ ॥
कुरुविन्दक्रमच्छन्ना बालवायजचञ्चवः । इन्द्रनीलदृशः कान्ताः शकुन्ताः कनकच्छदाः ॥ ३० ॥

दृश्यन्ते पश्य पद्माक्षि ! नन्वदृष्टचरानमून् । अहं गृहीतुमिच्छामि वहुमूल्या हि खल्वमी ॥ ३१ ॥ युग्मम् ।
वहन्ति हारिणीं मूर्त्तिं देवमायामया ह्यमी । अश्रद्धेया न गृह्यन्ते किमेभिः स्यात् प्रयोजनम् ? ॥ ३२ ॥
यदि ते पैतृकं द्रव्यं स्थावरं करतश्च्युतम् । अधुना जातपक्षं तत् कनकं किं जिघृक्षसि ? ॥ ३३ ॥
उक्तवत्यामपि व्यक्तमिति देव्यां महीपतिः । तेषामुपरि बन्धार्थमुत्तरीयं स्वमक्षिपत् ॥ ३४ ॥
तदुत्तरीयमुत्क्षिप्य समुड्डीय च ते खगाः । अगोचरमुपायानां वियद्दूरं जगाहिरे ॥ ३५ ॥
हृत्वा पटमपि प्राप्तान् तान् दुष्टान् तस्करानिव । राजा वीक्ष्य सवैलक्ष्यं दध्यौ विधिविजृम्भितम् ॥ ३६ ॥
अहो ! विपरिवर्त्तन्ते मम भाग्यानि संप्रति । यदद्य किल कुर्वन्ति पक्षिणोऽपि पराभवम् ॥ ३७ ॥
एकः स समयो यस्मिन् दूत्यं कुर्वन्ति पक्षिणः । हन्त संप्रति संप्राप्तास्त एव मम शत्रुताम् ॥ ३८ ॥
इत्थं चिन्ताप्रपन्नं तं पश्यन्तः पक्षिणो रुषा । मनुष्यवचनैरुच्चैराचुक्रुशुरलं नलम् ॥ ३९ ॥
यैस्तवापहृतं राज्यं वनवासः कृतस्तव । त्वमस्मान् विद्धि दुर्बुद्धे ! तानक्षान् द्यूतमन्त्रिणः ॥ ४० ॥
सर्वसौवर्णमात्मानं दर्शयामः सदा वयम् । असद् ये धनमिच्छन्ति तेषां पुनरियं गतिः ॥ ४१ ॥
यदि नाम नहि च्छिन्नं हस्तपादादिकं तव । तदुत्तरीययुक्तं त्वां किं तितिक्षामहे वयम् ? ॥ ४२ ॥
विश्वस्तघातकानस्मान् पर्युपास्ते नरस्तु यः । बाह्यमाभ्यन्तरं वाऽपि तस्य संवरणं कुतः ? ॥ ४३ ॥
वालुकाभ्योऽपि तैलं स्यात् क्वचिद् वह्निर्जलादपि । राजन् ! जानीहि न क्वापि त्वमक्षेभ्यो धनं पुनः ॥ ४४ ॥

विपरीते कर्मणि सर्वं विपरीतमेव ॥

इति स तद्वचः शृण्वन् प्रत्युत्तरमनर्पयन् । प्रत्यायित इव द्विष्टैरसूयां प्राप कामपि ॥ ४५ ॥
संनिमिपरिधानार्द्रो मार्गश्रममसमाकुलः । तीव्रतृष्णार्त्तिवेगेन शुष्ककण्ठौष्ठकाकुदः ॥ ४६ ॥
परदुःखं स्वदुःखेन जानन् किमपि दुःसहम् । उवाच दयितां देवीं विवृत्तवदनो नलः ॥ ४७ ॥
आमृष्टकोकनदकोरकसौकुमार्यौ सौन्दर्यनिर्जितरसालतरुप्रवालौ ।
दर्भक्षती सुतनु ! शोणितवर्षिणौ ते मार्गे कथं नु चरणौ चलितुं क्षमेते ? ॥ ४८ ॥
इह भन्वगु नन्वमीपु नूनं स्थलशृङ्गाटककण्टकाकुलेपु ।
पदमेकमपि क्षमं न दातुं रवितप्तेपु विशेषतस्त्विदानीम् ॥ ४९ ॥
तीर्णप्राया तदियमटवी वासरश्चाल्पशेषः प्रेक्ष्यन्ते च प्रणयिनि ! पुरो नूतनानूपकच्छाः
उत्कूजद्भिः कलमविरलं सारसैः सूच्यमानः स्त्यानच्छायस्तिलकयति नो वर्त्मभागं तडागः ॥ ५० ॥
अयि ! मम किमिवास्ति देव ! दुःखं ? प्रियतमसङ्गमसौख्यसुस्थितायाः ।
व्यथयति यदि केवल मनो मे नृपतिपितामह ! तावकी दशेयम् ॥ ५१ ॥
कथमिदमपरिमृष्टदेशकालं द्रुतमवितर्कितहेतु गम्यते तत् ।
ननु निरतिशुपामियं हि चर्या नरवरचन्द्र ! न भूभुजां क्रमोऽयम् ॥ ५२ ॥
भुवनविजयिना त्वया हि नीता दिशि दिशि दास्यपदं पुरा नरेन्द्राः ।

विवरमिदमुपेत्य सांप्रतं ते निजविकृतिं त्वयि देव ! मा स्म कुर्वन् ॥ ५३ ॥
ग्रहबलमधुना न तेऽनुकूलं व्यसनमिदं च दुनोति देव ! यावत् ।
श्वशुरकुलमलङ्कुरुष्व तावत् यदि मयि नाथ ! विधित्सति प्रसादम् ॥ ५४ ॥
धवलगृहगतोऽपि विश्ववन्द्यं प्रियमतिथिं च भवन्तमभ्युपेत्य ।
सुखमिव लभतां स तीर्थयात्राफलमधुना भुवि भीमभूमिपालः ॥ ५५ ॥
इति कथमपि भीमभूपपुत्र्या रतिसमयासमयज्ञयार्थ्यमानः ।
अनभिमतपराश्रयानुरोधो नृपतिलकः सपदि त्रपामवाप ॥ ५६ ॥
अस्त्वेवमेव ननु देवि ! यदात्थ तथ्यमित्थं वदन् दयितया सह सार्वभौमः ।
स प्राप तापशमनं कमठोपमानो मानोन्नतस्ततपयः प्रसरं सरस्तत् ॥ ५७ ॥
तस्मिन् पीत्वा दलविनिहितं कान्तयैवोपनीतं शीतं वारि स्फुटपुटकिनीपुष्पगन्धानुविद्धम् ।
वृत्तिं चक्रे तटतरुफलैराम्रजम्बीरमुख्यैः साक्षीकुर्वन् वनपरिसरं सर्वतो वैरसेनिः ॥ ५८ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने चतुर्थस्कन्धे नवमः सर्गः ॥ ९ ॥

## चतुर्थे स्कन्धे दशमः सर्गः ।

ततः कमलिनीभर्त्तुरर्द्धबिम्बमदृश्यत । अस्ताचलशिरःसीम्नि शिलिन्ध्रमिव निर्गमम् ॥ १ ॥
निष्यह तिमिरपूरेण व्याप्यमाने महीतले । आरोहन् पक्षिणः शीघ्रं शिखराणि महीरुहाम् ॥ २ ॥
एकाकारं जगत् कुर्वन् उच्चनीचविभेदभित् । मुमूर्च्छ महिमा कामं तमिस्रस्य कलेरिव ॥ ३ ॥
अनक्षुर्विषया लोका बभूवुश्चतुरिन्द्रियाः । शब्दगन्धरसस्पर्शैः पदार्थाः प्रचकासिरे ॥ ४ ॥
लब्ध्वा तिमिरसङ्कीर्णे तमित्थं विजने वने । निःशङ्कः स्वैरमारेभे कलिश्छलयितुं नलम् ॥ ५ ॥
क नु संप्रति गन्तव्यं गमनीयाः कथं दिनाः ? । नृणां हि धनहीनानां न साध्यं न च साधनम् ॥ ६ ॥
हसन्ति दुर्जनाः स्वैरमङ्गीकुर्वन्ति वैरिणः । सहायाश्च विमुञ्चन्ति नरं धनविवर्जितम् ॥ ७ ॥
निर्धनस्य न साहाय्यं निःसहायस्य लाघवम् । लघीयसः सदाऽवज्ञाऽवज्ञातः किं नु जीवितम् ? ॥ ८ ॥
अद्य मन्यह ममेघ्नन्ति सततं शत्रवो मयि । छिद्रान्वेषणमेवैकं कर्त्तव्यं शत्रुसर्पयोः ॥ ९ ॥
बलवानपि दुःशीलैरेकाकी काकवृत्तिभिः । न तैः सह सभार्योऽहं सङ्ग्रामं कर्त्तुमीश्वरः ॥ १० ॥
अगेन रक्षणीया मे नाभविष्यद् यदि प्रिया । अहरिष्यन् किरातास्ते मदीयं तत् कथं रथम् ? ॥ ११ ॥
विनापि शत्रुसम्पातं दुर्वहा पथि भीमजा । नैवास्याः सुकुमाराङ्ग्याः क्षमोऽहं दुःखमीक्षितुम् ॥ १२ ॥

न पानमशनं किञ्चित् न शय्या न च वाहनम् । न सहाया न सामर्थ्यं कथं पन्थाऽतिवाह्यते ? ॥ १३ ॥
इयं च मम शुश्रूषां परिश्रान्तापि नोज्झति । क्लेशैकफलमेवाहमस्याः संप्रति केवलम् ॥ १४ ॥
न मां त्यक्त्वा पितृगृहं प्रहिताऽपि प्रयाति च । अस्याः पितृगृहे गन्तुं स्पृहा न मम सर्वथा ॥ १५ ॥
पूर्वं हि तादृशो गत्वा कथं कुण्डिनवासिनाम् । आत्मानमीदृशावस्थं दर्शयिष्यामि संप्रति ॥ १६ ॥
नृणां खलु कदर्याणां श्वशुरावासवासिनाम् । पितृनाम्ना समं याति महत्त्वं हतकर्मणाम् ॥ १७ ॥
उत्तमोऽमुक इत्युक्तोऽमुकस्सूरिति मध्यमः । जामेय इत्यप्यधमो जामातेत्यधमाधमः ॥ १८ ॥
इयं पितृगृहं प्राप्य यद्वा श्वशुरमन्दिरम् । स्वस्था तु यदि पत्नी स्यात् ततश्चिन्ता न काऽपि मे ॥ १९ ॥
एकाकी यत्र कुत्रापि यस्य तस्यापि सन्निधौ । पश्चाद् यथा तथा वापि कालं निर्गमयाम्यहम् ॥ २० ॥
जनमात्रस्य मे कश्चिद् न शत्रुभ्यः पराभवः । न मार्गणगणोद्वेगो न लज्जा परसेवया ॥ २१ ॥
अनया विप्रयुक्तं मां ज्योत्स्नयेव निशाकरम् । सोऽयमेवेति किं कश्चित् प्रत्येति शपथैरपि ? ॥ २२ ॥
पुस्तिका बालिशस्येव निर्धनस्येव सेवधिः । इयं न घटते पार्श्वे क्लीबस्येवासिपुत्रिका ॥ २३ ॥
तत्प्रपञ्चेन केनापि वञ्चयित्वा त्यजाम्यमूम् । मद्वियुक्ता यथा याति कमपि स्वजनाश्रयम् ॥ २४ ॥
अपि नाम मम क्वापि दुर्दशा विरमेदियम् । अपि जीवेदियं देवी संप्राप्य स्वजनाश्रयम् ॥ २५ ॥
क्व तद् मे साम्राज्यं नृपतिशतसङ्कीर्णसदनं क्व चायं नो दैवाद् मृगमिथुनवृत्तिव्यतिकरः ? ।

सदा कृत्याकृत्यस्मरणविमुखेभ्यः प्रभुतया नमः स्वच्छन्देभ्यो विधिविलसितेभ्यः किमपरम् ? ॥ २६ ॥
इत्थं किञ्चिन् प्रकृतिविषयं चिन्तयन्नात्मचित्ते शीघ्रं देव्या दिवसविगमे निर्मितं धर्मवत्या ।
भेजे राजा रजनिसमये राज्यलक्ष्मीवियुक्तः सन्तप्तात्मा कुवलयदलस्रस्तरं स्रस्तगात्रः ॥ २७ ॥
तस्यावस्थामतिशयने हस्तविन्यस्तमूर्ध्नो दर्शं दर्शं चरणयुगलं स्वाङ्कभागे वहन्ती ।
तत्रारेभे सुपरिचरितुं राजपुत्री कराभ्यामार्द्रार्द्राभ्यामविरलगलद्बाष्पपूरह्युवेन ॥ २८ ॥
हा ! धिक् कष्टं वननरचमूविग्रहाध्मातमन्योरक्षक्रीडान्यसनजनिता काण्डसर्वस्वहानिः ।
देवस्यास क्षितिपतिगुरोर्वेश्म तद्राजनीरं ? भैमीमात्रो गृहपरिजनस्तल्पमुर्वीतलं च ॥ २९ ॥
धिक् सौभ्रात्रं धिगधिकजनं धिग् महामात्यवर्गं धिग् धिग् लक्ष्मीं धिगधिकबलं धिक् कुलं धिक् सहायान् ।
येनैकाकी विकलकरणः कानने भूमिशायी ? पुण्यश्लोकः कथयति दशामीदृशीं राजहंसः ॥ ३० ॥
यद् यत् पूर्वं प्रियसहचरी केशिनी मामवोचत् तत् तत् सर्वं फलमविकलं दुर्निमित्तैः कृतं मे ।
सत्त्वः सोऽयं कपटपटुभिः कोटिभिर्व्यन्तराणां मत्प्रज्ञायाः स्फुटमविषयं रक्षितुं प्राणनाथः ॥ ३१ ॥
नूनं शून्यः क्वचिदपि विधौ मां विहाय प्रमत्तां स्वैरं राजा विरचयति यदा कस्तदानीं रुणद्धि ? ।
वारं वारं स्फुरति यदि वा दक्षिणं चक्षुरेतत् तद् मे सम्यग् दयितविरहः सर्वथा हा ! हताऽस्मि ॥ ३२ ॥
इत्थं चिन्तापरवशतया साध्वसाक्रान्तशून्यां राजन् ! राजन्निति सरभसं भीमजां व्याहरन्तीम् ।

जाताशङ्कः किमिति सहसा गाढमालिङ्ग्य राजा स्वस्थीचक्रे नयनसलिलं मार्जयन् मुक्तबाष्पः ॥ ३३ ॥
अयि ! कथमसि भीरु ! व्याकुला मुञ्च कम्पं न खलु तव समीपं देवि ! मुक्त्वा गतोऽस्मि ।
न कलयसि किल त्वं मां पुरःस्थं मृगाक्षि ! क्षिप मयि निजदृष्टिं पश्य सोऽहं नलोऽस्मि ॥ ३४ ॥
ननु सुतनु ! समन्तात् सावधानाऽसि जाता तव किमिदमिदानीं भीमभूपालपुत्रि ? ।
त्वमिह जगति तत्त्वं वेत्सि वैदर्भि ! सर्वं त्वमपि च दमयन्ति ! स्वान्तखेदं दधासि ॥ ३५ ॥
विरमतु परिचर्या सुप्यतां मार्गखेदज्वरभरपरिपाकव्याकुलैरङ्गभारैः
अहमपि निकटस्थः स्रस्तरन्यस्तगात्रः शशिमुखि ! तव रक्षां जागरूकः करोमि ॥ ३६ ॥
इति सकरुणधैर्यं भूभुजाऽऽश्वास्यमाना सपदि हृदयकम्पं भीमजा सन्निगृह्य ।
मनसि जगदधीशं देवदेवं स्मरन्ती कुवलयदलतल्पं लीलयाऽलञ्चकार ॥ ३७ ॥
मा नाम पांशुमशकादिकदर्थनाऽभूदित्यात्मनो निवसनेन पतिं परीत्य ।
तस्याञ्चलं निजतले विनिवेश्य भैमी निद्रां चकार नलयानभयं निरस्य ॥ ३८ ॥
वात्सल्याद् जननी स्नुषा विनयतस्तीर्थं च साध्वीगुणाद् वैदग्ध्यात् सचिवः सखी परिचयाद् दासी क्रमोपासनात् ।
आत्मान्तःकरणं वपुः किमथवा सर्वं हि मे भीमजा सत्यां भीमभुवि क्रमः क इव मे किं वा मया हारितम् ? ॥ ३९ ॥
अद्यापि मे सहचरं सकलं कुटुम्बमद्यापि राज्यमिह मे वनवासिनोऽपि ।

यावत् समीपमधितिष्ठति विष्टपैकविस्तारिकीर्तिकुमुदा दमनस्य जामिः ॥ ४० ॥
इत्थं चिन्तयतो नलस्य निभृतं देवीदुकूलस्फुरन्मायाबीजविदर्भितस्य नृपतेः सद्यो विधातुं पृथक् ।
सेहे तत्र जगत्त्रयीविघटनाशल्यप्रवीणोऽपि सन् वैदर्भीगुणगुम्फगूढघटितं न स्नेहतन्तुं कलिः ॥ ४१ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने चतुर्थस्कन्धे दशमः सर्गः ॥ १० ॥

## चतुर्थे स्कन्धे एकादशः सर्गः ।

अथ तन्मिथुनं रेजे दुकूलवलयस्थितम् । एकशम्बासमुत्पन्नमिव मुक्ताफलद्वयम् ॥ १ ॥
तिमिरं जर्जरीचक्रुस्तत्र भैमीशिरः स्थितम् । भालस्थलज्वलन्नित्यविशेषकशिखित्विषः ॥ २ ॥
तं वीक्ष्य गुम्फितप्रायं प्रियास्पर्शरसालसम् । वृथाऽबुद्धिः कलिस्तस्य राज्यभ्रंशं स्वयंकृतम् ॥ ३ ॥
ततः स्मृतसमागतसमग्रजनसैनिकः । डुढौके कलिरुत्कर्पादभिषेणयितुं नलम् ॥ ४ ॥
तमरण्याश्रयक्लेशं साक्षादनुभवन् नलः । चिरं चिखेद साम्राज्यलीलाललितलम्पटः ॥ ५ ॥
सङ्कल्प्य पत्युरात्मानं भुजपञ्जरगोचरम् । सुखं सुष्वाप निःशङ्का भीमभूपालनन्दिनी ॥ ६ ॥
तां वीक्ष्य पतितां व्योम्नः क्षितौ चन्द्रकलामिव । अचिन्त्यचरितं दैवं शुशोच सुचिरं नृपः ॥ ७ ॥

विभिन्नरत्नवद् राज्यमपुनर्योज्यमात्मनः । सम्भाव्य भग्नसामर्थ्यो धैर्यध्वंसमवाप सः ॥ ८ ॥
विहाय दक्पथं तस्या गन्तुकामः स लज्जया । दध्यौ कलिबलग्रस्तसमस्तगुणगौरवः ॥ ९ ॥
अहो ! त्रिलोकमङ्गल्या भीमपुत्री दमस्वसा । वीरसेनस्नुषा देवी मया पत्या विडम्ब्यते ॥ १० ॥
न मम द्यूतकारस्य सतीयं युज्यतेऽन्तिके । कपालमालिनो मौलौ कला चान्द्रीव शूलिनः ॥ ११ ॥
इमां संप्रति सन्त्यज्य क्षीणचन्द्रः क्षपामिव । अहं शूरस्य यास्यामि सकाशं कस्यचित् प्रभो ! ॥ १२ ॥

एकाकिनीं तदपहाय वने प्रसुप्तां प्राणप्रियामनुचरीं कुलजां सुसाध्वीम् ।
एतन्मया कुलवतामतिगर्हणीयमात्मोदरम्भरिपदं प्रतिपद्यतेऽद्य ॥ १३ ॥

एकः स्वदारपरिहारविधुर्नलोऽभूदेतद् यशः प्रसरतु त्रिजगत्सु नित्यम् ।
इत्थं विमृश्य स करं दयितोपधानस्थानस्थितं विघटयन् मनसा जगाद ॥ १४ ॥
इममभिनवरूपं कर्मचण्डालमुच्चैरयि ! परिहर मुग्धे ! पापिनं मामभव्यम् ।
ननु गुणगणवल्लि ! स्वेच्छयैवाधिरूढा कथमसि विषवृक्षं कल्पवृक्षभ्रमेण ? ॥ १५ ॥
कुलवति ! कुललज्जाशृङ्खला येन लुप्ता स खलु नलगजोऽहं निर्विवेकाङ्कुशोऽस्मि ।
तव निवसनमेतद् बन्धनं ब्रूहि मुग्धे ! मम किमिव हि लूतातन्तुतुल्यं तनोतु ? ॥ १६ ॥
या दुर्गभङ्गविषये परपार्थिवानां पूर्वं बभूव ननु भूवलयप्रसिद्धा ।

छेत्तुं प्रियानिवसनं तु पलायनार्थमथापि सैव महती मम हस्तवत्ता ॥ १७ ॥
तुभ्य हे नलहस्त ! दक्षिण ! मखे ! स्वस्त्यस्तु धैर्यं भज त्वं मे संप्रति बान्धवस्तदिह मे याच्ञा प्रमाणीकुरु ।
गुणावेशनिसंमुखीकृतमहासाम्राज्यलक्ष्मीक ! ते केयं भीमसुतानितम्बवसनच्छेदेऽपि लज्जालुता ? ॥ १८ ॥
पापातङ्कज्वरविधुरिता वेपथु स्रस्तशस्त्राः प्रौढप्रेमोपचयजडिता गाढलज्जाविजिह्माः ।
कष्टं कान्तानिवसनमिदं छिन्दतः सर्वथाऽमी वारं वारं कथमपि न मे हस्तघाताः पतन्ति ॥ १९ ॥
छिन्नं वासस्तदिदमधुना प्रेमपाशेन माकं त्यक्ता देवी मपदि मनसा लोकलज्जा च सद्यः ।
इत्थं राजा स्वगतमखिलं व्याहरन्नात्मकर्म प्रेक्षाञ्चक्रे नृपदुहितरं हन्त ! शेते नवेति ? ॥ २० ॥
एतत् तदेव वदनं क्षितिपालपुत्र्या निद्रानिमीलितमपि स्मितवद् विभाति ।
लक्ष्मीविलासमुकुरस्य यदग्रभागे भिन्दन्ति भालतिलकस्य रुचस्तमांसि ॥ २१ ॥
यूयं दिक्पतयः ! कुरुध्वमधुना भैम्यां मनो वत्सलं युष्माकं यदियं स्नुषा किमथवा तन्नाम गृह्णाम्यहम् ? ।
ते गर्ने कृतघातिना हतधिया मत्कीर्त्यमाना मया मन्ये कज्जलकर्दमैरिव भृशं लिप्तं वपुर्बिभ्रति ॥ २२ ॥
सेयं संप्रति मुच्यते भगवती गार्हस्थ्यलक्ष्मीः स्वयं क्लीबस्यैष नलस्य देवि ! चरमो मुग्धे ! प्रणामस्तव ।
धिग् धिग् रात्रिरियं प्रयातु विलयं यामः क्षयं यात्वसौ शीघ्रं संप्रति दह्यतां वनमिदं यत्र प्रिये ! मुच्यसे ॥ २३ ॥
श्रमविवशशरीरां भर्तृविश्वासबद्धां वनपरिसरसुप्तां भीरुमेकाकिनीं यत् ।

॥ ८ ॥
विभिन्नरत्नवद् राज्यमपुनर्योज्यमात्मनः । सम्भाव्य भग्नसामर्थ्यो धैर्यध्वंसमवाप सः ॥ ९ ॥
विहाय दक्पथं तस्या गन्तुकामः स लज्जया । दध्यौ कलिबलग्रस्तसमस्तगुणगौरवः ॥ १० ॥
अहो ! त्रिलोकमङ्गल्या भीमपुत्री दमस्वसा । वीरसेनस्नुषा देवी मया पत्या विडम्ब्यते ॥ ११ ॥
न मम द्यूतकारस्य सतीयं युज्यतेऽन्तिके । कपालमालिनो मौलौ कला चान्द्रीव शूलिनः ॥ १२ ॥
इमां संप्रति सन्त्यज्य क्षीणचन्द्रः क्षपामिव । अहं शूरस्य यास्यामि सकाशं कस्यचित् प्रभो !

एकाकिनीं तदपहाय वने प्रसुप्तां प्राणप्रियामनुचरीं कुलजां सुसाध्वीम् । ॥ १३ ॥
एतन्मया कुलवतामतिगर्हणीयमात्मोदरम्भरिपदं प्रतिपद्यतेऽद्य

एकः स्वदारपरिहारविभुर्नलोऽभूदेतद् यशः प्रसरतु त्रिजगत्सु नित्यम् । ॥ १४ ॥
इत्थं विमृश्य स करं दयितोपधानस्थानस्थितं विघटयन् मनसा जगाद

इममभिनवरूपं कर्मचण्डालमुच्चैरयि ! परिहर मुग्धे ! पापिनं मामभव्यम् । ॥ १५ ॥
ननु गुणगणवल्लि ! स्वेच्छयैवाधिरूढा कथमसि विषवृक्षं कल्पवृक्षभ्रमेण ?

कुलवति ! कुललज्जाशृङ्खला येन लुप्ता स खलु नलगजोऽहं निर्विवेकाङ्कुशोऽस्मि । ॥ १६ ॥
तव निवसनमेतद् बन्धनं ब्रूहि मुग्धे ! मम किमिव हि लूतातन्तुतुल्यं तनोतु ?

या दुर्गभङ्गविषये परपार्थिवानां पूर्वं बभूव ननु भूवलयप्रसिद्धा ।

छेत्तुं प्रियानिवसनं तु पलायनार्थमद्यापि सैव महती मम हस्तवत्ता ॥ १७ ॥

तुभ्यं हे नलहस्त ! दक्षिण ! मरो ! स्वस्त्यस्तु धैर्यं भज त्वं मे संप्रति बान्धवस्तदिह मे याच्ञा प्रमाणीकुरु ।
धृतानेकशत्रुसंस्थूलीकृतमहासाम्राज्यलक्ष्मीक ! ते कथं भीमसुतानितम्बवसनच्छेदेऽपि लज्जालुता ? ॥ १८ ॥

पापातङ्कज्वरविधुरिता वेपथु स्रस्तशस्त्राः प्रौढप्रेमोपचयजडिता गाढलज्जाविजिह्माः ।
कष्टं कान्तानिवसनमिदं छिन्दतः सर्वथाऽमी वारं वारं कथमपि न मे हस्तघाताः पतन्ति ॥ १९ ॥

छिन्नं नागस्तदिदमधुना प्रेमपाशेन साकं त्यक्ता देवी सपदि मनसा लोकलज्जा च सद्यः ।
इत्यं राजा स्वगतमखिलं व्याहरन्नात्मकर्म प्रेक्षाञ्चक्रे नृपदुहितरं हन्त ! शेते नवेति ? ॥ २० ॥

एतत् तदेव वदनं क्षितिपालपुत्र्या निद्रानिमीलितमपि स्मितवद् विभाति ।
लक्ष्मीविलासमुकुरस्य यदग्रभागे भिन्दन्ति भालतिलकस्य रुचस्तमांसि ॥ २१ ॥

यूयं दिक्पतयः ! कुरुध्वमधुना भैम्यां मनो वत्सलं युष्माकं यदियं स्नुषा किमथवा तन्नाम गृह्णाम्यहम् ? ।
ते सर्वे कृतघातिना हतधिया मद्कीर्त्यमाना मया मन्ये कज्जलकर्दमैरिव भृशं लिप्तं वपुर्बिभ्रति ॥ २२ ॥

सेयं संप्रति मुच्यते भगवती गार्हस्थ्यलक्ष्मीः स्वयं क्लीबस्यैष नलस्य देवि ! चरमो मुग्धे ! प्रणामस्तव ।
धिग् धिग् गतिरियं प्रयातु विलयं ग्रामः क्षयं यात्वसौ शीघ्रं संप्रति दह्यतां वनमिदं यत्र प्रिये ! मुच्यसे ॥ २३ ॥

श्रमविवशशरीरां भर्तृविश्वासबद्धां वनपरिसरसुप्तां भीरुमेकाकिनीं यत् ।

अकलितकुललज्जः प्रेयसीं फेलिकावत् बलिमिव बलवद्भ्यः श्वापदेभ्यः क्षिपामि ॥ २४ ॥
दुर्वारदारुणनिरन्तरशोकमोहलज्जावसादगहनो विषमः क्षणोऽयम् ।
नो वेद्मि भीमतनयामपहाय शीघ्रं गन्तुं सुखेन मम दास्यति वा नवेति ॥ २५ ॥
भवति विरतिमेषा याति यावद् न रात्रिर्दिशि विदिशि च यावत् क्रूरसत्त्वाश्चरन्ति ।
विपिनभुवि मदीयप्रेमविश्रम्भसुप्तां जिगमिषुरपि तावत् प्रेयसीं पालयामि ॥ २६ ॥
दारत्यागी कठिनहृदयः किञ्च विश्वासघातीत्येवं नित्यं परिवदतु मामेष सर्वोऽपि लोकः।
राज्यभ्रष्टः श्वशुरनगरीमप्रपित्सुः सुखार्थी नैवानुज्झन् पुनरहमिमामन्यथा सुस्थितः स्याम् ॥ २७ ॥
इति क्षोणीपालः प्रियजनवियोगार्त्तिलहरीसहस्रव्याकीर्णं प्रबलकलिकीलाकुलमपि ।
मनः प्रेङ्खारूढं दधदुभयतः प्रौढमहिमा गतायातैश्चक्रे वनपरिसरं राजपथवत् ॥ २८ ॥
भ्रातश्चूत ! सखे ! कदम्बविटपिन् ! वत्स ! प्रियालद्रुम ! त्यक्ताऽऽस्ते फलपुष्पपल्लवजुषां युष्माकमेषाऽन्तिके ।
तद् दुर्वारवियोगवज्रपतनप्रत्यग्रमूर्च्छागमे चैतन्यं लभते यथा पुनरियं छाया विधेया तथा ॥ २९ ॥
अपि च जगति तुङ्गाः सानुमन्तो भवन्तः परिचितमिह पक्षच्छेददुःखं भवद्भिः ।
तदियमुभयपक्षभ्रंशमासाद्य दीना निषधपतिकलत्रं रक्ष्यतां भीमपुत्री ॥ ३० ॥
अहमपि च विचित्रं वाचिकं किञ्चिदस्याः प्रणयमयमसर्षच्छेदि संपादयामि ।

निजमनसि यदाशाबन्धनं धारयन्ती कथमपि न यथाऽसौ जीवितव्यं जहाति ॥ ३१ ॥

इति निवमनपत्रे नैषधस्तत्र तस्यास्तिमिरपरिकरेऽपि व्यक्तसंस्कारशक्त्या ।
इदमलिखदखिन्नं छिन्नजङ्घा विनिर्यत्तरुणरुधिरधारासक्तशस्त्रीमुखेन ॥ ३२ ॥

ईदृशः श्वशुरवेश्मनि लज्जे नेक्षितुं तव पथि क्रममीशः ।
तन् क्षमस्व दयिते ! मम गन्तुं कारणेन न परेण गतोऽस्मि ॥ ३३ ॥

कुण्डिनं प्रति वटेन पुरोऽध्वा किंशुकेन निषधां प्रति पश्चात् ।
देवरस्य भज वेश्म पितुर्वा मद्वियोगसमयं गमयन्ती ॥ ३४ ॥

यदि रिपुकुलसिन्धौ न क्वचिद् भीरु ! मग्नो न च यदि गदमुख्यैरन्तरायैर्विपन्नः ।
पुनरधिगतवित्तस्थानलाभस्य तद् मे सुमुखि ! सलिलपानं त्वन्मुखेनेक्षितेन ॥ ३५ ॥

भूयो राजा रजनिमखिलामौषधिस्पर्द्धयेव व्याकुर्वन्तीं दिशि दिशि भृशं निर्भरं भालभासः ।
तस्यौ दुःस्थः कथमपि सह स्वात्मना नेतुकामः पश्यन् पत्नीं निधिमिव चिरं चौरवद् दूरसंस्थः ॥ ३६ ॥

दुःखावेगविदीर्यमाणहृदयन्यस्तस्वहस्तो जवादाक्रन्दध्वनिमुच्चकैर्विरचयन् हा तात ! ताततेति सः ।
त्यक्त्वा लोचनगोचरात् प्रियतमामत्यन्तनिद्रालसामेकाकी सहसा विवेश विवशः सञ्चार घोरं वनम् ॥ ३७ ॥

माभूवन् विपदः शरीरजरुजां मा दुष्टसत्त्वव्यथा माभूद् दुर्जनविद्रवः क्वचन ते मा जृम्भकेभ्यो भयम् ।

निश्चिन्ता दमयन्ति ! बन्धुसदनं लप्सीय शीघ्रं सुखं जल्पन्नित्थमसौ भृशं दश दिशः पश्यन् द्रुतं निर्ययौ ॥ ३८ ॥
तस्य सत्क्रमविकारकारकैरुत्पथैरुभयथाऽपि गच्छतः ।
स्वैरघोरघनघर्घरारवा वायवः सपदि संमुखा ववुः ॥ ३९ ॥

इतिश्रीमाणिक्यदेवसूरिकृते नलायने चतुर्थस्कन्धे एकादशः सर्गः ॥ ११ ॥

## चतुर्थे स्कन्धे द्वादशः सर्गः ।

ततो वहलधूलीकैरन्धकारितदिग्मुखैः । मरुद्भिर्जृम्भितं ग्रीष्मवासरारम्भसम्भवैः ॥ १ ॥
प्रभञ्जनघनोद्धूतद्रुमसङ्घट्टसम्भवः । अथ तत्र समुत्तस्थौ दारुणः सहसा दवः ॥ २ ॥
स्फुटद्वेणुत्रटत्कारैः सकरक्षोभमोटनम् । आचुक्रुशुरिव ज्वालाः कलत्रत्यागिनं नलम् ॥ ३ ॥
विश्वस्तघातिनो राज्ञः किल्बिषस्येव कक्षया । तत्क्षणं कलुषीचक्रे कृष्णवर्त्मा स रोदसी ॥ ४ ॥
तादृग् दवाग्निसंमर्दे तत्रार्त्तस्येव कस्यचित् । राजन् ! नल ! नलेत्युच्चैरश्रूयन्त प्लुता गिरः ॥ ५ ॥
किमियं कर्णयोर्भ्रान्तिराहोस्विद् वक्ति कोऽपि किम् ?। चिन्तयन्निति वाचस्ताः शुश्राव स पुनः पुनः ॥ ६ ॥
इहापरिचितस्थाने क एष मम सूचकः ? । किमस्य पुरुषस्यैवं ममाऽऽकारणकारणम् ? ॥ ७ ॥
तद् वेद्मि किमिदं तावदिति राजाऽप्यवीवदत् । कस्त्वं भोः ! क किमर्थं मां भूयो भूयोऽभिभाषसे ? ॥ ८ ॥

अहमस्मि महागर्त्ते पतितो वह्निवेष्टितः । त्वां वदामि तदागच्छ मामुद्धर महीधर ! ॥ ९ ॥
इति श्रुत्वा समागत्य गर्त्ताया निकटं नलः । मनुष्यभाषया सर्पं जल्पन्तं तत्र दृष्टवान् ॥ १० ॥
ऊष्मशुष्कमुखश्चाहं वाचाऽनुमितिगम्यया । उत्क्षिपोत्क्षिप मां राजन् ! रक्ष रक्षेति सोऽवदत् ॥ ११ ॥
स्पर्शः खलु विरुद्धस्ते कथमुद्ध्रियते भवान् ? । इत्युक्तः सोऽपि भूपेन व्याजहार भुजङ्गमः ॥ १२ ॥
क्वचिद्वयमनादिष्टा न दुष्टं कर्म कुर्महे । यदि त्वयि विरुद्धः स्यां त्रिसत्येन शपामि तत् ॥ १३ ॥
शीघ्रं पुनरतो गर्त्तात् कृतान्तमुखमीषणात् । मामुद्धर धराधीश ! पूर्वजं नरकादिव ॥ १४ ॥
ततः प्रमाणयन् याञ्चां भुजगस्य महाभुजः । भुजावलम्बनं तस्मै तरण्डमिव दत्तवान् ॥ १५ ॥
काकोदरं दुराराध्यमुद्धरन् काकुवादिनम् । भारभुग्नभुजो राजा निर्जगाम शनैः शनैः ॥ १६ ॥
न त्वामहं महाकायं दूरमुद्वोढुमीश्वरः । क मुञ्चामीति राज्ञोक्ते दम्भात् कुम्भीनसोऽवदत् ॥ १७ ॥
इतो नव पदानि त्वं गणयन् गच्छ भूपते ! । दिक्सङ्ख्ये तु पदे प्राप्ते विदध्या मम मोचनम् ॥ १८ ॥
इति तद्वचनाद् राजा पदानि गणयन्नगात् । एकद्वित्रिचतुःपञ्चषट्सप्ताष्टनवावधिः ॥ १९ ॥
दशमे तु पदे प्राप्ते स यावद् मोक्तुमिच्छति । प्रकोष्टे निष्ठुरं दष्टः स तावत् तेन भोगिना ॥ २० ॥
दष्ट्वा च कुण्डलीकृत्य भोगाभोगं फणीश्वरः । तस्यैव सम्मुखस्तस्थौ साभिप्रायं विलोकयन् ॥ २१ ॥
तद्विषानलदग्धस्य नलस्य च शरीरतः । शुष्कवृक्षादिवोत्तस्थौ धूमस्तिमिरसोदरः ॥ २२ ॥

स सद्यः प्राप्तसंस्थानवर्णस्वरविपर्ययः । दग्धसौभाग्यसम्भारं बभार विकृतं वपुः ॥ २३ ॥
विपस्थपुटितस्थूलसिरास्थिग्रन्थिवीथिभिः । ततान तत्तनुर्जीर्णनिम्बस्तम्बविडम्बनाम् ॥ २४ ॥
हयवद् ग्रीवया वक्रः क्रूरः पोत्रीव दंष्ट्रया । गोवत् ककुद्मान् पृष्ठेन वैचित्र्यं प्राप नैपधः ॥ २५ ॥
बभूव कुटिला घोणा त्रिकोणमभवच्छिरः । तस्य शीघ्रमजायेतां चक्षुषी चोर्ध्वपिच्छले ॥ २६ ॥
श्रियमञ्जनपुञ्जस्य निह्नुवानः स रोचिपा । लिप्तः प्रियापरित्यागपातकैरिव दिद्युते ॥ २७ ॥
आत्मानमीदृशावस्थं विह्वलः स विलोकयन् । दुरुदर्कं स्वचित्तेन दारत्यागं विचिन्तयन् ॥ २८ ॥
तमुग्रमग्रभागस्थं दृष्टं दृष्टिकटुं भृशम् । पन्नगं प्रति रोपान्धः साक्षेपमिदमब्रवीत् ॥ २९ ॥ युग्मम् ।
आः पाप ! कथमद्यापि पुरस्ताद् मम तिष्ठसि ? । दर्शयन् मुखमात्मीयं किं निर्लज्ज ! न लज्जसे ? ॥ ३० ॥
धिग् धिग् रामठनीरेण सिक्तं माकन्दकाननम् । विपदृष्ट्या कथं ध्वस्तं त्वया रम्यं वपुर्मम ? ॥ ३१ ॥
वरं श्लाघ्यतमो मृत्युरितो मे कुब्जजीवितात् । कथं दुष्ट ! विनिर्दिष्टा त्वया मे नित्ययातना ? ॥ ३२ ॥
उपकारपरं साधु विश्वस्तं वचसि स्थितम् । दशता निर्विरोधं मां कस्त्वयाऽर्थः समर्थितः ? ॥ ३३ ॥
भवादृशैर्दुराचारैर्दीनानां दुर्दशापहः । परोपकारमार्गोऽयं परेपामपि भज्यते ॥ ३४ ॥
युक्तं शिरसि वः कर्णौ न जातौ मूलतोऽपि यत् । करोति कर्ममर्मावित् सकर्णः क इवेदृशम् ? ॥ ३५ ॥
बभूव भवतां स्थानं स्थाने च जगतामधः । तदधोऽपि पुनर्गन्तुं कर्मभिः परिभाव्यते ॥ ३६ ॥

जगत्प्राणभुजः पङ्गून् द्विजिह्वान् कर्णवर्जितान् । मलिनान् जिह्मगान् युष्मान् कथं कद्रूरजीजनत् ? ॥ ३७ ॥
अयं ममैव दोषो हि यद् मृत्युमुखगोचरम् । कृतघ्नं त्वामपाकृष्य प्रपन्नं फलमीदृशम् ॥ ३८ ॥
युक्तमेव त्वयाऽऽचीर्णं मयि प्रणयिनि प्रियम् । विदधाति सुखं किं वा कपिकच्छूरुरीकृता ? ॥ ३९ ॥
धिग् धिक् परोपकारं तं यत्र स्वात्मा विडम्ब्यते । दत्त्वा भट्टस्य कौपीनं नग्नत्वं नूनमात्मनः ॥ ४० ॥
सहस्रगुणनीचः स्याद् नीचपात्रप्रदानतः । वामनाय भुवं दत्त्वा पाताले प्रययौ बलिः ॥ ४१ ॥
किमर्चितैर्दुराचारैः किमाराद्धैः कुदेवतैः ? । सिक्तस्य विषवृक्षस्य विपाकः खलु दारुणः ॥ ४२ ॥
न चौरेभ्योऽभयं दद्याद् न कृपां परिशीलयेत् । आत्मनश्च परेषां च कर्त्तुं यदि हितं मतम् ॥ ४३ ॥
खलेषु नापकर्त्तव्यं नोपकर्त्तव्यमप्यहो ? । उपेक्षैव क्षमा तेषु स्वकर्मफलभागिषु ॥ ४४ ॥
न हि व्यापादयामि त्वां व्याल ! विश्वासघातकम् । स्वयमेव समाकृष्टं म्रियमाणं दवानलात् ॥ ४५ ॥
यद् मया विहितं तुभ्यं त्वया च मम यत् कृतम् । तत् तत् कर्मफलावाप्तिरस्तु नौ किमतः परम् ? ॥ ४६ ॥
अहो ! नु खलु भोः ! सर्वे देवासुरनरोरगाः ! । तिष्ठन्तु साक्षिणो यूयं दष्टोऽहमहिनाऽमुना ॥ ४७ ॥
यदि कश्चिद् न दोषो मे यदि साधु कृतं मया । तद् ममानुग्रहं कर्त्तुं सत्वरं यूयमर्हथ ॥ ४८ ॥
तस्यैवं शपमानस्य कुञ्जरूपस्य भूपतेः । विहस्य सामसंपन्नं पन्नगः पुनरुक्तवान् ॥ ४९ ॥
किमेवमन्यलीकं मामधिक्षिपसि पार्थिव ! । दशेत्युक्तस्त्वयैवाहं तेन दष्टो मया भवान् ॥ ५० ॥

प्रसाद एव देवानामयं च त्वयि संप्रति । रूपसंपत्तिनाशेन वृथा सन्तप्यसे नल ! ॥ ५१ ॥

इति ब्रुवाणः स नलस्य चित्ते दुःखं वितन्वन् विषनिर्विशेषम् ।
विहाय तं वैक्रियसर्पभावं मनुष्यरूपं प्रकटीचकार ॥ ५२ ॥

विकृतसर्परूपं त्यक्त्वा प्रकटीभूतो मनुजः ॥

अये ! किमेतद् ननु तावदेष स्वयं पितृव्यो मम वज्रसेनः ।
तातानुजस्यास्य पुरः स्वकीयं कथं मुखं दर्शयितुं सहिष्ये ? ॥ ५३ ॥

हा तात ! वात्सल्यवशादुपेत्य किमीदृशः संप्रति वीक्षितोऽस्मि ।
भवान्तरेणापि शठेऽप्यपत्ये न स्नेहपाशः शिथिलोऽथवा स्यात् ॥ ५४ ॥

राज्यं च धर्मश्च यशः सुखं च चत्वारि नीतानि मया विनाशम् ।
तत् तात ! दुष्टे कुलकण्टकेऽस्मिन् वृथैव वः प्रेम मयि प्रकामम् ॥ ५५ ॥

उज्झता शठतया निजपत्नीमत्र पापरतया वनमन्तः ।
अत्रपापरतया वनमन्तश्चिन्तिता न पितरोऽपि मया यत् ॥ ५६ ॥

गुणव्रजानां महतामहानये महानये वर्त्मनि तिष्ठतोऽपि मे ।
उदस्य चक्रे सहसा महापदं महापदं तात ! दुरोदरं मम ॥ ५७ ॥

इति बहु विलपन्तं राज्यधुर्यं सुतं तं स सपदि परिरभ्य व्याकुलः साश्रुनेत्रः ।

कनकमयमपूर्वं श्रीफलद्वन्द्वमस्मै मणिपरिकरचित्रं चारु दत्त्वा जगाद ॥ ५८ ॥
अहं पितृव्यस्तव वत्स ! पूर्वं जातः पुनः संप्रति कर्मयोगात् ।
लोकान्तरे नागकुमारवृत्त्या कर्कोटकाख्यो भुवनाधिनाथः ॥ ५९ ॥
ज्ञात्वाऽवधिज्ञानबलेन सर्वं तवाऽऽगतं संप्रति कष्टमेतत् ।
सान्निध्यमाधातुमुपागतोऽस्मि मा विस्मयं चेतसि वत्स ! कुर्याः ॥ ६० ॥
दुनोति हि प्राक्तनकर्म बद्धं भवन्तमद्य प्रतिहस्तरूपः ।
अग्राह्यनामा खलु देव एकस्त्वयाऽनुगम्यः समयान्तरे सः ॥ ६१ ॥
एकाकिनः शत्रुभयं विचिन्त्य रूपं परावृत्तमिदं मया ते ।
स्वच्छन्दचारी चिरमीदृशस्त्वं सुरक्षितः स्थास्यसि दुर्जनेभ्यः ॥ ६२ ॥
यर्हि स्वरूपं तव कर्त्तुमिच्छा तर्हि द्रुतं बिल्वसमुद्गमेतत् ।
उद्घाट्य वस्त्राभरणानि दध्याः प्रपत्स्यसे त्वं प्रकृतिं पुराणीम् ॥ ६३ ॥
अह च मुञ्चामि सुखप्रदेशे कुवासरान् यापयितुं भवन्तम् ।
अलङ्घ्यभावाद् भवितव्यतायाः कर्त्तुं परं नाहमपि क्षमस्ते ॥ ६४ ॥
इदं वदन् व्योमविसर्पिगन्धै--रन्धीकृतालिव्रजमातनद्भिः ।

कर्कोटको वत्सलताविहस्तस्तस्तार पुष्पप्रकरैः स पृथ्वीम् ॥ ६५ ॥
माभूद् राज्यं सकरितुरगं माभवन् भृत्यवर्गा भूयो युक्तं कथमपि पुनस्तात ! वध्वा विधेहि ।
तद्वाणीनामुपचितमिदं वक्तुकामोऽपि राजा सौख्योत्कर्षात् स सपदि तमः प्राप मूर्छां विनाऽपि ॥ ६६ ॥
उन्मील्य पश्यति च यावदसौ न तावत् तत् काननं न स दवो न स पूर्वजश्च ।
अभ्यञ्जितागमन एव जवादवाप पारिप्लवोर्मि नगरीनिकटं तडागम् ॥ ६७ ॥
इत्थं स विस्मृतवधूविरहः सरस्तत् व्यावर्ण्य वर्णनपरः परवीरहन्ता ।
बभ्राम काममभिरामतमप्रवेशं वेशं तवारिपरितः परितुष्टचित्तः ॥ ६८ ॥
तस्मिन् मानसमानमर्दिनि मनःसन्तोषपोषप्रदे विष्वक्पालिकपाटपाटनपटौ पारिप्लवैर्वारिभिः ।
तिर्यग्भीरवणक्वणन्नवनवक्रीडापतङ्गव्रजे शुद्धः सान्ध्यविधिं विधाय नगरीं द्रष्टुं ययौ नैषधः ॥ ६९ ॥

जनं तु तत्राभिमुखं स पृच्छन्नियं विनीतेत्युपलभ्य राजा
विक्षिप्तकालायनविप्रकर्षं दिव्यं दधौ वृत्तमचिन्त्यमन्तः ॥ ७० ॥
अत्रैव तच्च ऋतुपर्ण इति त्रिलोकीलोकम्पृणैर्गुणगणैः प्रगुणैः प्रतीतः ।
श्रीमानमेयमहिमा मम वालमित्रं भृङ्गेश्वरस्य तनयो विनयी नरेन्द्रः ॥ ७१ ॥
नव्यं तदेतद् मम संविधानं जातं सुहृत्सङ्गमनामधेयम् ।

मनुजरूपेण पितृव्येन प्रकटीकृतं कुब्जरूपकारणम् ॥

मया पुनः प्राकृतमात्रवृत्त्या स पार्थिवः संप्रति वीक्षितव्यः || ७२ ||
न तानि सौख्यानि न तत् प्रभुत्वं न तच्छरीरं वचसोऽधिवासः ।
दैवानुवृत्त्या मम कालयोगाद् भवान्तरं जीवत एव जातम् || ७३ ||
तदपरिचितवृत्तेरीदृशः सांप्रतं मे कथमिव सुखयात्रा तस्य राज्ञो भवित्री ।
इति विहितविमर्षो जातहर्षो नृपस्तां पुरममरपुरश्रीतुल्यभासं विवेश || ७४ ||

इति श्रीमाणिक्यदेवसूरिकृते नलायने चतुर्थस्कन्धे द्वादशः सर्गः ॥ १२ ॥

## चतुर्थे स्कन्धे त्रयोदशः सर्गः ।

यादृशः प्रविशन्नासीत् पुरः स पुरगोपुरम् । तादृशस्तुमुलस्तत्र समुत्तस्थौ भयङ्करः || १ ||
तरुप्राकारहर्म्याणामुपर्यारोहणक्रियाम् । अदृश्यन्त च कुर्वाणा जनाः पूरभयादिव || २ ||
धिग् धिग् हस्तिपकाः सौख्याद् गजशिक्षाप्रमादिनः । नो चेत् किं नो राजवाह्यो व्यालत्वमवलम्बते || ३ ||
स्वच्छायामपि निघ्नन्तं जिघृक्षुं पक्षिणोऽपि हि । शब्दमप्यनुधावन्तं गन्धमप्यभिकोपनम् || ४ ||
क इवैनं वशीकुर्यादुद्दाममददुर्दिनम् । भ्रमद्भ्रमरझङ्कारैरभिचारैरिवोल्वणम् || ५ || युग्मम् ।

भो भोः ! कश्चित् पुमानस्ति य एनं वशमानयेत् । ग्रामपञ्चशती तस्य प्रसादीकुरुते नृपः ॥ ६ ॥
हन्त ! दृष्टिपथं पौराः परित्यजत दूरतः । नश्य नश्य मृतः कुब्ज ! त्यज व्यालमुखं द्रुतम् ॥ ७ ॥
नीत्वा भूरिवसोः पुत्रीं करेण नलिनीमिव । दुरात्मा वारणः सोऽयमित एवाभिवर्त्तते ॥ ८ ॥
इत्युक्तः समकालं च निःशब्दपदसञ्चरम् । पुरस्तादेव दुर्दान्तं ददर्श करिणं नलः ॥ ९ ॥
रे रे मांसत्रसाकूट ! दीर्घनासिक ! दन्तुर ! । पशो ! पिशाच ! निःशङ्कमित्थं भ्रमसि किं भृशम् ? ॥ १० ॥
धिग् धिग् मातङ्गतुङ्गस्य भवतः स्त्रीषु पौरुषम् । अहमेकोऽस्मि रे ! युष्मद् मदज्वरभिषग्वरः ॥ ११ ॥
इति जल्पन् भृशं लोष्ठैर्निष्ठुरैस्तमताडयत् । पश्यतां पौरलोकानां जनयन् विस्मयं नलः ॥ १२ ॥ त्रिभिर्विशेषकम् ।
उत्तालपदसञ्चारः सत्सूत्कारकरः करी । अभ्यधावद् नलं हन्तुं रोषारुणविलोचनः ॥ १३ ॥
वातोद्धूतमिवाम्भोदं सपक्षमिव पर्वतम् । दृष्ट्वा तमभिधावन्तं हा ! हेति तुमुलोऽभवत् ॥ १४ ॥
तदीयकरसम्पातं वञ्चयन् वेगवत्तया । चरणद्वारमार्गेण स तं गृहमिवाविशत् ॥ १५ ॥
निस्तुलस्य स्थलस्येव तलं तस्य प्रविश्य सः । जघान तं कफोणिभिर्दण्डसारैररत्निभिः ॥ १६ ॥
वज्रपातप्रतीकाशैर्घनघातविजित्वरैः । बभूव बधिरं तस्य प्रहारध्वनिभिर्नभः ॥ १७ ॥
दृढं प्रहरतस्तस्य तलस्थस्य जिघृक्षया । द्विपः कुलालचक्रस्थः स मृत्पिण्ड इवाभ्रमत् ॥ १८ ॥
भुजाभ्यां चरणाभ्यां च भृशं सन्दश्य तत्पदौ । स्ववपुर्निगडेनैव तं बबन्ध क्षणं नलः ॥ १९ ॥

द्विपेनापि स विक्षिप्तः समुच्छ्वासयता क्रमौ । तमुत्प्लुत्य जघानोच्चैरधिपेचकमंह्रिणा ॥ २० ॥
सहसा व्योम्नि विक्षिप्तस्ततो हस्तेन हस्तिना । स तिर्यक् ताडयामास तं पतन्मूर्ध्नि पाणिना ॥ २१ ॥
सहसैव च निःशेषशुष्कदानाम्बुशीकरः । निस्पन्दमन्दतां भेजे गजेन्द्रः सान्द्रसाध्वसः ॥ २२ ॥
तथागतममुं सम्यक् समारुह्य प्रसादयन् । महामात्रार्पितसृणिः प्रतिशालमचालयत् ॥ २३ ॥
विषधरविपदृश्या रूपसंस्थानलीलाविनिमयमयमित्थं वैकृतं लम्भितोऽपि ।
न खलु निषधनाथः शौर्यहानिं प्रपेदे भवति हि घनसारे सौरभं चूर्णितेऽपि ॥ २४ ॥
प्रतिपदमथ पौरैः प्रेमतः पूज्यमानं विरचितगजशिक्षावर्णनं वन्दिवृन्दैः ।
नृपमिव तमपश्यत् लीलया यान्तमन्तर्नरपतिऋतुपर्णस्तुङ्गवातायनस्थः ॥ २५ ॥
प्रैवं निधाय च गजाद्विरूढमेव वेगादुपर्युपरि सम्मुखमापतन्तः ।
तं वेत्रिणः सपदि निन्युरनन्यचित्ता राजाज्ञया सदसि दर्शनकारणेन ॥ २६ ॥
कस्त्वं कुतः किमिदमद्भुतमीदृशं ते ? दन्तीशदर्पदलनं विकला च मूर्त्तिः ।
इत्थं नृपेण मृदुयुक्तिमता नियुक्तः प्रत्युच्चचार सकलप्रचयं स कुब्जः ॥ २७ ॥
श्रीवीरसेनतनयः प्रथितः पृथिव्यां सत्यव्रतो नरपतिर्निषधाधिनाथः ।
दूरं दुरोदरजितः स हि सोदरेण निर्वासितः प्रथममेव गृहीतराज्यः ॥ २८ ॥

सूतोऽस्मि तस्य च नृपस्य पदच्युतोऽहं भूमिं भ्रमन् पुरमिदं क्रमतः प्रपन्नः ।
प्राक् तत्र सङ्गवशतः पुनरद्य सद्यः त्वद्दर्शनाच्च सफलश्रमतां गतोऽहम् ॥ २९ ॥
इति कुब्जगिरा निशम्य सम्यक् प्रियमित्रस्य नलस्य तामवस्थाम्। विनिवारितगीतनृत्यवाद्यस्त्रिदिनं भूमिपतिर्बिभार दुःखम् ॥३०॥
नलभृत्य इति स्वयं स राजा बहुमानं मनसाऽनिशं दधानः। प्रियमित्रतया चकार कुब्जं सपदि ग्रामशतानि पञ्च दत्त्वा ॥३१॥
नृपतिकुलकलाभिः सूर्यपाकादिकाभिः सततमपि वितन्वन् विस्मयं मानसस्य ।
प्रतिदिनमपि राज्ञो लब्धनानाप्रसादः क्षितिपतिरिव तस्थौ नैषधः कुब्जकोऽपि ॥ ३२ ॥
किं किं चेतसि चिन्तयिष्यति सती यद्वा विपन्नैव सा भूयो नास्ति तदीक्षणं क्वचन मे मृत्युश्च नागच्छति ।
धिग् धिग् निष्फलजीवितव्यसनिनः कालो वृथा याति मे तस्थौ चेतसि चिन्तयन्निति चिरं कुब्जाकृतिर्नैषधः ॥३३॥
वरजनं तदुदन्तजिघृक्षया दशसु दिक्षु सदा विसृजन्नपि। स्वविषयेऽपि हि कोशलनायको नल इति प्रकटं न बुबोध तम् ॥३४॥
तमुदयं नवमङ्गलशोणया निजदशा भृशमाकलयन् कलिः । प्रियतमाविरहज्वरपीडया बहु निरन्तरमन्तरदीपयत् ॥३५॥
एतत् किमप्यनवमं नवमङ्गलाङ्कं माणिक्यदेवमुनिना कृतिना कृतं यत् ।
तस्यार्यकर्णनलिनस्य नलायनस्य स्कन्धो जगाम चतुराभिमतश्चतुर्थः ॥३६॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने चतुर्थे स्कन्धे त्रयोदशः सर्गः ॥ १३ ॥

समाप्तोऽयं चतुर्थः स्कन्ध ।

# पञ्चमः स्कन्धः

## प्रथमः सर्गः ।

इतश्च तेन सा त्यक्ता यत्र रात्रौ विदर्भजा । तत्प्रभातेऽपि तत्याज निद्रा नैव सखीव ताम् ॥ १ ॥
तदा काले च सा स्वप्ने विवेद यदहं किल । रसालशालमारूढा सरसं फलशालिनम् ॥ २ ॥
अत्रान्तरे समागत्य निषण्णस्तस्य मूर्धनि । कपोतपतगः पापी शुष्कश्च स महातरुः ॥ ३ ॥
अहं शिथिलसर्वाङ्गी तस्माच्च पतिता तरोः । इति स्वप्नं समासाद्य सद्यो निद्रां मुमोच सा ॥४॥ त्रिभिर्विशेषकम् ।
दुःस्वप्नमिव विज्ञाय तत्प्रतीकारकाङ्क्षया । द्रष्टुं प्रियमुखाम्भोजं व्यापारितवती दृशौ ॥ ५ ॥
न साऽपश्यत् प्रियं पार्श्वे वामे वा दक्षिणेऽपि वा । न मूर्ध्नि न च पादान्ते न दूरं न च सन्निधौ ॥ ६ ॥
किमेतदिति सत्रासं सा समुत्थाय विह्वला । विवेद च पतिं कूपे पतितं स्वमनाथवत् ॥ ७ ॥
ततस्तत्कालमालम्ब्य साहसं चकिताऽपि सा । सरस्तरुलतागुल्मान् विचिनोति स्म सर्वतः ॥ ८ ॥
धीरनिर्धूतनिस्त्रिंशयष्टिवत्कम्प्रया तया । न सेहे सहसा वक्तुं तत्क्षणं क्षीणकण्ठया ॥ ९ ॥
निलीनं परिहासाय सा तमाशङ्क्य कुत्रचित् । आर्यपुत्रार्यपुत्रेति व्याजहार पदे पदे ॥ १० ॥

नलत्यागानन्तरं दमयन्त्या दशा ॥

दिष्ट्या दृष्टोऽसि दृष्टोऽसि मा भूयो भव निह्नुतः। व्यसनेऽपि महाराज! किमेतत् कौतुकं तव ? ॥ ११ ॥
इत्यादि बहु जल्पन्ती यदाऽपश्यत् प्रियं न सा। तदा भीमोद्भवा भेजे विशेषव्याकुलं मनः ॥ १२ ॥
वेगादपहृतो नूनं रूपातिशयलुब्धया। विद्याधरकुमार्या वा व्यन्तर्या वा स मत्प्रियः ॥ १३ ॥
नूनमत्याहितं किञ्चिद् महाराजस्य वर्त्तते। अन्यथा किमियत्कालं मद्दुःखं क्षमते प्रियः ॥ १४ ॥
धिग् धिक् सुखनिषेविन्याः प्रमादपरतां मम। स यद् दुःखेन लब्धोऽपि मया निर्गमितो निधिः ॥ १५ ॥
सर्वथा मुषिता साऽहमनाथा शरणोज्झिता। कथमेका भविष्यामि निराशा गहने वने ? ॥ १६ ॥
इदं हि प्राणिनां प्रायो जीवितव्यं व्यवस्थितम्। आशामेव समालम्ब्य कुशसूचीमिवोदकम् ॥ १७ ॥
यदिदं प्रिययुक्ताया वासागारमिवाभवत्। तदेतदधुना जातं वनं कष्टमहार्णवः ॥ १८ ॥
लीलागारं भुवनविजयी वीरसेनस्य सूनुर्भर्त्ता लब्धः कथमपि मया तद्वियोगश्च भूयः।
तत् साम्राज्यं मम पुनरसावीदृशी च व्यवस्था चिन्तातीतं जयति चरितं कर्मणां किं परेण ? ॥ १९ ॥
अस्मिन् घोरे वनपरिसरे सर्वतः पर्वतौघैरेकाकिन्याः कथमपि न मे वर्त्तते जीवितव्यम्।
बन्धुभ्रंशादकृतसुकृतस्तीर्थसेवादिवन्ध्यो निर्भाग्याया मम कथमभूदेष निर्याणभागः ? ॥ २० ॥
हा हा नाथ! क्व नु खलु भवान् देहि मे देव! वाक्यं शक्यः सोढुं कथमिव मया दुस्तरस्त्वद्वियोगः ?।
भूगोलेऽस्मिन् किमपि घटते नैव शङ्कास्पदं मे कः प्रत्यर्थी भवतु भवतः कौञ्चकर्णान्तकस्य ? ॥ २१ ॥

कथय कथय स्वामिन् ! क्वापि स्थलेऽथ जलेऽथवा रिपुभिरमरैर्नागेन्द्रैर्वा हृतोऽसि हृतोऽसि वा ।
तव किमपि वा दुःखं विश्वप्रियस्य न गण्यते निधिरिव भवानन्तर्धानं गतो दुरितैर्मम ॥ २२ ॥

जलमभिमतं प्राणत्राणप्रदं जगतां ध्रुवं त्वमपि दयितो मह्यं नाथ ! स्वजीवितवाञ्छया ।
यदि मयि न ते देव ! प्रायः प्रियेति समर्थना जनमशरणं त्रातुं त्रातः ! कृपाऽपि न किं तव ? ॥ २३ ॥

एहि नैषध ! निषेधय क्रमं द्राग् विधेहि नल ! निर्मलं मनः ।
वीरसेनसुत ! वारय व्यथां देवदूत ! मम देहि दर्शनम् ॥ २४ ॥

स्फुटति हृदयं यान्ति प्राणा विमुञ्चति चेतना स्फुटमयमयं प्राप्तो मृत्युः किमन्यदतः परम् ? ।
तदखिलमपि क्षन्तव्यं मे प्रियाप्रियदुष्कृतं मम तु भुवने भर्त्ता भूयास्त्वमेव भवे भवे ॥ २५ ॥

हा देव ! हा दयित ! हा भुवनावतंस ! हा वीरसेनसुत ! हा निषधाधिनाथ !
इत्थं विलप्य विवशा मृदुमुक्तकण्ठी भीमोद्भवा भुवि जवेन पपात मोहात् ॥ २६ ॥

तां वल्लरीमिव परश्वधलूनमूलां भूमौ विलोक्य पतितां क्षितिपालपुत्रीम् ।
निष्पन्दमन्दवपुषं वनदेवतानां वाढं बभूव हृदयेषु दयावकाशः ॥ २७ ॥

तस्थुर्निरन्तरतरुस्थगिता दिगन्ता दूरीचकार किरणप्रकरं पतङ्गः ।
आकर्ण्यते स्म घननिर्झरघोरघोषैरेकाननेन विलपन्निव शैलवर्गः ॥ २८ ॥

नान्दोलिताः कपिकुलैरपि वृक्षशाखा दुःखेन वेणुभिरपि क्वणितं निरस्तम् ।
मुद्रा मुखे विघटिता न विहङ्गमानामङ्गीकृतं न च तृणं हरिणाङ्गनाभिः ॥ २९ ॥

स्त्रीहत्याऽपि न यस्य पश्य हृदये जाता घृणा कारणं तस्यार्थे दमयन्ति ! हन्त ! किमिदं मुग्धे ! मुधा खिद्यसि ? ।
उत्तिष्ठ व्रज मन्दिरं प्रति निजं भीमस्य राज्ञः पितुर्द्रागित्युक्तवतीव तामलिकुलक्वाणोत्तरं पद्मिनी ॥ ३० ॥

अथ जलकणमिश्रैर्नड्वलानूपवातैस्तटपरिसरभाजां शाखिनां छायया च ।
सरभसमनुवेलं दत्तहस्तावलम्बा कथमपि कमलाक्षी मोहमूर्छां जिगाय ॥ ३१ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे प्रथमः सर्गः ॥ १ ॥

---

## पञ्चमे स्कन्धे द्वितीयः सर्गः ।

ततः प्रपन्नचैतन्या पूर्वसंस्कारधारया । पुनर्नवेव देवी सा चक्रे नलविलोकनम् ॥ १ ॥
तस्याः पार्श्वात् प्रियं दूरं कर्तुं कलिरभूत् प्रभुः । न तु तन्मनसो मध्याद् विच्छेत्तुं कश्चिदीश्वरः ? ॥ २ ॥
इतस्ततः प्रियं द्रष्टुं सा विद्युदिव दुर्द्धरा । भृशं बभ्राम वामाक्षी भुवः स्थपुटसङ्कटा ॥ ३ ॥

आरुह्य तरुशृङ्गाणि विकीर्य तरुवीरुधः । प्रविश्य च गुहागर्त्ताः सा वीक्षितवती नलम् ॥ ४ ॥
पत्रमञ्चारमात्रेऽपि नलसञ्चारशङ्कया । सा ददर्श वनोद्देशान् भूयो दृष्टचरानपि ॥ ५ ॥
तच्च मायन्तनं शून्यं शयनीयं सरस्तटे । समुत्खातनिधिस्थानमिवापश्यत् पुनः पुनः ॥ ६ ॥
तमेव पुरुषं द्रष्टुं योगिनीव वियोगिनी । विवेद न हि वैदर्भी शीतमुष्णं क्षुधं तृपम् ॥ ७ ॥
न श्रमो न भयं नेर्ष्या नानुतापो न विभ्रमः । नलान्वेपणशीलाया वैदर्भ्याः किञ्चिदप्यभूत् ॥ ८ ॥
कण्टकव्रणितौ तस्याश्चरणौ शोणितारुणौ । अलक्तकरसन्यासं वहन्ताविव रेजतुः ॥ ९ ॥
प्रिय ! प्रियेति जल्पन्ती सिञ्चन्ती भुवमश्रुभिः । चातकध्वनिरुद्धायाः साऽव्रजत् प्रावृषः श्रियम् ॥ १० ॥
इति विष्वग् विचिन्वाना निराशा वितथश्रमा । रुरोद कुररीकण्ठक्रेकारकलया गिरा ॥ ११ ॥
सायं वल्लभयुक्ताऽहं प्रातः प्रियविवर्जिता । अहो ! तादात्विकः कोऽपि विपाको दुष्टकर्मणाम् ॥ १२ ॥
राज्यभ्रंशस्य नो दुःखं प्रवासोऽपि न दुःसहः । अयं प्रियवियोगस्तु विधत्ते हृदयं द्विधा ॥ १३ ॥
आकाशात् पतितेवास्मि पातालादिव निर्गता । इह मे दुःखमग्नाया न कश्चिदवलम्बनम् ॥ १४ ॥
किं शृणोति रविर्दूराद् विसंज्ञो वेत्ति किं मरुत् ? । जगच्चक्षुर्जगद्व्यापी कतमः पृच्छ्यतां पुरः ? ॥ १५ ॥
गर्त्तागिरिसरिद्व्याप्तं तदेव सकलं वनम् । एक एव परं नास्ति नलः प्राणप्रियो मम ॥ १६ ॥
अहं नलविनिर्मुक्ता भग्नध्वजपटेव नौः । दुःखमेव कथं दातुं यास्यामि पितुरन्तिके ? ॥ १७ ॥

तत्र पित्रोः सखीनां च वधूनां सहवासिनाम्। हृदये शल्यभूताया जीवितव्यस्य किं मम ? ॥ १८ ॥
दुहितृस्नेहमूढानां नित्यं तेषां मुखेन च। अयशः प्राणनाथस्य श्रोतव्यं केवलं मया ॥ १९ ॥
तदिह मम वरं हि श्वापदेभ्योऽपि मृत्युर्विषमविषधरेभ्यो नाहलेभ्यो दवाद् वा।
स्फुटमनधिगतायां किन्तु कान्तप्रवृत्तौ परमिति करणीयं नेक्षते बुद्धिचक्षुः ॥ २० ॥
असकलमुत तप्तं नो वितीर्णं हि पूर्णं किमनिखिलमधीतं मुक्तमर्द्धस्तुतं वा ?।
क्वचन किमुत मैत्र्यं खण्डितं प्राग्भवे वा यदहमसमयेऽस्मिन् स्वामिना विप्रयुक्ता ॥ २१ ॥
किमु हृतमसमक्षं किन्तु मिथ्योपदिष्टं किमभिहतमसभ्यं किं वृथा वाऽभिशप्तं ?।
किमु कृतमभिमानं किं कृता वाऽन्यनिन्दा यदजनि मम भर्त्रा सार्द्धमित्थं वियोगः ॥ २२ ॥
किमुत विघटिता वा सेतवो दीर्घिकानां क्वचिदपि किमु शाखाः खण्डिता वा क्षुपाणाम् ?।
किमुत मधु विकीर्णं सारघं छत्रमात्रं मम खलु गृहबन्धध्वंसदुःखं यदासीत् ॥ २३ ॥
तदिति बहु विलप्य व्याकुला राजपुत्री नयनजलमुदासे पट्टकूलाञ्चलेन।
तदनु सपदि तस्मिन् शोणितेन प्रणीतां नलनृपलिखितां तां वर्णपङ्क्तिं ददर्श ॥ २४ ॥
दृष्ट्वा तदर्थमधिगम्य निधाय मूर्ध्नि मेने नलं चलितमात्मनि रागिणं च।
उद्भिन्नमन्युभरनिर्भररुद्धकण्ठी भूयः प्रियं नियतिमोहवशादवोचत् ॥ २५ ॥

राजन् ! पुरा सनगरद्रुमसिन्धुशैलां विश्वम्भरामपि भवान् विभराम्बभूव ।
एकाकिनीमनुसृतां दयितामिदानीं स्वीकर्त्तुमत्र स पुमानपि न क्षमोऽसि ॥ २६ ॥
न कलयितुमशक्यं शृङ्गयुग्मं वृषाणां न खलु निजविषाणौ दुर्वहौ दन्तिनां वा ।
न हि शिरसि पिधानात् पूर्णकुम्भस्य भारो भवति हि परिणीता कस्य कान्ता क्लमाय ? ॥ २७ ॥
अधिजलधि वहति कूलङ्कषा प्रतितरुवरमेति वल्लीगणः ।
गतिरिह पतिरेव देवस्त्रियां तदिह कथय नाथ ! मुक्ताऽस्मि किम् ? ॥ २८ ॥
अहर्निशं नृपकुलमानमर्दनं वभूव यत् प्रियतम ! साहसं तव ।
दुरोदरव्यसनवशेन दीव्यता कथं त्वया तदपि नरेन्द्र ! हारितम् ? ॥ २९ ॥
किं वा मिथ्या नृपकुलगुरो ! दीयते दूषणं ते नूनं ग्रस्तस्त्वमसि महता केनचिद् व्यन्तरेण ।
तेनैवैते तव विरचिता दुर्दशावर्त्तपातास्तेनैवायं मम च रचितश्चित्रवल्लीविलासः ॥ ३० ॥
नूनं तावत् किमिह बहुना तेऽपि जल्पन्तु देवा देवश्चायं भुवनतिलकः कर्मसाक्षी समक्षः ।
यः कश्चिद् मे व्यथयति पतिं यावदन्तर्निलीनस्तावत्कालं क्षणमपि सुखं तस्य माभूत् कदाचित् ॥ ३१ ॥
नित्यं चित्तं दहतु दवथुस्तस्य कालाग्निकल्पः स्वल्पोऽप्यङ्गं न परिचरतु श्रीविलासस्तदीयम् ।
इत्युक्त्वाऽसौ विमलसलिलैः क्षालयित्वाऽङ्गभागं तस्मिन् तल्लस्थलपरिसरे नित्यकृत्यं वितेने ॥ ३२ ॥

स्रक्-चन्द्र-चन्दन-विलेपन-भूषणानि भोज्यानि खण्ड-दधि-दुग्ध-घृतादिकानि ।
माङ्गल्यमज्जनविधिं च शुचा तदानीमादर्शनं प्रियतमस्य तु सा मुमोच ॥ ३३ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे द्वितीयः सर्गः ॥ २ ॥

## पञ्चमे स्कन्धे तृतीयः सर्गः ।

वचसा तेन वैदर्भ्यास्तपसा च महीयसा । नलदुर्गतिलीनोऽपि बभूव विकलः कलिः ॥ १ ॥
यः सत्यं वज्रकायोऽपि धात्रैर्गात्रैरसैरिव । कलिर्गलितसामर्थ्यः सतीशापैरभिद्यत ॥ २ ॥
सापि कर्त्तुं प्रियादेशं मार्गेण वटगामिना । वीरसेनस्नुषा देवी कुण्डिनं प्रति निर्ययौ ॥ ३ ॥
वक्त्रे शस्त्रभवं पत्युश्चित्ते त्यागापमानजम् । प्रहारद्वितयं धैर्याद् दधानाऽपि चचाल सा ॥ ४ ॥
नलदौर्जन्यखिन्नेन हृदयेन मनस्विनी । जीवितव्यविरक्ता सा निःशङ्का ययौ पथि ॥ ५ ॥
इभकुम्भभ्रमं बिभ्रत् कुचकुम्भावलोकनात् । पपात पुरतस्तस्याः सहसा पथि केसरी ॥ ६ ॥
तद्भालतिलकज्वालातडित्ताडनडम्बरैः । स प्रत्युत भयार्त्तः सन् व्यावर्त्तत हरिर्द्रुतम् ॥ ७ ॥

अप्यधावद् गृहीतुं तां रक्तक्रमकराम्बुजाम् । मदान्धः सिन्धुरः कश्चिद् जानन् जङ्गमपद्मिनीम् ॥ ८ ॥
तस्या मृगेन्द्रमध्याया दृष्ट एवोदरे पुनः । तैरेव चरणैर्दूरं दुद्राव च स चीत्कृतैः ॥ ९ ॥
सर्पबुद्ध्याभिसर्पन्तः कबरीदण्डखण्डने । तत्कर्णपाशमाशङ्क्य नाचलंश्च कलापिनः ॥ १० ॥
इति स्वावयवैरेव रक्षितां तां न चिक्षिपुः । सत्त्वानि कानिचिद् विन्ध्यस्कन्धदुर्ललितान्यपि ॥ ११ ॥
क्रमेण पथि गच्छन्ती दिग्मूढा कान्तचिन्तया । अत्रैव संयमं भैमी निपपात वनान्तरम् ॥ १२ ॥
यत् मर्त्यं मृदुभिर्मुग्धैरसहायैरशम्बलैः । गर्भेश्वरैश्च तादृक्षैर्दुर्गमो निर्गमः स्वयम् ॥ १३ ॥
तत्रापि सा पुनस्तस्थौ धृत्वा धैर्यावलम्बनम् । दुर्जरं देहिनां प्रायः साक्षाद् भयमनागतम् ॥ १४ ॥
सुखवामाय दैवेन स्ववधूं मां प्रहिण्वता । द्वयोरपि महादुःखं विहितं मम चात्मनः ॥ १५ ॥
कथमेकाकिनी यस्मादहं यास्यामि कुण्डिनम् । भविष्यत्यार्यपुत्रो वा कथं निःपरिचारकः ॥ १६ ॥
प्रियस्य पार्श्ववर्त्तिन्या दुःखेऽपि सुखं मम । दयितोऽपि हि नाज्ञास्यत् कष्टं मत्परिचर्यया ॥ १७ ॥
किं मम स्वजनैः कार्यं शरीरेण सुखेन वा ? । अद्य प्रियवियोगेन जीवन्त्यपि मृताऽस्म्यहम् ॥ १८ ॥
कथं प्रियवियुक्ताया युक्ता राज्यस्थितिर्मम ? । आलवालक्रियालीला लूनाया इव वीरुधः ॥ १९ ॥
वरं वनेषु नीवारमुष्टिम्पचतया स्थितिः । मम हि स्वामिनः पार्श्वे शीर्णपर्णाशनेन वा ॥ २० ॥
जलेऽपि ज्वलनं तेषां सन्तप्तास्ते हिमेष्वपि । दह्यन्ते ये वियोगेन निर्धूमेन कृशानुना ॥ २१ ॥

अहो ! मे मन्दभाग्यायाः सेवायाः समयो हि यः । अहं तत्रैव दैवेन निजपत्युर्वियोजिता ॥ २२ ॥
धन्यं जन्म बलाकानां याः शाखिशिखरस्थितम् । पुष्णन्ति प्रियमात्मीयं प्रावृषि प्रतिवासरम् ॥ २३ ॥
किं मृगीणां गुणं ब्रूमः सायकं लुब्धकस्य याः । स्वगात्रेण प्रतीच्छन्ति निपतन्तं प्रियं प्रति ॥ २४ ॥
किं जीवन्मृतया कार्यं मया हन्त ! हताशया ? । प्राणभूतो हि यः स्वामी स एव गमितो मया ॥ २५ ॥
नूनं नरपतेस्तस्य लक्ष्मीललितलम्पटम् । वपुर्न सहते क्लेशान् सूर्यांशुमिव कैरवम् ॥ २६ ॥
न पानमशनं काले न शय्या न च मज्जनम् । न च संवाहना गात्रे कथं राजा भविष्यति ? ॥ २७ ॥
प्राकृतोऽपि न शक्नोति वनवासव्यथां जनः । किं पुनः स नलो नाम्ना राजा सम्भोगसुन्दरः ? ॥ २८ ॥
तद् मे तथाविधं प्रातर्नूनं दुःस्वप्नदर्शनम् । कश्चिद् देहेऽपि देवस्य संसूचयति वैकृतिम् ॥ २९ ॥
प्रियस्यादेशमाधातुं वहन्त्या निजजीवितम् । आशापाशनिबद्धं मे वक्षो न भवति द्विधा ॥ ३० ॥
किं करिष्यामि गत्वाऽहं किं भविष्यत्यतः परम् ? । कथं वा लप्स्यते राजा तदिदं नहि वेद्म्यहम् ॥ ३१ ॥
अथवा किं विकल्पेन नूनं स विजयी नृपः । आकृतिस्तादृशी हि स्याद् न चिरं दुःखभागिनी ॥ ३२ ॥
क्षणं ग्रहणमर्कस्य भुवः कम्पोऽपि हि क्षणम् । न चिरस्थायिनी सत्यं सतां स्वप्नोपमा विपत् ॥ ३३ ॥
अहं पितृगृहं प्राप्य यतमाना दिवानिशम् । प्राप्स्यामि तत्प्रवृत्तिं च यत्नस्य किमगोचरम् ? ॥ ३४ ॥
तस्मिन् प्राप्ते च भूपाले तत्पूर्वमवनौ पुनः । आर्यावर्त्तस्य साम्राज्यं लीलयाऽपि भविष्यति ॥ ३५ ॥

नलविरहानन्तरं दमयन्त्या विलापः ॥

उद्देत्यस्तमितो भास्वान् चन्द्रः क्षीणोऽपि वर्द्धते । सतामेव समायान्ति विपदः सम्पदोऽपि वा ॥ ३६ ॥
तदिह किमपरेण स्वस्तिमानस्तु राजा विदधतु भगवत्यो देवताः सन्निधानम् ।
मम हि मनसि धैर्यं बान्धवाश्चानुकूलाः परिणतिरमणीयं सर्वथा भावि सर्वम् ॥ ३७ ॥
इति वनभुवि कष्टं कान्तचिन्तोपतापं द्विगुणमिव वहन्ती सन्तताध्वश्रमेण ।
गिरितरुतलतल्पे निर्विकारा मृगाक्षी किमपि समयमात्रं तत्र निद्रां चकार ॥ ३८ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे तृतीयः सर्गः ॥ ३ ॥

---

## पञ्चमे स्कन्धे चतुर्थः सर्गः ।

---

अथ तस्याः प्रसुप्तायास्तस्मिन् गिरिमहावने । व्योममध्यमतिक्रम्य ननाम शिरसो रविः ॥ १ ॥
सम्भाव्य महसां पत्युर्निःप्रतापमिवातपम् । स्वैरं वव्रतिरे हिंस्रास्तत्क्षणं तस्करा इव ॥ २ ॥
चान्द्रीमिव कलां राहुस्तिमिङ्गिल इवाब्जिनीम् । तदा त्वजगरः सुप्तां शीघ्रं जग्राह भीमजाम् ॥ ३ ॥
बभौ तन्मुखमध्यस्था वैदर्भी विह्वला भृशम् । सन्दंशेनेव पाञ्चाली काञ्चनी वह्नितो हृता ॥ ४ ॥
आनाभि तेन तु ग्रस्ता लब्धसंज्ञा ससाध्वसम् । हाहेति रुदती वेगाद् विनिर्गन्तुमियेष सा ॥ ५ ॥

अजगरेण ग्रस्ता दमयन्ती ॥

तत्तुण्डकुहरक्रोडादुपग्रहगरीयसः । न लेभे निर्गमं तन्वी पङ्काद् गजवधूरिव ॥ ६ ॥
तीव्रलालावलिप्ताङ्गी सा तज्जठरकोटरे । साक्षादिवाप्रतिष्ठाने पतितं स्वमचिन्तयत् ॥ ७ ॥
तस्मिन् पूर इवाकण्ठं पिदधाने वपुर्द्रुतम् । प्रकाशमभवत् तस्या वक्त्रमेव हि केवलम् ॥ ८ ॥
ततः कण्ठगतप्राणा सा मत्वा मृत्युमागतम् । धर्मः शरणमित्युच्चैराचक्रन्द पुनः पुनः ॥ ९ ॥
शिशुमारवशप्राप्तहंसीरसितपेशलम् । कश्चिद् वनचरस्तस्याः शुश्राव करुणध्वनिम् ॥ १० ॥
किमेतदिति साश्चर्यं स पुमान् यावदाययौ । तावत्त्वजगरग्रस्तां मुखशेषां ददर्श ताम् ॥ ११ ॥
स द्राक् परशुना तस्य पुच्छं चिच्छेद मर्मवित् । यतः पुच्छबलापेक्षं तस्य जातेः पलायनम् ॥ १२ ॥
कुशूल इव मांसस्य विवृतद्वारतां गतः । ततो बिभेत्तुमारेभे किराततरुणेन सः ॥ १३ ॥
अन्तःशोणं बहिः श्यामं पालालमिव पावकम् । स तं विदारयन् प्राप समग्रामपि भीमजाम् ॥ १४ ॥
तामक्षतां समाकृष्य प्रयत्नेन गरीयसा । हस्तावलम्बनं दत्त्वा निनाय नगनिम्नगाम् ॥ १५ ॥
स व्याधस्तद्वसालिप्तं तप्तं तज्जठराग्निना । वपुर्निर्वासयामास तदीयं सलिलोर्मिभिः ॥ १६ ॥
सोऽपि तां दृक्पथे कुर्वन् व्याधस्तद्वृत्तिचिन्तया । आसन्न एव सर्वत्र भ्रान्त्वा सत्वरमाययौ ॥ १७ ॥
अक्षौद्रपिण्ड-खर्जूर-प्रियाल-कदलीफलैः । चिञ्चा-पनस-नारङ्ग-धव-धात्रीफलैरपि ॥ १८ ॥
बीजैः कुमुदपत्राणां तथा बिसकसेरुकैः । अन्यैरपि महाखाद्यैर्बहुभिर्निर्भरं भृतान् ॥ १९ ॥

स मुमोच पुरस्तस्याः क्रमुकत्वक्पुरान् बहून् । स्थूलवंशनलस्थानि मधूनि विविधानि च ॥२०॥ त्रिभिर्विशेषकम् ।
स्वीचक्रे भीमजाताऽपि देवी तत् तस्य ढौकनम् । अनुरोधेन बध्यन्ते प्रायशः प्रभवोऽपि हि ॥ २१ ॥
विधाय भुक्तमाहारं तेभ्यः कैश्चिच्छुभैः फलैः । विहिताचमनां भूयः स वैदर्भीमुपाचरत् ॥ २२ ॥
चक्रे पद्मदलैर्वायुं क्रमौ च समवाहयत् । ररक्ष पार्श्ववृक्षेषु पक्षिणामपि कूजितम् ॥ २३ ॥
तस्यैवमतिभक्तिं तां जानन्त्यपि निमित्तजाम् । पूर्वोपकारदाक्षिण्यात् प्रणयं न रुरोध सा ॥ २४ ॥
तदित्यद्भुतमुद्दामं स्वप्नेऽप्यतिसुदुर्लभम् । एकतानोऽभवद् भिल्लः स्त्रीरत्नं परिभावयन् ॥ २५ ॥
निरुध्य साध्वसावेशं स मन्मथवशंवदः । स्वजातियोग्यया वाचा सप्रश्रयमुवाच च ॥ २६ ॥
रिपुभिः परिभूतस्य नूनं कस्यापि भूपतेः । धर्मदारान् वयं विद्मो युष्मानित्थं व्यवस्थितान् ॥ २७ ॥
तन्नूनं विन्ध्यवासिन्या कृतः सङ्गम एष नः । नो वा क्व भूभृतां पत्न्यः क्व वयं ते वनेचराः ? ॥ २८ ॥
मुग्धत्वं रसिकत्वं च भवतीषु व्यवस्थितम् । भावमन्तर्गतं यूयं जानीत किमतः परम् ? ॥ २९ ॥
तत् प्रसीदत किं भूम्ना प्रणामाञ्जलिरेष नः । वेत्तु नागरिकं वृत्तं जनोऽयं पक्कणालयः ॥ ३० ॥
विविक्तोऽयं वनोद्देशः पद्मशय्या च कोमला । न विलम्बक्षमः कालः किं मन्दाक्षं निषेव्यते ? ॥ ३१ ॥
न चुकोप न जिह्राय न च प्रत्युत्तरं ददौ । श्रुत्वा तद्वचनं देवी हृदि त्वेवमचिन्तयत् ॥ ३२ ॥
अहह ! नलकलत्रं वीरसेनस्नुषाऽहं जगति दमनजामिर्भीमभूपालपुत्री ।

किमपरमयि ! जातापात्रमेवंविधानां जयति तदिह कालः क्रूरता कर्मणां च ॥ ३३ ॥
अयि ! यदि पितरं वा भ्रातरं वा सुतं वा तरुणमिममिदानीं नाहलं व्याहरामि ।
तदपि मयि रिरंसा नास्य नाशं प्रयाति क्षिपति खलु विवेकं दीपवत् कामवायुः ॥ ३४ ॥
हृदयमपि विलज्जं नापमानाद् विरक्तिर्जनमभि दुरवापं लक्षसङ्ख्योऽभिलाषः ।
न भयमपि समन्तादैहिकामुष्मिकाभ्यां प्रकृतिरियमशेषा कामिनां नह्युपाधिः ॥ ३५ ॥
प्रणयरचितचाटुर्जीवितव्योपकारी कथमिव हि मयाऽसौ कर्कशं भाषणीयः ? ।
अजगरजठराग्नौ किं न जीर्णा तदानीं किमिह महति कष्टे निष्ठुरे निष्ठुतास्मि ॥ ३६ ॥
न गणयति हि कामी धर्मकर्मोपदेशं क्वचन वनचराणां पापशङ्का च न स्यात् ।
अपि भृशमुपकर्त्तुः कः प्रसङ्गोऽस्य तद् मे न भवति विषभक्षी कोऽपि दाक्षिण्यबद्धः ॥ ३७ ॥
वाहसं निहितवान् जिघांसया मां चकर्ष सहसा रिरंसया ।
चाटु जल्पति च कामलम्पटः सर्वथापि शबरो न शोभनः ॥ ३८ ॥
शक्तिं करिष्यति न वेत्स्यति च स्वपथ्यं तथ्यं गमिष्यति च मृत्युमुखं वराकः ।
प्राप्तोऽधुना मम वशेन तदस्य मृत्युरित्युत्ससर्ज मृदु निःश्वसितं द्रुतं सा ॥ ३९ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे चतुर्थः सर्गः ॥ ४ ॥

अजगरोदरात् किरातेन निष्काशिता दमयन्ती कामेच्छुः किरातश्च ॥

## पञ्चमे स्कन्धे पञ्चमः सर्गः

तां वीक्ष्य मुक्तनिःश्वासां मौनमुद्रावलम्बिनीम् । स्मरबाणव्यथाधीनो बभाण शबरः पुनः ॥ १ ॥
अयि ! किं मौनमाश्रित्य निश्वासैर्नीयते क्षणः ? । रतदुःखावहत्वं न चिन्तनीयं स्वचेतसि ॥ २ ॥
निःशङ्कमत्र कान्तारे तन्मया मह रम्यताम् । नैवास्मच्छङ्कितव्यं च वन्दिग्राहिभयं हृदि ॥ ३ ॥
यावत् प्रमादमस्मासु स्वस्थासि नित्यमत्र वा । अनुव्रज ततोऽस्माकं वचस्त्वं द्रुतमेव वा ॥ ४ ॥
इति प्रेमद्रवीभूतं गोष्ठस्थं गोष्ठलीलया । वदान्यमिव जल्पन्तं तमवोचत भीमजा ॥ ५ ॥
महाभाग ! यथार्थं त्वं विनीतोऽसि किमुच्यते ? । न ग्रामनगरापेक्षा सदसत्संभवं प्रति ॥ ६ ॥
युष्माकमिह सामर्थ्यं विनिर्जेतुं नृपानपि । शिशुमारोऽपि गृह्णाति गजानपि जलस्थितः ॥ ७ ॥
अनाथामबलां मूढां यत् त्वं नहि रुणत्सि माम् । तत् तवैव हि सौजन्यं किरातः कथमीदृशः ? ॥ ८ ॥
नूनं सर्वत्र वर्त्तन्ते जगति त्रिविधा जनाः । भिल्लेष्वपि महाभागो दयालुः कथमन्यथा ? ॥ ९ ॥
अस्मिन् रौद्रे महारण्ये महात्मा यत् त्वमीदृशः । क्षारवारिणि मिष्टाम्बु तदिदं दैवयोगतः ॥ १० ॥
नाहं कथञ्चिदानृण्यं यामि प्राणप्रदस्य ते । यतः प्राणाधिकं दातुं कस्य शक्तिर्जगत्यपि ॥ ११ ॥
यदाद्यजगरग्रस्ता कृष्टा कालमुखात् त्वया । तदादि भवता दत्तं जीवितव्यमिदं मम ॥ १२ ॥

किमपरमयि ! जातापात्रमेवंविधानां जयति तदिह कालः क्रूरता कर्मणां च ॥ ३३ ॥
अयि ! यदि पितरं वा भ्रातरं वा सुतं वा तरुणमिममिदानीं नाहलं व्याहरामि ।
तदपि मयि रिरंसा नास्य नाशं प्रयाति क्षिपति खलु विवेकं दीपवत् कामवायुः ॥ ३४ ॥
हृदयमपि विलज्जं नापमानाद् विरक्तिर्जनमभि दुरवापं लक्षसङ्ख्योऽभिलाषः ।
न भयमपि समन्तादैहिकामुष्मिकाभ्यां प्रकृतिरियमशेषा कामिनां नह्युपाधिः ॥ ३५ ॥
प्रणयरचितचाटुर्जीवितव्योपकारी कथमिव हि मयाऽसौ कर्कशं भापणीयः ? ।
अजगरजठराग्नौ किं न जीर्णा तदानीं किमिह महति कष्टे निष्ठुरे निष्ठुतास्मि ॥ ३६ ॥
न गणयति हि कामी धर्मकर्मोपदेशं क्वचन वनचराणां पापशङ्का च न स्यात् ।
अपि भृशमुपकर्तुः कः प्रसङ्गोऽस्य तद् मे न भवति विपभक्षी कोऽपि दाक्षिण्यबद्धः ॥ ३७ ॥
वाहसं निहितवान् जिघांसया मां चकर्ष सहसा रिरंसया ।
चाटु जल्पति च कामलम्पटः सर्वथापि शबरो न शोभनः ॥ ३८ ॥
शक्तिं करिष्यति न वेत्स्यति च स्वपथ्यं तथ्यं गमिष्यति च मृत्युमुखं वराकः ।
प्राप्तोऽधुना मम वशेन तदस्य मृत्युरित्युत्ससर्ज मृदु निःश्वसितं द्रुतं सा ॥ ३९ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे चतुर्थः सर्गः ॥ ४ ॥



अजगरोदरात् किरातेन निष्काशिता दमयन्ती कामेच्छुः किरातश्च ॥

## पञ्चमे स्कन्धे पञ्चमः सर्गः

तां वीक्ष्य मुक्तनिःश्वासां मौनमुद्रावलम्बिनीम् । स्मरबाणव्यथाधीनो बभाण शबरः पुनः ॥ १ ॥
अयि ! किं मौनमाश्रित्य निश्वासैर्नीयते क्षणः ? । रतदुःखावहत्वं न चिन्तनीयं स्वचेतसि ॥ २ ॥
निःशङ्कमत्र कान्तारे तन्मया सह रम्यताम् । नैवास्मच्छङ्कितव्यं च बन्दिग्राहिभयं हृदि ॥ ३ ॥
यावत् प्रमादमस्मासु स्वस्थासि नित्यमत्र वा । अनुव्रज ततोऽस्माकं वचस्त्वं द्रुतमेव वा ॥ ४ ॥
इति प्रेमद्रवीभूतं गोष्ठस्थं गोष्ठलीलया । वदान्यमिव जल्पन्तं तमवोचत भीमजा ॥ ५ ॥
महाभाग ! यथार्थं त्वं विनीतोऽसि किमुच्यते ? । न ग्रामनगरापेक्षा सदसत्संभवं प्रति ॥ ६ ॥
युष्माकमिह सामर्थ्यं विनिर्जेतुं नृपानपि । शिशुमारोऽपि गृह्णाति गजानपि जलस्थितः ॥ ७ ॥
अनाथामबलां मूढां यत् त्वं नहि रुणत्सि माम् । तत् तवैव हि सौजन्यं किरातः कथमीदृशः ? ॥ ८ ॥
नूनं सर्वत्र वर्त्तन्ते जगति त्रिविधा जनाः । भिल्लेष्वपि महाभागो दयालुः कथमन्यथा ? ॥ ९ ॥
अस्मिन् रौद्रे महारण्ये महात्मा यत् त्वमीदृशः । क्षारवारिणि मिष्टाम्बु तदिदं दैवयोगतः ॥ १० ॥
नाहं कथञ्चिदानृण्यं यामि प्राणप्रदस्य ते । यतः प्राणाधिकं दातुं कस्य शक्तिर्जगत्यपि ॥ ११ ॥
यदाजगरग्रस्ता कृष्टा कालमुखात् त्वया । तदादि भवता दत्तं जीवितव्यमिदं मम ॥ १२ ॥

ततोऽपि सरसाहारान् दत्त्वा जनमिमं प्रति । परोपकारवृक्षस्य जनिताऽऽर्येण मञ्जरी ॥ १३ ॥
असंस्तुतमसम्बद्धमकिञ्चित्करमागतम् । इत्थं परिचरेत् कश्चिद् यदि न स्यात् कृपा हृदि ॥ १४ ॥
पितरं वा पितृव्यं वा भ्रातरं वा सहोदरम् । कमिव व्याहरामि त्वां एकयैव हि जिह्वया ॥ १५ ॥
परोपकारशीलेन महात्मंश्चरितेन ते । तृणीकृतं महर्षीणां स्वकार्यैकफलं तपः ॥ १६ ॥
निःशूकाः कामगृध्रा ये परदारानुरागिणः । उच्छिष्टान्नभुजोऽरिष्टाः क्व तेभ्यो हीनवृत्तयः ? ॥ १७ ॥
किमत्र सुकृतैः सर्वैः कृतं चेत् पारदारिकम् । अपि निःशेषपापानां मूलमब्रह्म केवलम् ॥ १८ ॥
निन्दामूलं घृणाहेतु मृत्युद्वारं त्रपास्पदम् । तथापि मूढचित्तानां प्रीतये पारदारिकम् ॥ १९ ॥
कथं स वित्तमात्मीयं चौरेभ्यो रक्षितुं क्षमः ? । अनङ्गेन हृतं चित्तं प्रत्यानेतुं न यः प्रभुः ॥ २० ॥
रक्ता या भर्तृतो मृत्युर्विरक्ता हन्ति च स्वयम् । त्याज्या रक्ता विरक्ताऽपि परस्त्री सर्वथा नृणाम् ॥ २१ ॥
लिप्यते पातकैर्भुक्त्वा रक्तामपि परस्त्रियम् । विरक्तां रन्तुकामस्य न पारो नरकार्णवात् ॥ २२ ॥
स्त्रीविषाग्निपयःशस्त्रैः क्रीडतां कुशलं कुतः ? । तदात्वमृत्युदायीनि वस्तून्येतानि दुर्धियाम् ॥ २३ ॥
विधाय वनितावेषं विश्वास्य रहसि स्थितम् । जघान तक्षकः शङ्खं शेषकान्तानुरागिणम् ॥ २४ ॥
विहिताराधनक्लेशं रिरंसारसविह्वलम् । शशाप शुद्रगं वीरं सन्तुष्टाऽपि सरस्वती ॥ २५ ॥
अपि द्वादशसोपानकर्त्तारं नन्दिवर्द्धने । ऋषिदैत्यं निजग्राह श्रीमाता कामलम्पटम् ॥ २६ ॥

कृष्णेन पार्वतीहेतोरनुधावन् महेश्वरम् । मायामहिलया दैत्यो दुर्द्धरः सहसा हतः ॥ २७ ॥
तदित्थं दारुणोदर्कः कामः सर्वत्र कामिनाम् । लोकद्वयविरुद्धश्च गर्हितश्च महात्मनाम् ॥ २८ ॥
ततो मयि निरीहायां भूत्वा त्वं जीवितप्रदः । महात्मंश्चित्तमात्मीयं न क्रूरं कर्त्तुमर्हसि ॥ २९ ॥
इदं हि मम सुप्रीतं भ्रातरीव मनस्त्वयि । मा भवेच्छीलविध्वंसरोषावेशविसंस्थुलम् ॥ ३० ॥
तवोपकारजं पुण्यं कृतज्ञत्वगुणश्च मे । अखण्डं द्वयमप्यस्तु यावत् चन्द्रदिवाकरौ ॥ ३१ ॥
इति सम्यक् समाकर्ण्य वचः सत्यं सतीमुखात् । त्रस्तोऽपि धार्ष्ट्यमालम्ब्य प्रत्युवाच वनेचरः ॥ ३२ ॥
अयि ! हन्त ! वृथा क्लेशः क्वोपदेशैर्विधीयते ? । स्थले जलमिवास्माकं हृदि शीलं स्थिरं कियत् ? ॥ ३३ ॥
इदं हि सुमहद् दुःखमस्माकं नरकादपि । त्वादृशं यत् करप्राप्तं स्त्रीरत्नं नोपयुज्यते ॥ ३४ ॥
इतोऽपि महती गर्हा काऽपि नः शूरसंसदि । क्लीबैरिव यदस्माभिर्भवती नोपभुज्यते ॥ ३५ ॥
किमत्र वितथत्रासैरस्मान् दूरं विधास्यसि ? । इहास्माकं बलात्कारं को निवारयितुं प्रभुः ? ॥ ३६ ॥
त्वमालिङ्ग्य सर्वाङ्गं स्वैरं विविधभक्तिभिः । तरसाऽपि सरोजाक्षि ! निःशङ्कमुपभुज्यसे ॥ ३७ ॥
इति जल्पन् विमर्यादं कामान्धः सव्यपाणिना । स भीमदुहितुर्देव्याः केशग्रहमचिन्तयत् ॥ ३८ ॥
हा ! धिक् कष्टं कः प्रमादस्तवायं मा मैवं भो मुञ्च दूरे भवेति ।
सभ्रूभङ्गं मौलिभागं धुनाना तं प्रत्यूचे हस्तमुद्यम्य देवी ॥ ३९ ॥

निःशङ्कस्य व्युत्क्रमं कर्तुमिच्छोस्तस्यावेशं वीक्ष्य यूनस्तथापि ।
आः ! पापेति व्याहरन्ती सरोषा तच्छिक्षार्थं वासवं साऽभिदध्यौ ॥ ४० ॥

यावत् तं वरदं हृदि स्मरति सा देवं हरिं तत्क्षणं तावद् दिक्कुहरोदरम्भरिरवः त्रासप्रदः प्राणिनाम् ।
स्वैरं निर्जलदाद् निपत्य नभसो वेगेन शुष्काशनिस्तं भस्मैकमयं विधाय सहसा भूयोऽन्तरिक्षं ययौ ॥ ४१ ॥

भस्मावशेषं तमवेक्ष्य देवी पूर्वोपकारप्रवणं किरातम् ।
दयार्द्रभावा रुदती विरेजे तस्मै हि तोयाञ्जलिदायिनीव ॥ ४२ ॥

यः कोऽपि संप्रति करोति ममोपकारं सोऽपि क्षयं व्रजति यद्वदसौ वराकः ।
दुष्कर्मणामुदयमीदृशमद्भुतं मे धिग् धिक् तदेति सुचिरं हृदि सा शुशोच ॥ ४३ ॥

इतिश्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे पञ्चमः सर्गः ॥ ५ ॥

## पञ्चमे स्कन्धे षष्ठः सर्गः ।

तदतीत्य महद् दुःखं विदर्भानभि सा पुनः । उपर्युपरि तत्पल्लीरूपविन्ध्येन निर्ययौ ॥ १ ॥
न श्रान्ता च न भीता च दीर्घे शून्येऽपि सा पथि । दृढीकरोति कालो हि वपुश्चित्तं च देहिनाम् ॥ २ ॥

किरातस्य बलात्कारः वासवेन च भस्मावशेषीकृतो किरातः ॥

यतः पत्युर्वियोगोऽभूद् व्यालविघ्नं महच्च तत् । भूयो विघ्नं प्रमोदं च सा चक्रे नैव वर्त्मनि ॥ ३ ॥
सस्मार हृदये मन्त्रं पञ्चानां परमेष्ठिनाम् । सततं चरणौ पत्युः सा नलस्य च केवलम् ॥ ४ ॥
नखिनः शृङ्गिणः सत्त्वाः करिणः फणिनोऽपि वा । केऽपि तां किमुत स्प्रष्टुं न द्रष्टुमपि सेहिरे ॥ ५ ॥
विषमं समतां याति सौजन्यं यान्ति दुर्जनाः । शक्तः सतीमयो ब्रह्मा कर्तुं सृष्टिविपर्ययम् ॥ ६ ॥
यत् तस्मिन् तादृशे शून्ये तैस्तैस्तीक्ष्णैरुपद्रवैः । न भिन्ना भीमजा देवी शीलस्य कवचं हि तत् ॥ ७ ॥
इदं हृदि महद् दुःखं तस्याः परमजायत । यद् मदर्थं मृतो व्याधस्ताडितो यच्च वाहसः ॥ ८ ॥
इत्थं च पथि गच्छन्त्यास्तस्याः कालेन केनचित् । बभूव धनपूर्णस्य वणिक्सार्थस्य सङ्गमः ॥ ९ ॥
क यास्यथेति पृष्टास्ते कथञ्चिद् भीमजातया । क्षत्रियां तां परिज्ञाय प्रत्यपद्यन्त नोत्तरम् ॥ १० ॥
तथापि तैः समं मार्गे नलभार्या विनिर्ययौ । कार्यापेक्षैव गुर्वी हि वस्तुचिन्ता न धीमताम् ॥ ११ ॥
भोजनान्ते तृणस्यापि विदधात्यञ्जलिं जनः । भस्मापि वन्द्यते चैत्रे समये सर्वमुत्तमम् ॥ १२ ॥
विमकूटतटोद्देशे दुरारोहे भयङ्करे । स तस्थौ पर्वताघाटे सार्थः आतार्थियासया ॥ १३ ॥
तत्र रात्रौ तमःश्यामा बृहद्बृंहितसूचिताः । न्यपतन् जनतागन्धक्रोधान्धा वनसिन्धुराः ॥ १४ ॥
भग्नानि वस्तुभाण्डानि गोणीभाराश्च चूर्णिताः । त्रस्ताः केऽपि मृताः केऽपि मनुष्या वृषभा अपि ॥ १५ ॥
न क्वापि ददृशे कोऽपि नासीत् किञ्चिद् व्यवस्थितम् । दृष्टनष्टः स सार्थोऽभूद् गन्धर्वपूरवत् क्षणात् ॥ १६ ॥

तस्मिन् सार्थे तथा त्रस्ते निरालम्बा मनो दधौ । एकाकिनी स्थिता भूयः सचिन्ता भीमभूरभूत् ॥ १७ ॥
यैः समं पथि गच्छामि न तेऽपि कुशलास्पदाः । अहो ! मे दुर्दशापाक इत्यात्मानं निनिन्द सा ॥ १८ ॥
सा समुत्थाय खिन्नाऽपि कृत्वा धैर्यावलम्बनम् । गिरिशृङ्गमयं मार्गमारुरोह शनैः शनैः ॥ १९ ॥
निराशा विवशा व्यग्रा श्रान्ता भीता सवेपथुः । न क्वापि हृदयाधारं लेभे किमपि सुन्दरी ॥ २० ॥
ततो विनतशाखाग्रं रक्तं रक्तान्तलोचना । प्राप पापहरं वृक्षमशोकं शोकविह्वला ॥ २१ ॥
दर्शनं स्पर्शनं वाऽपि वर्णनं स्मरणं च ते । सतां न कुशलं दत्ते किं किं किङ्किल्लिपादप ! ॥ २२ ॥
इत्यशोकतरुं स्तुत्वा यान्त्याः पर्वतवर्त्मनि । भीमभूमिपतेः पुत्र्याः परितोषो मनस्यभूत् ॥ २३ ॥ युग्मम् ॥
शीतो मन्दः सुरभिरभवत् पृष्ठवाही समीरः श्यामाः साक्षाद् भवविषयिणः पञ्च जाताः क्रमेण ।
दृष्टिं प्रापुर्जलदसुहृदः स्वस्तिकाख्याश्च तस्याः पस्पन्दे च प्रकटितमनः कामदं वामनेत्रम् ॥ २४ ॥
तदिति बहुनिमित्तैः शोभनैः प्रीयमाणा किमिह मम फलं स्यादित्थमालोचयन्ती ।
गिरिशिरसि विशाले बालसारङ्गचक्षुर्लिखितमिव मुनीनां मण्डलं सा ददर्श ॥ २५ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे षष्ठः सर्गः ॥ ६ ॥

---

वणिक्सार्थेन सह गच्छन्ती दमयन्ती ॥ वनसिन्धुरैश्च भिन्नः सार्थः ॥

## पञ्चमे स्कन्धे सप्तमः सर्गः ।

तानुज्ज्वलतरशुक्लसूक्ष्मप्रावरणावृतान् । मूर्त्तिमद्भिरिवाश्लिष्टान् पटलैर्धर्मकर्मणाम् ॥ १ ॥
शुचीन् सुमनसः सौम्यान् महर्षीन् वीक्ष्य हर्षिता । भैमी पितृगृहं प्राप्तमिवात्मानममन्यत ॥ २ ॥
तेषां मध्यगतं धीरं धर्माचार्यं महौजसम् । अनुजानीहि भगवन्नित्युक्त्वा प्रणणाम सा ॥ ३ ॥
धर्मोऽभिवर्द्धतां भद्रे ! सुप्रसन्नं मनोऽस्तु ते । इहोपविश कल्याणि ! परिश्रान्ताऽसि भूयसा ॥ ४ ॥
चारणश्रमणानस्मान् जानीहि त्वं शुचिस्मिते ! । वैताढ्यपर्वतादेतत् तीर्थं वन्दितुमागतान् ॥ ५ ॥
पृथिव्यां पञ्चमश्चक्री परमेष्ठी च षोडशः । शान्तिनामा यतः स्वामी संभविष्यत्यतःपरम् ॥ ६ ॥
तस्यात्रभवतस्तिर्यग्देवासुरनराश्रितम् । समं ततोऽवसरणं चिरमत्र भविष्यति ॥ ७ ॥
ततश्च तत्प्रसादेन पुनः सञ्जातजन्मिनाम् । साङ्केतिकात् परं ज्ञानमिहास्माकमुदेष्यति ॥ ८ ॥
मुक्तिद्वारमिदं नाम्ना महातीर्थं मनस्विनि ! । सम्प्रदायं विना प्रायः प्राकृतानामगोचरम् ॥ ९ ॥
सुगृहीताभिधानेन गुरुणा भास्करेण हि । विनेयानामिदं तीर्थं कृपया नः प्रकाशितम् ॥ १० ॥
तदत्र सुकुमाराङ्गीं मुग्धामविधवां सतीम् । एकाकिनीं समायातां वीक्ष्य त्वां विस्मयो हि नः ॥ ११ ॥
न त्वं लक्ष्मीर्न सावित्री न पौलोमी न पार्वती । सनिमेषा भवद्दृष्टिर्निर्निमेषदृशो हि ताः ॥ १२ ॥

तत् त्वामायुष्मतीं विज्ञश्चक्षुष्याकृतिमीदृशीम् । ऐश्वर्यरहितत्वेऽपि क्ष्मापालगृहिणीमिव ॥ १३ ॥
इत्युक्ता मुनिना भैमी स्थित्वा क्षणमधोमुखी । निगृह्य बलवद्वाष्पमुपविश्य व्यजिज्ञपत् ॥ १४ ॥
भगवन् ! भाग्यवत्यस्मि दुर्दशापतिताऽप्यहम् । यदेवमनुरूपन्ते भवन्तोऽपि भृशं मयि ॥ १५ ॥
सुकृतं दुष्कृतं वाऽपि सुखं वा दुःखमेव च । सर्वं निवेद्य युष्मासु निःशल्यो जायते जनः ॥ १६ ॥
तत् किञ्च बहुनोक्तेन युष्माकं विदुषां पुरः ? । एष तावत् परिच्छेदो मद्वार्त्ताविस्तरस्य यत् ॥ १७ ॥
पृथिव्यां विदितो विद्वान् निषङ्गी निषधेश्वरः । वीरसेनसुतो वीरः क्रौञ्चकर्णान्तकः कृती ॥ १८ ॥
देवदूतो दयायुक्तो बलवान् विनयी नयी । दशदिग्विजयी योद्धा महनीयो महाबलः ॥ १९ ॥
सत्यसन्धः सुधीः शान्तः शत्रुकालानलो नलः । पुण्यश्लोकः सुखी श्लाघ्यो भर्त्ता मे भूभृतां वरः ॥२०॥ त्रिभिर्विशेषकम् ।
द्यूतेऽनुजेन निर्जित्य दैवाद् निर्विषयीकृतः । मयैवानुगतः पत्न्या भुजद्वन्द्वपरिच्छदः ॥ २१ ॥
भिल्लैः पथि पराभूतः खगैः क्षिप्तोत्तरच्छदः । वनाद् वनं व्रजन् ग्रीष्मे सोढवातातपव्यथः ॥ २२ ॥
केनापि हेतुना शीघ्रं सत्त्वसौहृदवर्जितः । समादिश्य पितुर्गेहे गन्तुं लिपिमुखेन माम् ॥ २३ ॥
अनाथां मां परित्यज्य सुप्तामेकाकिनीं वने । तथा कथञ्चिद् गतवान् यथा भूयो न वीक्षितः ॥ २४ ॥ युग्मम् ॥
गर्त्तागिरिसरिद्घोरं पश्यन्त्याऽपि मया वनम् । न लब्धः स क्वचिद् भूयः सप्रभाव इव द्रुमः ॥ २५ ॥
निर्विण्णा तमनालोक्य श्रान्तसुप्ता महावने । ग्रस्ता चाजगरेणास्मि मोचिता शबरेण च ॥ २६ ॥

निवेकविकलम्याहं पतिता तस्य पञ्जरे । नैवाधिजगाम क्षेमाद् निर्गमं यत्नवत्यपि ॥ २७ ॥
तं वराकमनात्मज्ञं स्वहस्ताङ्गारवर्षिणम् । सहसातिभयाच्चक्रे भस्मसाद् वरदो हरिः ॥ २८ ॥
पुनः पथि मया प्राप्तो वणिक्सार्थस्य सङ्गमः । स नक्तं दन्तिभिर्ध्वस्तः स्वेच्छावान् व्यसनैरिव ॥ २९ ॥
साऽहं पतिपरित्यक्ता नष्टध्वजपटेव नौः । दुर्दशावर्त्तगर्त्तेऽस्मिन् वर्णमानाऽस्मि दुर्द्धरे ॥ ३० ॥
विश्वविश्वम्भराधारधुरन्धरभुजो मम । दक्षिणस्या दिशः स्वामी भीमभूमिपतिः पिता ॥ ३१ ॥
निजपत्युः ममादेशाद् गच्छन्ती पितृमन्दिरे । अहं सम्यग् न जानामि तत्र यास्यामि वा नवा ॥ ३२ ॥
तस्य राज्ञो हि चेत् किञ्चित् तत् क नौ सङ्गमः पुनः ? । मम वा किञ्चिदक्षेमं तत् क नौ सङ्गमः पुनः ? ॥ ३३ ॥
आशापाशः प्रसभममितो जीवितं मे रुणद्धि प्राणत्यागो हठविरचितः श्रेयसे नोपदिष्टः ।
एकैकाऽपि व्रजति घटिका कल्पकोटिप्रमाणा नो जानामि त्वरितमधुना यद् मया किं विधेयम् ? ॥ ३४ ॥
अस्मिन् काले दश विजयते वर्षलक्षाणि देही तेषामेकं मम परिणतं पूर्णवर्षायुतोनम् ।
तेनेदानीं न विषयरसाश्चेतसो यान्ति शान्तिं वर्षाकाले कथयति कथं मन्दतां वारिवेगः ? ॥ ३५ ॥
एकाकित्वं दयितविरहः काननं मार्गखेदः स्थानभ्रंशो विभवविगमः साध्वसं दुर्जनेभ्यः ।
इत्थं दुःखं निखिलमपि मे बालकालेऽपि जातं मन्ये नाभूदहमिव भवे दुःखिनी काऽपि नारी ॥ ३६ ॥
नन्वेतद् मे किमपि भगवन् ! वृत्तमामूलभूतं श्रुत्वा दुःखं सहृदयहृदयैर्नैव कार्यं भवद्भिः ।

दुष्कर्माख्यं क्वचिदपि भवे बीजमुप्तं मया यत् तस्यैवेदं फलमविकलं पाकमभ्यागतं मे ॥ ३७ ॥
इति निगदितवत्यास्तत्र भूपालपुत्र्या वचनमपरिहीणं पुण्यमाकर्ण्य सम्यक् ।
अविरलजलबिन्दुस्पन्दिभिर्नेत्रपत्रै-र्मुनिपरिषदशेषा वर्णभेदं प्रपेदे ॥ ३८ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे सप्तमः सर्गः ॥ ७ ॥

## पञ्चमे स्कन्धे अष्टमः सर्गः ।

अथ देव्या वचः श्रुत्वा विज्ञानप्रचयो मुनिः । उच्छ्वस्य विकसद्दृष्टिः ससंभ्रममभापत ॥ १ ॥
हन्त ! सा दमयन्ती त्वं हन्त ! स त्वत्पतिर्नलः । त्वदर्थं हि पुरा देवाः समायान्ति स हि क्षितौ ॥ २ ॥
त्वां हि चक्रेश्वरी देवी सेवाहेवाकशालिने । भीमाय प्रथमापत्यं ददौ दमनको मुनिः ॥ ३ ॥
अहो ! वत महत् कष्टं किं ब्रूमः किमु कुर्महे ? । सार्वभौमावुभौ यस्याः पिताऽपि स पतिश्च सः ॥ ४ ॥
यां न पस्पर्श चण्डांशुर्वनेऽपि भुवनेऽपि च । यस्या न सदृशी काऽपि रूपेण विभवेन च ॥ ५ ॥
दानं मानं च या दत्ते पापं पुण्यं च वेत्ति या । शास्त्रे गीते च या दक्षा भक्ता देवे गुरौ च या ॥ ६ ॥
नराणां च सुराणां च स्त्रीणां नृणां च सर्वथा । गृहिणां च यतीनां च या श्लाघ्या गुरुभिर्गुणैः ॥ ७ ॥

साऽपि संप्रति संप्राप्ता दुर्दशामीदृशीं यदि । किं परेषां वराकाणां लोकानां तद् विचार्यते ? ॥ ८ ॥ पञ्चभिः कुलकम् ।
आवर्ज्य सर्वगात्राणि पद्मिनीव दिवात्यये । सलज्जाधैर्यनिर्वेदं ददर्श विवशा भुवम् ॥ ९ ॥
तामित्थं सुस्थितां देवीं निःश्वासविधुराधराम् । आश्वासयितुमारेभे करुणार्द्रमना मुनिः ॥ १० ॥
वत्से ! वैदर्भि ! दुर्भेद्या यद्यपि क्लेशभित्तयः । तथापि महतां सत्त्वं कुलिशादपि कर्कशम् ॥ ११ ॥
दैवात् प्रियपरित्यक्ता न त्वं शोचितुमर्हसि । त्वत्तोऽपि हि न सञ्जाता दुःखिनी किं शकुन्तला ? ॥ १२ ॥
त्वमद्यापि सुखस्थाने स्थानभ्रष्टेन धीमता । कालज्ञेन स्वयं पत्या प्रहिताऽसि पितुर्गृहे ॥ १३ ॥
वत्सलः स च ते तातः सर्वं दास्यति वाञ्छितम् । कालमालम्ब्य भर्त्ताऽपि भूयस्त्वां पालयिष्यति ॥ १४ ॥
सुखे दुःखे च पश्यन्तं स्वस्मादप्यधिकाधिकान् । वैरिणौ हर्षशोकाख्यौ धीरं नहि निगृह्णतः ॥ १५ ॥
शृणु शाकुन्तलं वत्से ! त्वमाख्यानकमुत्तमम् । श्रुत्वा शिथिलशोकं ते हृदयं जायते यथा ॥ १६ ॥
दुष्यन्तः पौरवो धन्वी राजा गजपुराधिपः । मृगव्यविह्वलः कश्चिदन्वधावद् मृगं रथी ॥ १७ ॥
महारयरथासक्तं सशराकृष्टकार्मुकम् । तमन्तरितसारङ्गाः प्रोचुर्मुनिकुमारकाः ॥ १८ ॥
न वध्योऽयं न वध्योऽयं देवाश्रममृगो हि नः । कथं क्षत्रियशस्त्रं ते निवर्हतु निरागसम् ॥ १९ ॥
सफली मालिनीतीरे निर्विघ्नं वीक्ष्य वो वनम् । राजन् ! निजभुजत्रातां कृतार्थय महीमिमाम् ॥ २० ॥
स तथेति प्रतिश्रुत्य स्वकार्येषु विसृज्य तान् । एकाकी विरथः स्वैरं प्रविवेश तमाश्रमम् ॥ २१ ॥

विचरन् वृक्षमालासु स्फुरद्दक्षिणलोचनः । क्षुपसेकजुषां मध्ये कन्यानां काञ्चिदुत्तमाम् ॥ २२ ॥
प्रच्छन्नः स्वेच्छया पश्यन्नित्थमन्तरचिन्तयत् । अहो ! पुराद् वनं धन्यं कन्या यत्रेयमीदृशी ॥ २३ ॥ युग्मम् ॥
श्रमोदककणाक्लिन्ना सावश्यायेव पद्मिनी । वल्कं शिथिलयत्येषा सख्या निविडसंयमम् ॥ २४ ॥
लक्ष्मणाऽपि शशी हृद्यः शैवलेनापि वारि तत् । वल्कलेनापि रम्याऽसौ किं न वस्तुषु मण्डनम् ? ॥ २५ ॥
यद् ममार्यस्य रागोऽस्यां क्षत्रिया तदियं ध्रुवम् । सन्दिग्धेषु पदार्थेषु प्रमाणं हि सतां मनः ॥ २६ ॥
सिञ्चन्ती चूतसंयुक्तां पुष्पितां माधवीमियम् । त्वमपीत्थं भवेत्युच्चैर्युक्तमुक्ता वयस्यया ॥ २७ ॥
द्रागम्भः संभ्रमभ्रान्तो भृङ्गोऽस्या वक्त्रवारिजे । धन्योऽधरदलं पीत्वा रौति कर्णान्तनेत्रयोः ॥ २८ ॥
विवृत्तभ्रान्तहस्ताग्रा लोलाक्षी धुन्वती शिरः । मधुव्रतनटेनेयं निःसङ्गीतं हि नर्त्तिता ॥ २९ ॥
रक्ष रक्षालि ! रोलम्बादिति व्यक्तार्तगीरियम् । त्रातुमाह्वय दुष्यन्तमिति सख्योपहस्यते ॥ ३० ॥
तदेवं तावदित्यन्तः स्फुटप्रकटमभ्यधात् । आदिष्टोऽस्मि वनं त्रातुं राज्ञाऽऽसन्नविहारिणा ॥ ३१ ॥
तत् कोऽयं पौरवे पृथ्वीं पाति दुर्वृत्तघातिनि । अन्यायमतिमुग्धासु मुनिकन्यासु चेष्टते ? ॥ ३२ ॥
आर्य ! कश्चिद् न विघ्नोऽत्र विघ्नकृद् वा तथाविधः । नवरं भ्रमराद् भ्रान्ता सखीयं नः शकुन्तला ॥ ३३ ॥
इयं कुलपतेः पुत्री गालवस्य महात्मनः । प्रियंवदानुसूयाख्ये सख्यावावामुभे अपि ॥ ३४ ॥
सोमतीर्थप्रयातस्य तातस्यादेशतः सताम् । आतिथेयं करोत्येषा तदार्यातिथ्यमस्तु ते ॥ ३५ ॥

इत्युक्तो मुनिकन्याभ्यां मत्वा वाचैव तं विधिम् । नन्दिद्रुमतले ताभिः सह गोष्ठीमचीकरत् ॥ ३६ ॥
नन्वदारः कुलपतिस्तत्पुत्री वः सखीति किम् ? । पालनाद् गालवस्तातो वत्सा स्यात् कौशिकः पुनः ॥ ३७ ॥
तत्तपःखण्डनां कर्तुं मेनका पूर्वमाययौ । तां दृष्ट्वा च परं यद्वा किमार्यस्य निवेद्यते ? ॥ ३८ ॥
अस्तु ज्ञातं विशालाक्षी तदियं मेनकोद्भवा । अथ किं तत्परित्यक्ता प्राप्ता हि मुनिना वने ॥ ३९ ॥
दिव्यप्रभावतस्तस्याः शुका वृत्तिं वितेनिरे । शकुन्तैर्लालिता पूर्वं तेन नाम्ना शकुन्तला ॥ ४० ॥
आसंप्रदानतः कार्यमनया तद् मुनिव्रतम् । सह वा सदृशाक्षीभिः कुरङ्गीभिर्निर्विश्यति ॥ ४१ ॥
इमां वराय कस्मैचिद् महर्षिर्दातुमिच्छति । अस्यास्तु हृदये नित्यं तपसि स्पृहयालुता ॥ ४२ ॥
उपराजमिति श्रुत्वा प्रजल्पन्तीं प्रियंवदाम् । उत्थाय गन्तुमारेभे कुपितेव शकुन्तला ॥ ४३ ॥
कथयिष्यामि गौतम्या इमामश्लीलवादिनीम् । इति पारिप्लवं यान्तीमारुरोध प्रियंवदा ॥ ४४ ॥
चण्डि ! किं लभ्यते गन्तुमधमर्णाऽसि मे यतः । वृक्षसेचनकद्वन्द्वं मम देयं तदर्पय ॥ ४५ ॥
वस्त्रेण वलितां सख्या परिहासविदग्धया । तस्यास्तामनृणीकर्तुं स्वहारं नृपतिर्ददौ ॥ ४६ ॥
साऽऽशु तद्बहुमानेन निर्मुमोच मुधैव ताम् । अभूत् तेषां पुनर्गोष्ठी तत्तद्वार्त्तानुयायिनी ॥ ४७ ॥

नृपतिरनुशकुन्तलं स कामी नृपमनुबद्धमतिः शकुन्तलाऽपि ।
तदुभयमपि पश्यतः स्म सख्यौ तदिति बभूव रतिश्चिरं चतुर्णाम् ॥ ४८ ॥

समजनि रजनीमयं रजोभिर्नृपतिमनुव्रजतां ततोऽबलानाम् ।
क्षुभितमनुजनं वनं तदासीत् शिथिलितगोष्ठिचतुष्टयं च तासु ॥ ४९ ॥
निजबलमखिलं बहिर्विधातुं लघु ललितं प्रचचाल भूमिपालः ।
उटजमनु समन्विता सखीभ्यां स्मरभररुद्धगतिः शकुन्तलाऽपि ॥ ५० ॥
व्यर्थं तस्थौ व्यथितचरणा दर्भसूच्या किलेति व्यावृत्ताक्षी विटपघटितं वल्कलं चैत्यपश्यत् ।
स प्रत्याशं वलितनयनं पश्यतस्तस्य राज्ञः शून्यं चक्रे कुलपतिसुता तेन चित्तं सुरावत् ॥ ५१ ॥

इतिश्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे अष्टमः सर्गः ॥ ८ ॥

## पञ्चमे स्कन्धे नवमः सर्गः ।

उटजं प्राप्य न प्राप रतिं क्वापि शकुन्तला । स्कन्धावारगतो राजा निद्रां निशि न लब्धवान् ॥ १ ॥
शून्या नाचिन्तयत् किञ्चिद् नित्यकृत्यं मुनेः सुता । तद्वनासन्नमास्थाय नास्मरत् पौरवः पुरम् ॥ २ ॥
उभौ लज्जानदीरुद्धावुभौ दुर्लभरागिणौ । सव्यापसव्यमुक्तेषुर्जघन्वान् तद् द्वयं स्मरः ॥ ३ ॥
इत्थं तद्युग्ममारुह्य स्वैरं वदति मन्मथे । दैवाद् नक्तञ्चरैश्चक्रे मुनीनां यज्ञविप्लवः ॥ ४ ॥

तदाऽभ्यर्थनया प्राप्तः स एकोऽपि नृपः स्वयम् । अग्रेऽपि नर्त्तकः सद्यः किं पुनस्तूर्यमाहतम् ॥ ५ ॥
तद्नुर्म्वेनिनिर्द्धूतनक्तश्वरचये वने । कर्म कर्मठिनश्चक्रुर्वैतानं वीतसाध्वसाः ॥ ६ ॥
एकत्र वनवासेऽपि चूपस्यन्तौ परस्परम् । द्वावासन्नतरां नीतौ व्यवस्थां मदनेन तौ ॥ ७ ॥
मालिनीतीरकुञ्जेषु सा निनाय स्मरज्वरम् । जगाम तत्र राजापि तद्विलोकनतत्परः ॥ ८ ॥
ददर्श तत्र निश्चेष्टां दलस्रस्तरशायिनीम् । सखीभ्यामपि साश्रुभ्यां सेव्यमानां शकुन्तलाम् ॥ ९ ॥
कथञ्चिदपि पृच्छन्त्योर्वारं वारं द्वयोरपि । तयोर्भावज्ञयोर्भावं स्थित्वा स्थित्वा जजल्प सा ॥ १० ॥
मुक्त्वा मां नास्ति मे बन्धुर्न गोप्यं किञ्चिदेव वाम् । किं भूयोऽपि तथा कार्यं यथा स्यात् तत्कृपा मयि ॥ ११ ॥
ततः स्वीकृत्य कर्त्तव्यं सख्यौ श्लाघापुरस्सरम् । तां दुष्मन्ताय दातव्यं स्मरलेखमयाचताम् ॥ १२ ॥
तया च रचितं लेखं लिखितं केतकीदले । प्रस्तुतो वा नवेति द्वे पठतः स्म यथा किल ॥ १३ ॥
न जानामि तवावस्थां क प्रवेशः पराशये ? । हन्ति तु त्वत्कृते कामं कामो निर्दय ! मद्वपुः ॥ १४ ॥
इति श्रुत्वा स गाथार्थं शीघ्रं जनितसंभ्रमः । प्रविश्य कलया वाचा प्रत्युवाच शकुन्तलाम् ॥ १५ ॥
युक्तं पर्यनुयुक्तोऽस्मि किन्तु मुग्धेऽवधारय । इदं प्रकोष्ठतः स्रस्तं किमर्थं वलयं मम ? ॥ १६ ॥
नूनं प्राकृतमद्बाधं बाधते त्वां मनोभवः । रविरर्दितमेवेन्दुमन्वर्दति च कौमुदीम् ॥ १७ ॥
इति जल्पंस्तया सार्द्धं निषिण्णः खिन्नविग्रहः । अयाच्यत वयस्याभ्यां स्वीकर्त्तुं स शकुन्तलाम् ॥ १८ ॥

आजीवितान्तमात्मीयं वपुर्वित्तं तयोः पुरः । चक्रे तदा तदायत्तं सत्यवादी स पार्थिवः ॥ १९ ॥
ततः कृतार्थयोः सख्योर्व्याजपूर्वं प्रयातयोः । दयितो रन्तुमारेभे कन्याविश्रम्भनागरः ॥ २० ॥
तस्या वामस्वभावेन बालावस्थानुयायिना । स कामी दृष्टिरागोऽपि क्षणं पर्याकुलोऽभवत् ॥ २१ ॥
तैस्तैर्मृदुभिरक्लिष्टैरुपायैः परिशीलयन् । दुष्मन्तः स्वेच्छया रेमे वशीकृत्य शकुन्तलाम् ॥ २२ ॥
स पूर्वविरहव्यग्रां गच्छन्नापृच्छ्य वल्लभाम् । तस्या मनोविनोदार्थमित्यदादङ्गुलीयकम् ॥ २३ ॥
मन्नामवर्णमेवैकं त्वमत्र गणयान्वहम् । तदन्ते त्वां समानेतुं समेष्यति जनो मम ॥ २४ ॥
आशापाशनिबद्धेन हृदयेन वियोगिनी । साऽपि तद्गणनासक्ता कथञ्चिद् जीवितं दधौ ॥ २५ ॥
इत्योघसंज्ञया तस्याः कुर्वत्याः प्राणधारणम् । यावत् पर्याप्तकालोऽभूत् स वर्णगणनक्रमः ॥ २६ ॥
तावत् तदुटजद्वारि पाणिपात्रो दिगम्बरः । अशनायान्वितो मौनी दुर्वासा भिक्षुराययौ ॥ २७ ॥
महन्मुनिवरे तस्मिन् प्रमद्वरतया तया । बभूव स्खलितातिथ्या मिथ्यात्वरहिताऽपि सा ॥ २८ ॥
ततो मुनिमुखेनैव पूज्यातिक्रमकोपिनः । द्राक् तिर्यग्जृम्भका देवाः स्फुटमित्यशपन्त ताम् ॥ २९ ॥
स्मरन्तीयं न जानीषे ममाप्यतिथिमागतम् । मत्तवत् पूर्ववार्त्तां त्वां न स्मर्त्ता स्मारितोऽपि सः ॥ ३० ॥
श्रुत्वा तं शापमाप्ताभ्यां सखीभ्यां स मुनिर्द्रुतम् । अनुव्रज्य पुरः स्थित्वा मुहुर्नत्वाऽन्वनीयत ॥ ३१ ॥
दीनामशरणां शून्यां बालां विरहविह्वलाम् । शकुन्तलां च विज्ञाय प्रसेदुर्व्यन्तरामराः ॥ ३२ ॥

अभिज्ञानात् पुनः स्मर्त्ता दत्तस्तैरित्यनुग्रहः । तयोश्च दृक्पथाद् दूरं चक्रे व्यवहितो मुनिः ॥ ३३ ॥
अभिज्ञानाय सङ्कल्प्य तद् नृपस्याङ्गुलीयकम् । सख्यौ दुःखभयात् शापं विदितं तेन चक्रतुः ॥ ३४ ॥
ततः शापाच्च निश्चिन्ते दुष्मन्ते पृथिवीपतौ । वर्णसङ्ख्याधिकं कालं न विषेहे शकुन्तला ॥ ३५ ॥
ईषदापन्नसत्त्वां तां किमेतदिति शङ्किताः । ददृशुस्तापसा वल्लीमकालललितामिव ॥ ३६ ॥
अवर्णवादमात्मीयं मत्वा तेषां विरक्तितः । मुखं सा दर्शयामास सखीभ्यामपि न स्फुटम् ॥ ३७ ॥
कथं पितरि संप्राप्ते भविष्याम्यहमीदृशी ? । इति त्रासाद् गतच्छायं स्त्रीरत्नं तद् बभूव च ॥ ३८ ॥
कालक्रमेण संप्राप्तस्तत्पिता गालवोऽपि सः । अभ्युत्थितमुनिव्यासं कुर्वन्नवमिवाश्रमम् ॥ ३९ ॥
तस्याग्निशरणं सद्यः प्राप्तमात्रस्य यज्वनः । इति श्रुतिपथं प्रापदशरीरा सरस्वती ॥ ४० ॥
दुष्मन्तेनाहितं वीर्यं बिभ्रती भूतये भुवः । जानीहि तनयां ब्रह्मन् ! वह्निगर्भां शमीमिव ॥ ४१ ॥
तामाकर्ण्य मुनिर्वाचं प्रीतः पत्युर्गृहं प्रति । प्रगुणीकर्त्तुमारेभे प्रस्थानाय शकुन्तलाम् ॥ ४२ ॥
इति च स्वच्छयात्मल्पविह्वलेनान्तरात्मना । सशङ्कामङ्कमारोप्य लज्जमानामलालयत् ॥ ४३ ॥

किञ्च स्वयं प्रणिहितैर्बटुभिस्तरुभ्यः प्राप्तानि सन्निधिवशाद् वनदेवतानाम् ।
दिव्यानि रत्नमणिमौक्तिकनिर्मितानि तस्यै ददौ स विविधानि विभूषणानि ॥ ४४ ॥
इत्यन्तरिक्षवचनात् पितरि प्रसन्ने पत्युर्गृहं प्रति शकुन्तलया प्रयातुम् ।

आपृच्छ्य गद्गद्गिरा परिरभ्यमाणे तामूचतुः सपदि शापमुपेक्ष्य सख्यौ ॥ ४५ ॥
स त्वां यदि स्मरति नैव कदापि राजा तस्याङ्गुलीयकमिदं हि तदार्पणीयम् ।
श्रुत्वा च तत् किमिति सापि पुनर्ब्रुवाणा नन्वेवमेव किल मन्दमवादिताभ्याम् ॥ ४६ ॥
श्लाघापरैरनुगता मुनिभिः प्रसन्नैरुद्भिन्नबाष्पजडदृष्टितया स्खलन्ती ।
पत्युर्गृहं प्रति चचाल शकुन्तलापि हृल्लेखया सकलमाकुलया दधाना ॥ ४७ ॥
सार्कं शार्ङ्गरवेण पृष्ठिविषये शारद्वतेनाग्रतो गौतम्या स समं विचित्रवचनालापैः प्रयान्त्याः पुरः ।
भूयासुस्तव पञ्चवर्णजलदप्रच्छन्नसूर्यातपाः पन्थानः सवितानराजभुवनप्रस्थाः पदार्था इव ॥ ४८ ॥
इत्युक्त्वा कुलपतिना स्वयं विसृष्टा गङ्गायां सुखमतिवाह्य रात्रिमेकाम् ।
सोत्कण्ठं सपरिजना प्रगे प्रपेदे दुष्मन्तस्थितिगुरु हस्तिनापुरं सा ॥ ४९ ॥
इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे नवमः सर्गः ॥ ९ ॥

## पञ्चमे स्कन्धे दशमः सर्गः ।

तानागतवतः सर्वान् शीघ्रं विज्ञाप्य वेत्रभृत् । अन्तः प्रवेशयामास पुरोहितपुरस्सरः ॥ १ ॥
केऽमी किमर्थमत्रेति ? तेषु सर्वेषु पौरवः । असंस्तुतेष्विव क्षुब्ध्वा तत्क्षणं क्षिप्तवान् दृशः ॥ २ ॥

शकुन्तला तु पश्यन्ती पतिमास्थानसंस्थितम् । प्रौढप्रेमोपसृष्टाऽपि चुक्षुभे मनसा भृशम् ॥ ३ ॥
तत्तस्या दक्षिणं चक्षुः स्पन्दमानं पुनः पुनः । चक्रे निरुद्धनिःश्वासनिष्पन्दमखिलं वपुः ॥ ४ ॥
तेषां विरचिते राज्ञा कुशलप्रश्नकर्मणि । प्रणीतसमुदाचारः स्वस्थः शार्ङ्गरवोऽवदत् ॥ ५ ॥
सर्वमव्याहतं राजन् ! वार्त्तं कुलपतेरपि । स त्वां तत्रभवानाह विजयाशीः पुरःसरम् ॥ ६ ॥
स्वयं स्वीकृतवान् यत्त्वं धर्मरागिणि भूपतौ । स्थिते त्वयि वरे पुत्र्या कृतं निश्चिन्तया द्रुतम् ॥ ७ ॥
इयं कुलपताका नः प्रासादस्त्वं च जङ्गमः । विधाय युवयोर्योगं युक्तकारी स्थितो विधिः ॥ ८ ॥
संप्रत्यापन्नसत्त्वेति तदियं प्रहिता त्वयि । ईदृशे न यतः कन्या पितुर्वेश्मनि शोभते ॥ ९ ॥
इति तस्मिन् वदत्येव प्रत्युवाच द्रुतं नृपः । धिक् किमेतदुपन्यस्तमसमञ्जसमञ्जसा ? ॥ १० ॥
ब्रह्मन् ! सम्यग् भवान् वेत्ति कस्मै का प्रहिता किल । इमां न परिणीतामप्यहं जानामि कुत्रचित् ॥ ११ ॥
तत् कथं व्यर्थसम्बन्धो मयि स्थानस्थितेऽपि वः ? । युक्तेव घटते सत्सु माननाऽपि यतः सताम् ॥ १२ ॥
इत्याकर्ण्य नृपस्योक्तं सद्यः क्षोभं व्रजन्नपि । पुनः सधैर्यसंरम्भं प्रोचे शारद्वताग्रजः ॥ १३ ॥
प्रहिता त्वत्कृते राजन्नियं च त्वत्परिग्रहः । असत्यं न वयं ब्रूमः कोपेन प्रणयेन वा ॥ १४ ॥
सोमवंशविशुद्धस्य सत्यशौचान्वितस्य वा । विशेषेण विशांपत्युः पौरवस्य पुरस्तव ॥ १५ ॥ युग्मम् ॥
न तु स्मरति ते राजन्नवधानं विनाऽधुना । नृणां हि चेतनाचक्षुः प्रमादपटलावृतम् ॥ १६ ॥

शकुन्तले ! महाराजं भर्त्तारमवबोधय । स्वेच्छावान् राजधर्मोऽपि प्रायः स्मृतिपराङ्मुखः ॥ १७ ॥
इत्युक्ता गुरुशिष्येण व्रीडावनतकन्धरा । सा विरेजे महादुःखात् प्रविविक्षुरिव क्षितिम् ॥ १८ ॥
तस्मिंस्तादृशि दुर्द्धर्षे प्रेम्णि प्राप्ते दशामिमाम् । मम वज्रमयाः प्राणाः प्रियस्य रसनाऽथवा ॥ १९ ॥
परिणीतेऽपि सन्देहस्तद् वाच्यं किमतः परम् ? । हता हि सांप्रतं तावदाशा दूराधिरोहिणी ॥ २० ॥
ततो दुष्मन्तकौशिक्योर्गौतम्याश्च परस्परम् । गम्भीरमुग्धशान्तोऽभूद् विवादः कोऽपि तत्क्षणम् ॥ २१ ॥
आर्यपुत्राथवा नैवं किञ्चित् पौरव ! ते क्षमम् । तदा तादृशमाख्याय संप्रत्याख्यातुमीदृशम् ॥ २२ ॥
यत् स्यात् किञ्चिदभिज्ञानं तद् भवेत् प्रत्ययस्तव । बाढं दर्शय तच्छीघ्रं नीत्या को न प्रतीयते ? ॥ २३ ॥
तर्हि त्वया तदा दत्तं नामाङ्कितमलौकिकम् । तदेतदङ्गुलीयं ते क्व नु तद् देहि दृश्यताम् ॥ २४ ॥
हन्त ! नास्ति क्व तद् यातं आर्यगौतमि ! किन्त्विदम् । पश्य प्रज्ञेव सोद्वेगा शून्या मे कथमङ्गुली ? ॥ २५ ॥
वत्से ! तत् पतितं मन्ये गङ्गायामङ्गुलीयकम् । शक्रावतारतीर्थस्य प्रणमन्त्या जलं तव ॥ २६ ॥
तानि प्रियंवदोक्तानि स्मर वा मालिनीतटे । भद्रे ! स्मृतं मया सर्वं न स्मृतं च विरम्यताम् ॥ २७ ॥
ईदृशैः खलु नारीणां ललितस्निग्धशीतलैः । असत्यवाक्सुधासारैः प्लाव्यते विपयी जनः ॥ २८ ॥
हा हा मैवं महाभाग ! मुग्धात्मा कन्यकाजनः । अदृष्टव्यवहारश्च कथं मिथ्या भविष्यति ? ॥ २९ ॥
ततः प्रकुपितश्चित्ते दुष्मन्तस्य तया गिरा । हस्तमुद्यम्य साक्षेपं क्षिप्रं शार्ङ्गरवोऽवदत् ॥ ३० ॥

भो भो भूपाल ! युक्तस्ते द्रोहः कुलपतिं प्रति । तस्करः कुलकन्याया येन पात्रीकृतो भवान् ॥ ३१ ॥
इयं शीलकुलोपेता रूपलक्षणसंयुता । न दीयते किमन्यस्मै यदि न त्वं वृतो भवेत् ॥ ३२ ॥
प्रजिघाय कुलीनत्वादिमां कुलपतिस्त्वयि । दारत्यागमहापापं तत् किं कर्तुं त्वमर्हसि ? ॥ ३३ ॥
नूनमैश्वर्यमत्तानाममी लक्ष्मीविकारजाः । भवन्त्येवंविधा भावा नितान्तमवशात्मनाम् ॥ ३४ ॥
निगृह्य श्रुतिदृग्वाचस्ततो हरति चेतनाम् । समुद्रमथनोत्पन्ना लक्ष्मीर्विषसहोदरी ॥ ३५ ॥
न पश्यति पुरःस्थं यद् विनम्रं न शृणोति यत् । यद् न जल्पति लक्ष्मीवान् न च स्मरति संस्तुतम् ॥ ३६ ॥
अथवा किं बहूक्तेन यत् सन्देशहरा वयम् । इयं कुलपतेर्वाचा मुक्ताऽस्माभिर्नृप ! त्वयि ॥ ३७ ॥
इमां स्वीकुरु वामां वा सर्वत्रापि प्रभुर्भवान् । कृत्वा कुलपतेर्वाक्यममी प्रचलिता वयम् ॥ ३८ ॥
इत्युत्थाय प्रयान्तं तमनुयान्तीं शकुन्तलाम् । अवेक्ष्य रुदतीं दीनां गौतमी वाक्यमब्रवीत् ॥ ३९ ॥
हा शार्ङ्गरव ! मा मैवं प्रतीक्षस्व ननु क्षणम् । अनुगच्छति नौ दीना विलपन्ती शकुन्तला ॥ ४० ॥
ईदृक् निष्करुणे पत्यौ किं मे पुत्री करोतु वा ? । इत्युक्तः स वलद्ग्रीवं क्रुद्धः शार्ङ्गरवोऽवदत् ॥ ४१ ॥
ननु तिष्ठ प्रमत्ताऽसि भूयः किं हि तवाश्रमे ? । इत्थं दहति च प्रेम स्वच्छन्दमपरीक्षितुम् ॥ ४२ ॥

यथा नृपस्त्वाह तथाऽसि चेत् त्वं ततः पितुर्निःकलया त्वया किम् ? ।
निजं च जानामि शुचिव्रतं तत् पत्युर्गृहे दास्यमपि क्षमं ते ॥ ४३ ॥

इति ब्रुवाणं मुनिपुत्रकं तं जातानुकम्पो नृपतिर्जगाद ।
भो भो महात्मन् ! मुनयो दयार्द्रा भवन्ति तत् किं त्यजसीदृशीं स्त्रियम् ? ॥ ४४ ॥
राजन् ! समग्रोऽपि जनः परस्मै धर्मोपदेष्टा न पुनर्निजस्य ।
यदीदृशस्त्वं सघृणोऽसि दारत्यागी भवानेव ततः किमेवम् ? ॥ ४५ ॥
सापत्यामपरिचितामिमामदृष्टां संपन्नामपि गुणसंपदा समन्तात् ।
सङ्गृह्य प्रणयितयाहमद्य दारत्यागी स्यामुत भण पारदारिको वा ? ॥ ४६ ॥
नो चेत् किं परिकरदुर्वहा ममेयं द्वेष्या वा मनसि लघुत्वभाजनं वा ।
न्यायेन स्वमपरिवादिनं वितन्वन्नित्यूचे तमनु मुनिं जनाधिनाथः ॥ ४७ ॥
त्वं राजा वयमपि तापसाः प्रसिद्धा नारीयं त्रितयमिदं प्रभूतमत्र ।
त्वं त्राता वयमपि युक्तवृत्तिवाचः पाल्येयं तदिह कुरुष्व यत् क्षमं ते ॥ ४८ ॥
इत्युक्त्वा सपदि शकुन्तलां विहाय स्वच्छन्दं सपरिजने मुनौ प्रयाते ।
कौशिक्यामजनि जनो दयार्द्रचेताः स्वीकर्तुं नृपमपि तां मुहुर्ययाचे ॥ ४९ ॥
अथ कथमपि राजा तां गृहे नानुमेने मनसि परकलत्रं सर्वथा मन्यमानः ।
सदयहृदयभावस्तं पुरोधा बभाषे पुनरुचितविधिज्ञः प्रज्ञया वीक्षितार्थः ॥ ५० ॥

यत् तावकस्य गणकैः प्रथमस्य सूनोः श्रीवत्सलाञ्छनमुरः कथितं किलास्ति ।
आस्तां तदा प्रसवकालमियं गृहे मे दृष्टे सुते समुचितं सकलं विधेयम् ॥ ५१ ॥
तथेति राज्ञानुमतः पुरोधा यावद् गृहीत्वा स्वगृहे जगाम ।
श्वासाकुलस्तावदुपेत्य शीघ्रं सभासमक्षं सहसा जगाद ॥ ५२ ॥
चित्रं चित्रमहो ! गृहे मम गता सा मुक्तकण्ठं शुचा निन्दन्ती निजकर्म वाष्पसलिलं बालाऽऽशु तत्याज च ।
धीसंस्थानमुपेत्य तां च तिरयञ्ज्योतिर्जवाद् यात्यदः प्रेक्ष्यन्ते महसोल्बणा दशदिशस्तेनाखिलाः पश्यत ॥ ५३ ॥
ततो राज्यं सर्वं बत किमिदमित्याकुलमभूद् भयं भेजे राजा न खलु मम दुश्चेष्टितमिति ।
वितेनुर्वैतानं द्विजवरगणाः शान्तिकविधिं समन्तादानर्चुः कुलदुहितरो गोत्रजरतीः ॥ ५४ ॥
माया किन्तु किमिन्द्रजालमथवा चित्तभ्रमोऽभूद् ध्रुवं सा बाला नहि निर्निमित्तमथवा शास्तेति चित्ते स्मरन् ।
तेनाश्चर्यरसेन शान्तकरुणाशृङ्गारगर्भात्मना किञ्चित्कालमनन्यकौतुकरसो राजापि तस्थौ भृशम् ॥ ५५ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे दशमः सर्गः ॥ १० ॥

## पञ्चमे स्कन्धे एकादशः सर्गः ।

अथैकदा पुरे तस्मिन् हट्टविक्रयकारिणः । आरक्षकनराः प्रापुर्धीवरादङ्गुलीयकम् ॥ १ ॥
तस्याभरणमुख्यस्य राजनामाङ्कितस्य ते । पिनद्धाधिगमं वेगादपृच्छन् धीवरं रुषा ॥ २ ॥
शक्रावतारतीर्थस्य जालाकृष्टस्य पाटनात् । ऊचे रोहितमत्स्यस्य तत् प्राप्तं जठरान्तरात् ॥ ३ ॥
अश्रद्धेयगिरं मत्वा कैवर्त्तं दण्डपाशिकः । राज्ञोऽङ्गुलीयकं दत्त्वाऽपृच्छद् वध्यस्य निर्णयम् ॥ ४ ॥
मुद्रारत्नं तदुद्वीक्ष्य शान्तशापविषभ्रमः । उदश्रुरभवद् राजा सद्यः स्मृत्वा शकुन्तलाम् ॥ ५ ॥
उपपत्तिमतीं मत्वा तत्प्राप्तिं गौतमीगिरा । अमोचयत् स कैवर्त्तं कृत्वा दारिद्र्यवर्जितम् ॥ ६ ॥
तदादि स महादुःखी दुष्मन्तः स्वममन्यत । जन्मस्मृतिमिव प्राप्तं सुप्तोत्थितमिवाथवा ॥ ७ ॥
ददाह हृदयं तस्या न तथा विरहानलः । स्वयं भग्नप्रियाशस्य पश्चात्तापो यथा भृशम् ॥ ८ ॥
शयन-स्नान-ताम्बूल-विलेपनविवर्जितः । कारागारमिव प्राप्तः साम्राज्येऽपि बभूव सः ॥ ९ ॥
लीलाललितनिर्मुक्तं गीतनृत्यादिवर्जितम् । बभूव सकलं राज्यं तद्दुःखेन निरुत्सवम् ॥ १० ॥
विरहवेदनया भृशमाकुलः सहचरं परिगृह्य क्षमाधवः । प्रियतमाललितप्रतिबद्धया विहरति स्म वने रतिवार्त्तया ॥ ११ ॥
अहो ! दहति हन्त ! मे हृदि तदेव लीलावनं स एव च मधूत्सवः प्रलयकालकल्पस्थितः ।

दमयन्त्या आश्वासनाय चारणश्रमणैः कथितं शाकुन्तलाख्यानकम् ।

प्रियाविरहवेदनाविवशचेतसः सर्वथा तदद्य परिवर्त्तते मम वयस्य ! विश्वं जगत् ॥ १२ ॥
कुलवति सुभगे जनेऽनुरागं कथमितरोऽपि जनः करिष्यतेऽद्य ।
इह खलु विषयेऽतिदुःखभाजां प्रथममुदाहरणं प्रिया समासीत् ॥ १३ ॥
ननु सखे ! भवता कथितस्तदा मुनिसुताधिगमः प्रथमं मम ।
अथ पुनः परिहास इति त्वया मयि गभीरतया प्रतिपादितः ॥ १४ ॥
भो राजन् ! यदि तावदत्रभवतीं त्वद्धर्मपत्नीं ततस्तां शक्त्या खलु हर्तुमत्र विजयी नाखण्डलोऽपि क्षमः ।
तत् केनापहृता भवेत् प्रियसखी कुत्राथवा वर्त्तते ? तस्याः कोऽपि हि दिव्यभूमिविषयी बन्धुः परिज्ञायते ॥ १५ ॥
जाने सख्यास्तव भगवती मेनका जन्मभूमिर्जातप्रीत्या सपदि च तया निश्चितं सापहृत्य ।
नीता दिव्यव्यतिकरमयं दुर्गमं भूमिभागं वैताढ्ये वा निवसति गिरौ सा वने नन्दने वा ॥ १६ ॥
अथवा न जीवति शकुन्तला ध्रुवं विषमापमानहतया तया मम ।
जननीकरादपि नभःस्थलान्तरे गिरिमूर्ध्नि कुत्रचन पातितं वपुः ॥ १७ ॥
शान्तं पापममङ्गलं प्रतिहतं स्वस्त्यस्तु तस्यै सखे ! यत्नं तज्जननी हि तत्र कुरुते मूर्च्छा ससत्त्वा च सा ।
प्रायः कान्तपराभवेऽपि महति स्वापत्यवात्सल्यतः स्वीकुर्वन्ति यदत्र मृत्युरभसं नापन्नसत्त्वाः स्त्रियः ॥ १८ ॥
प्रियवयस्य ! मया सदृशो जडस्त्रिभुवनेऽपि न कोऽपि किलाभवत् ।

प्रियतमां परिहृत्य शकुन्तलां निजकुलक्रममूलहरोऽपि यः ॥ १९ ॥
अयि वयस्य ! कदुष्णतरैरमैरविरलैरपि लोचनवारिभिः ।
निरपराधवधूपरिहारभूरनुशयाग्निरयं न निगृह्यते ॥ २० ॥
यो यः स्वयं प्रियतमापरिहारकारी यो यः प्रयाति मरणं निरपत्य एव ।
आकल्पमेकवचनेन हि निर्विकल्पं दुष्मन्त नाम लभतां भुवि सोऽपि सोऽपि ॥ २१ ॥
इत्युक्तः सन् हर्म्यभागे स यातो राजन् ! राजन् ! रक्ष रक्षेत्यरौषीत् ।
श्रुत्वाऽऽरावं तस्य राजाप्यधावद् नैवापश्यत् क्रन्दतस्तस्य मूर्त्तिम् ॥ २२ ॥
रक्षां कर्त्तुं तस्य शब्दानुसारी यं यं राजा याति कक्षान्तरं च ।
तस्मात् तस्मादन्यमन्यं प्रवेशं गाढाक्रन्दः केन चित्रीयते सः ॥ २३ ॥
रक्षोभूतप्रेतवेतालमुख्यः कोऽयं चित्ते वेत्ति नैव स्वसारम् ।
दृष्टस्त्वसौ जीवितस्य ध्रुवं स व्यक्तं यद् वा तस्य रुष्टः कृतान्तः ॥ २४ ॥
क्रीडापात्रं ब्राह्मणं मे विनिघ्नन् मामुद्यम्य व्याहरत्येष धूर्त्तः ।
यत् तस्यैव व्योमभागं धुनानः क्ष्वेडानादः श्रूयतेऽसौ तथाहि ॥ २५ ॥
नन्वेप मां मेषवत् कम्पमानं रुद्धा कण्ठं हन्मि शार्दूलवृत्त्या ।



दमयन्त्या आश्वासनाय चारणश्रमणैः कथितं शाकुन्तलाख्यानकम् ।
॥१२१॥

आर्त्तत्राणव्यापृतः संप्रति द्राक् दुष्मन्तस्त्वां पातु धन्वी किलेति ॥ २६ ॥
रे रे रक्षस्तिष्ठ तिष्ठ क्व यासि ? छन्नच्छन्नस्त्वं न मे गोचरोऽसि ।
किन्तु द्वेपिस्कन्धरक्तारुणानां प्रत्यक्षस्त्वं पत्रिणां मामकानाम् ॥ २७ ॥
सभ्रूभङ्गं स ब्रुवाणस्तदित्थं चक्रे चापं सज्जगुञ्जद्गुणं च ।
त्यक्त्वा विघ्नं मातलिस्तं च वेगात् प्रत्यक्षोऽभूत् सस्मितं भाषमाणः ॥ २८ ॥
अयि सखे ! विमुखं कुरु साधकं त्वमहन्नेव हि मे भव सन्मुखः ।
न तु सुहृत्सु सतां श्रवणस्पृशो विनिपतन्ति दृशो न शिलीमुखाः ॥ २९ ॥
किमपूर्वमेतदयि ! संविधानकं पुरुहूतसूत ! कुशलं कुतोऽधुना ? ।
इति तं जगाद परिरभ्य भूपतिः कटुभाषिणं स विनिवार्य माधवम् ॥ ३० ॥
आयुष्मतः सकरुणस्य रसान्तरायक्रीडाकृता भव नरेन्द्र ! तदद्य सद्यः ।
आदेशतः शतमखस्य कुरुष्व यात्रां वैताढ्यसीमनि निशाचरसूदनाय ॥ ३१ ॥
इत्युक्त्वा तं मातलिः स्यन्दनाङ्के निःशङ्कानामेकधुर्यं निवेश्य ।
चक्राघातक्षुण्णपर्यस्तजालः कण्ठाभोगन्यस्तमालश्चचाल ॥ ३२ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे एकादशः सर्गः ॥ ११ ॥

# पञ्चमे स्कन्धे द्वादशः सर्गः ।

तस्मिन्नारुह्य संप्राप्ते रथं मातलिसारथिम् । पुरेषु राक्षसेन्द्राणां समनह्यन्त सैनिकाः ॥ १ ॥

शब्दैः समरभेरीणां निर्भरं भरितेऽम्बरे । अनाहूता अपि प्रापुः स्वयमप्सरसो रसात् ॥ २ ॥

शतघ्नीशूलमुशलमुशण्डीमुद्गरादिभिः । पिधाय भास्करं चक्षुर्निशामित्रनिशाचराः ॥ ३ ॥

ततो दुष्मन्तसूर्यस्य दृष्ट्या नाराचरोचिषः । तमप्यमन्दमन्दारमालाभिस्त्रिदिवौकसः ॥ ४ ॥

कृत्वा निःशब्दसञ्चारं रणक्षेत्रमकण्टकम् । स समं सन्मुखैर्दूतैरुपतस्थे शतक्रतुः ॥ ५ ॥

गीयमानगुणग्रामं गन्धर्वैर्धुतमूर्द्धभिः । तमर्द्धासनसन्मानभाजनं विदधे हरिः ॥ ६ ॥

तैस्तैर्मृदुभिरालापैर्दत्त्वा दिव्याद्भुतं च तत् । आपृच्छन्तं सुनासीरः कथञ्चिद् विससर्ज तम् ॥ ७ ॥

शशंस सस्मितं तस्मै विस्मयोत्फुल्लचक्षुषे । स्थानानि तानि दिव्यानि मातलिर्गगनाध्वनि ॥ ८ ॥

अस्मिन् दशतया नित्यं दधाने फलसंपदः । कल्पवृक्षवने सन्ति परेलक्षा महर्षयः ॥१०॥

अत्र तत्रभवान् भव्यविद्याधरनमस्कृतः । स्वयमिन्द्रगुरुः स्वामी मरीचिस्तप्यते तपः ॥११॥

इत्याकर्ण्य रथं मुक्त्वा दुष्मन्तो नन्तुमिच्छया । प्रैपीदवसरं ज्ञातुं मातलिं मुनिसन्निधौ ॥१२॥

तत्र तिष्ठन् समायान्तं स किञ्चित् पञ्चवार्षिकम् । ददर्श बालकं स्त्रीभ्यामुभयाभ्यामनुद्रुतम् ॥१३॥

तस्य पश्यत एव द्राक् स बालः सिंहशावकम् । मातुः स्तनन्धयं धृत्वा तलघातैरताडयत् ॥ १४ ॥
विधेहि वदनं व्यात्तं दशनान् गणयामि ते । इति तन्मुखमङ्गुल्या बलाद् बालः स कर्षति ॥ १५ ॥
स न सिंहीभयं धत्ते नासौ स्त्रीभ्यां निवारितः । तयोस्तमपकर्षन्त्योर्भ्रष्टं तद्वलयं करात् ॥ १६ ॥
तद् भूमिपतितं ज्ञात्वा दधतुस्ते न तत्करे । तदर्थं च स चुक्रोश शिशुरुत्क्रोशवद् भृशम् ॥ १७ ॥
श्रीवत्सलाञ्छनं दृष्ट्वा तं बालं पुलकान्वितः । स्नेहादियेप दुष्यन्तः कर्त्तुं तद्वलयं तथा ॥ १८ ॥
निनाय च यथास्थानं स सद्यस्तद्विभूषणम् । दत्त्वा पुत्रं च तं तस्मै युवती ते जजल्पतुः ॥ १९ ॥
दिष्ट्या त्वमसि दुष्मन्तः सोमवंशविभूषणम् । तत् सर्वदमनो नाम्ना पुत्रोऽयं तव सर्वथा ॥ २० ॥
नूनं मरीचिना दत्तमौषधीवलयं ततः । इदमस्य कराद् भ्रष्टं न स्प्रष्टुमितरः क्षमः ॥ २१ ॥
इदं पित्रोः परं दृष्ट्वा भस्मीभवति तत्क्षणात् । तत्किं नु बहुना तावत् सनाथाऽद्य शकुन्तला ॥ २२ ॥
भूमण्डलविहारिण्या भानुमत्या मुखेन च । वेत्ति त्वद्विरहावस्थां स्वयं सापि वियोगिनी ॥ २३ ॥
तदद्य निलये मातुर्वसन्त्या अपि सोत्सवम् । तस्याः पूर्णोऽस्तु दृष्ट्वा त्वामेकवेणीव्रतावधिः ॥ २४ ॥
मरीचिवन्दनं कर्त्तुं गच्छन्ती कमलेक्षणा । कल्याणी किञ्च सैवेयमित एवाभिवर्त्तते ॥ २५ ॥
तयोस्तदिति जल्पन्त्योः सहसैव ससंभ्रमम् । दूराद् ददृशतुर्व्यक्त्या दम्पती तौ परस्परम् ॥ २६ ॥
गाम्भीर्यकरुणौत्सुक्यत्रपाहर्षतरङ्गितः । दृष्टिपातस्तयोरासीत् सखीभ्योऽपि स्पृहावहः ॥ २७ ॥

हन्त ! दिष्ट्याद्य पुण्याहमार्यपुत्रो जयत्विति । जल्पन्तीमेव दुष्मन्तः प्रत्युवाच शकुन्तलाम् ॥ २८ ॥
यत् पुरा स्मृतिवैकल्यादपराद्धं मया त्वयि । तत् क्षमस्व प्रिये ! सर्वं तवायं विहितोऽञ्जलिः ॥ २९ ॥
तदेव केवलं देवि ! महद् भाग्यं ममाभवत् । यत् पुत्रवत्सलत्वेन सन्न्यस्तं न त्वया वपुः ॥ ३० ॥
अद्याहं पुत्रवान् जातः पत्नीवांश्च कृशोदरि ! । जीवन्ती त्वं मया लब्धा दुःखाद् जीवन् मृतापि यत् ॥ ३१ ॥
कैवर्त्तकरसंप्राप्ताद् यतः स्मृतिरभूद् मम । तदेतदङ्गुलीयं ते प्राप्नोतु पुनरङ्गुलिम् ॥ ३२ ॥
आकर्ण्य तदिदं किञ्चिद् बाष्पोद्भेदं निगृह्णती । जगाद गद्गदं भक्त्याऽभिदुष्मन्तं शकुन्तला ॥ ३३ ॥
आर्यपुत्र ! किमर्थं हि देहत्यागं करोम्यहम् । क्व पुनर्दर्शनं नाथ ! मृताया मे त्वया सह ? ॥ ३४ ॥
दैवात् स्मृतिपदं नाथ ! प्राप्तायास्तव दुर्लभम् । विश्वस्तघ्नमिदं कस्माद् दीयते मेऽङ्गुलीयकम् ? ॥ ३५ ॥
अद्याभूत् पितृमान् वत्सस्तत् सर्वदमनो मम । अद्य भर्तृमती चाहं यत् प्रिय ! त्वं प्रसीदसि ॥ ३६ ॥
इत्थं मिथः प्रियालापं दम्पत्योः कुर्वतोस्तयोः । मातलिः समयं ज्ञात्वा संप्राप्तः स्फुटमुक्तवान् ॥ ३७ ॥
दिष्ट्या विजयतां श्रीमान् चिरात् पत्न्या समन्वितः । पुत्रेण चानुरूपेण हृदयाब्जेन्दुना समम् ॥ ३८ ॥
आयुष्मन्नात्मनैव त्वां ज्ञात्वा ज्ञानादिह स्थितम् । सकुटुम्बमपि श्रीमान् मरीचिर्द्रष्टुमिच्छति ॥ ३९ ॥
तत् त्वर्यतामिति श्रुत्वा पुत्रपत्नीसमन्वितः । स गत्वा सत्वरं विद्वान् ववन्दे चरणौ गुरोः ॥ ४० ॥ युग्मम् ॥
विधाय प्रस्तुतालापं गुरुणाप्यभिनन्दितः । उवाच वचनं राजा दुष्मन्तः प्रश्रयाश्रयम् ॥ ४१ ॥



दमयन्त्या आश्वासनाय चारणश्रमणैः कथितं शाकुन्तलाख्यानकम्।

भगवंस्त्वत्प्रसादेन संयुक्तोऽहं गृहश्रिया । चिरादद्य कृतार्थोऽस्मि किन्तु प्रष्टव्यमेव मे ॥ ४२ ॥
इयं तव वधूः पूर्वं प्राप्तापि न मया स्मृता । किमङ्गुलीयकं दृष्ट्वा भूयोऽपि स्मृतिमाययौ ? ॥ ४३ ॥
इति पृष्टः स्वयं राज्ञा मरीचिर्मुनिसत्तमः । ऊचे दुर्वाससः शापं तं मुद्रादर्शनावधिम् ॥ ४४ ॥
तं सर्वदमनं चापि पुत्रं प्रतिवरं ददौ । प्रजानां भरणादेष भरताख्यो भवत्विति ॥ ४५ ॥

इत्थं मरीचिमुनिना विहितप्रसादो विद्याधरैः परिवृतः शतशः समेतैः ।
पुत्रान्वितः सह शकुन्तलया प्रतस्थे भूयः पुरन्दरपुरप्रतिमं पुरं सः ॥ ४६ ॥

तदेतदद्भुतमिह पूज्यपूजनं व्यतिक्रमव्यतिकरजं सुदारुणं
शकुन्तलाचरितमपेक्ष्य चेतसा न भीमजे ! क्षममनुशोचितुं तव ॥ ४७ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे द्वादशः सर्गः ॥ १२ ॥

---

## पञ्चमे स्कन्धे त्रयोदशः सर्गः ।

---

इति भास्करशिष्यस्य मुखादाकर्ण्य तां कथाम् । वैदर्भी स्वमभिप्रायं प्रकाशितवती गिरा ॥ १ ॥
भगवन् ! सत्यमेवेदं दुःखं सेहे शकुन्तला । सूक्ष्मदृष्ट्या विमृष्टे तु ततः कष्टं ममाधिकम् ॥ २ ॥

आजन्मतोऽपि साम्राज्यं वनवासो ममाधुना । पूर्वमारण्यकी सा तु वनवासाद् न दूयते ॥ ३ ॥
अथवा मा स्म भूद् विश्वे कस्याश्चित् कष्टमीदृशम् । अहमेव यतः पापा पापानामेकभाजनम् ॥ ४ ॥
इति दुःखाग्निबाष्पौघं सृजन्तीं क्षितिभृद्भुवम् । महामुनिपयोदस्तामभ्यवर्षद्वचोऽमृतैः ॥ ५ ॥
आयाति यद् यदा यस्य दुःखं किमपि देहिनः । अपि स्वल्पमनल्पं वा तत् तदा तस्य दुस्सहम् ॥ ६ ॥
अपि नाम कलावत्या यदि तावत् तथा स्थितम् । त्वमित्थं गतमात्मानं नैकं शोचितुमर्हसि ॥ ७ ॥
शृणु ते कथयिष्यामि कलावत्याः कथामहम् । यामाकर्ण्य त्वमात्मानं दुःखितं नैव मन्यसे ॥ ८ ॥
जावालपुरभूपालः शङ्खः सुखमहोदधिः । उदात्तधीरललितः कलावान् विनयी नयी ॥ ९ ॥
रूपेण जितकामस्य विक्रमेण हतद्विषः । विद्वद्गोष्ठ्या ययुस्तस्य निश्चिन्तस्यैव वासराः ॥ १० ॥
अन्यदा पुरपर्यन्ते भ्रमतस्तस्य वाजिभिः । सैन्यस्येव रजोराशिः सनिःस्वानः पुरोऽभवत् ॥ ११ ॥
तद् विज्ञातुं तदादिष्टाः शीघ्रं विज्ञाय सादिनः । व्यजिज्ञपन् प्रसन्नाभिर्वाग्भिरञ्जलिमौलयः ॥ १२ ॥
सार्थः स्वपुरवास्तव्यो देव ! देशान्तरादयम् । आदाय सारभाण्डानि कुशलेन समागतः ॥ १३ ॥
इभ्यसाधुर्गजो नाम्ना सार्थनाथश्च पार्थिव ! । भवन्तं द्रष्टुमभ्येति तदसावनुगृह्यताम् ॥ १४ ॥
इति श्रुत्वा तमाभाष्य नामग्रहणपूर्वकम् । सरस्तरुतलासीनस्तस्य सेवाक्षणं ददौ ॥ १५ ॥
स महार्घं तदानीतं वस्तुजातमुपायनम् । स्वीकृत्य सुप्रसन्नः सन् तं निःशुल्कमचीकरत् ॥ १६ ॥

ततः माथुः स पेटायाः पट्टकूलशतावृतम् । उद्घाट्य दर्शयामास तस्य चित्रपटं स्फुटम् ॥ १७ ॥
तत्र चित्रपटे नारीं रूपेणालौकिकेन सः । पश्यन् सुखधृबुद्ध्या प्रणन्तुं प्रगुणोऽभवत् ॥ १८ ॥
तं तथास्थितमुर्वीशं निवार्य स वणिग्वरः । ऊचे देवेन देवीयं तत्त्वमस्या निशम्यताम् ॥ १९ ॥
इतो गत्वा दशार्णेषु विदिशासन्निधौ मम । आवासितस्य कान्तारे सायं भृत्यैर्निवेदितम् ॥ २० ॥
यदत्राश्वोऽस्ति गुल्मौघलग्नवल्गानियन्त्रितः । निश्चेष्टः पतितः पृथ्व्यामश्ववारश्च सन्निधौ ॥ २१ ॥
समानीय महाश्वं तं ततोऽहं पटमण्डपे । उपचारपरैर्भृत्यः स्वस्थं कारितवान् द्रुतम् ॥ २२ ॥
तस्यानुपदिकं सैन्यं प्रातर्विष्वक् समाययौ । राज्ञो विजयसेनस्य स हि राज्यधरः सुतः ॥ २३ ॥
अश्वेनापहृतः प्राप केवलं तादृशीं दशाम् । सुवर्णबाहुरित्याख्यां स बिभर्ति महाभुजः ॥ २४ ॥
दशार्णपतिपुत्रेण तेन नीतः सहैव हि । प्रविष्टोऽस्मि पुरीं देव ! बद्धध्वजपटावृताम् ॥ २५ ॥
स प्रणम्य पितुः पादौ निषण्णः सन्निधौ सदि । अश्वापहरणोदन्तं पृच्छ्यमाणोऽवदद् मुदा ॥ २६ ॥
अपहृत्य तुरङ्गेण प्रक्षिप्तो निर्जने वने । आरूढ एव निश्चेष्टस्तात ! जातोऽस्म्यहं श्रमात् ॥ २७ ॥
गुल्मौघलग्नवल्गः सन् क्वापि तस्थौ स्वयं हरिः । निश्चेष्टः पतितः पृथ्व्यामहं विटपघट्टनात् ॥ २८ ॥
तत्र मे नष्टचेष्टस्य सिंहव्याघ्राकुले वने । नन्वेष सन्निधौ साधुर्दैवादावासितोऽभवत् ॥ २९ ॥
यद्यकारणबन्धुर्मे न तदा परिपालनम् । अकरिष्यदयं साधुस्ततो मे जीवितं कुतः ॥ ३० ॥

तात ! तातवदास्तेन महता साधुनाऽमुना । एष प्राणप्रदानेन क्रीतोऽस्मि मरणावधिः ॥ ३१ ॥
इति तद्वचसा राज्ञा भ्रातरं प्रतिपद्य माम् । सामन्तपदवीं दत्त्वा नादाद् गन्तुं क्वचिद् मम ॥ ३२ ॥
तत्र लब्धप्रतिष्ठस्य प्रतिपत्त्या तया मम । रम्येषु राजकार्येषु मुख्यता सकलेष्वभूत् ॥ ३३ ॥
तस्य चास्ति महीभर्त्तुः कलाकुलनिकेतनम् । स्वर्णबाहोरवरजा सुता नाम्ना कलावती ॥ ३४ ॥
चतुष्टयं समस्यानां यः कश्चित् पूरयिष्यति । स मत्प्रिय इति व्यक्तं तया देव ! प्रतिश्रुतम् ॥ ३५ ॥
तदर्थं तत्र सर्वेषु हूयमानेषु राजसु । मयकापि हि देवस्य श्रुतः प्रज्ञागुणो भृशम् ॥ ३६ ॥
ततः सह मया देवमामन्त्रयितुमुच्चकैः । दशार्णपतिना दूतः प्रहितो गरुडाभिधः ॥ ३७ ॥
अहं च सार्थमादाय स्वदेशोन्मुखमञ्जसा । समं तेन प्रपन्नोऽस्मि प्रमाणं परतः प्रभुः ॥ ३८ ॥
छायामात्रमिदं तस्या रूपमालेख्यगं तथा । प्ररोचनार्थं देवस्य समानीतं स्वयं मया ॥ ३९ ॥
इति तन्मुखचन्द्रोत्थं वाक्पीयूषं निपीय सः । द्रुतं संभावयामास तं दूतं तत्पुरस्सरम् ॥ ४० ॥
कलां कीर्तिं कलावत्या लावण्यं च विचिन्त्य तत् । तत्र स्वयम्वरे यातुं सज्जतां विदधेऽधिकम् ॥ ४१ ॥
कथं मम समस्यानां शक्तिः स्यात् परिपूरणे ? । इति सारस्वतं मन्त्रं लक्षमेकं जजाप सः ॥ ४२ ॥
तं शक्तिप्रवणं शुभ्रं चापचक्रव्यवस्थितम् । सानुस्वारं स्मरन् देवीं स ददर्श सरस्वतीम् ॥ ४३ ॥
मुक्तावलिविलक्षेण कमण्डलुजलेन तम् । अभिषिच्य जगन्माता सान्तर्धानं पुनर्ययौ ॥ ४४ ॥

दमयन्त्या आश्वासनाय भास्करशिष्येण कथिता कलावत्याः कथा ॥

तदनुग्रहसञ्जातपरमप्रतिभाबलः । पदवाक्यप्रमाणेषु स निष्प्रतिमतां ययौ ॥ ४५ ॥
ततो दूतं पुरः प्रेक्ष्य सहैव गजसाधुना । चचाल शङ्खभूपालः कलावत्याः स्वयम्वरे ॥ ४६ ॥
संनिवेशितसैन्यस्य तस्य रेवानदीतटे । द्रुतमन्तर्जलात् कश्चिदुन्ममज्ज महागजः ॥ ४७ ॥
सैन्यद्विपघटाटोपं सहसा तस्य पश्यतः । सलिलस्नानधौतापि मदलक्ष्मीरदीप्यत ॥ ४८ ॥
तुरगैस्तुरगाद् निघ्नन् रथैरास्फालयन् रथान् । सकलं व्याकुलं चक्रे चमूचक्रं क्षणेन सः ॥ ४९ ॥
तमापतन्तमुद्भ्रान्तमन्तकप्रतिमं गजम् । अवध्यमपि शिक्षार्थं शङ्खः किञ्चिदताडयत् ॥ ५० ॥
स कुम्भपतितं बाणं शैलशृङ्गमिवोद्वहन् । प्राप दिव्यं वपुः सद्यः सैन्यैर्विस्मितमीक्षितैः ॥ ५१ ॥
प्रभावोपनतैर्दिव्यैः कुसुमैरवकीर्य सः । उवाच मौक्तिकासारं वितन्वन् दन्तकान्तिभिः ॥ ५२ ॥
राजन् ! गन्धर्वराजस्य जानीहि जनवल्लभम् । प्रियदर्शनसञ्ज्ञस्य तनयं मां प्रियंवदम् ॥ ५३ ॥
निर्लज्जं रममाणेन दिव्यस्त्रीभिः सहाथ मे । मया पूर्वमवज्ञातो मतङ्गाख्यो महामुनिः ॥ ५४ ॥
क्रुधा तेनाभिशप्तोऽहं जातो मत्तमतङ्गजः । भूयस्तदानुनीतः सन् स मुनिर्मामभाषत ॥ ५५ ॥
यदा मद्रेश्वरो राजा शङ्खस्त्वां प्रहरिष्यति । तदा प्रपत्स्यते शीघ्रं पुराणीं प्रकृतिं भवान् ॥ ५६ ॥
सोऽहं संप्रति संप्राप्तः शापमोक्षं मनीषितम् । उपकर्त्तुः प्रियं कर्त्तुं किञ्चिद् वाञ्छामि ते नृप ! ॥ ५७ ॥
अस्त्रं प्रस्वापनं नाम्ना गान्धर्वं तद् गृहाण मे । अहिंसा विजयश्चैव यत्प्रयोक्तुः फलद्वयम् ॥ ५८ ॥

इत्थमभ्यर्थितस्तेन सानुरोधः क्षितीश्वरः । अस्त्रमन्त्रं स्वयं सम्यक् तन्मुखेन गृहीतवान् ॥ ५९ ॥

एवं तयोर्विहितसौहृदयोर्वनान्ते गन्धर्वपार्थिवकुलोत्थितयोरकस्मात् ।
एको ययौ सपदि सौमनसप्रदेशानन्योऽपि निर्भरसमृद्धिजुषो दशार्णान् ॥ ६० ॥

तत्र स्वयं विजयसेननरेश्वरेण प्रत्युद्गतेन विधिवद्विहितातिथेयः ।
पृथ्वीपतिः स निवसन्नुपकारिकायां सोत्कण्ठ एव शयने रजनीं निनाय ॥ ६१ ॥

साध्यं विधिं प्रातरुपास्य सम्यक् माङ्गल्यवृत्त्या कृतयुक्तवेषः ।
महार्हमञ्चस्थितराजलोकं स्वयम्वरस्थानमवाप सद्यः ॥ ६२ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे त्रयोदशः सर्गः ॥ १३ ॥

## पञ्चमे स्कन्धे चतुर्दशः सर्गः ।

तस्य स्थितवतस्तत्र रत्नसिंहासनं महत् । पठत्सु बन्दिवृन्देषु ध्वनत्सु पटहेषु च ॥ १ ॥

मनुष्यवाह्यमारुह्य यानं कन्याशतावृतम् । स्वयम्वरसभामध्यं प्रविवेश कलावती ॥ २ ॥ युग्मम् ॥

अथ सानन्दमुद्यम्य हेमदण्डधरं करम् । इति तस्याः प्रतीहारी चकार किल घोषणाम् ॥ ३ ॥

भो भोः शृणुत भूपालाः ! राजपुत्र्याः प्रतिश्रुतम् । यः समस्याश्चतस्रो मे पिपर्त्ति स वरो मम ॥ ४ ॥
छिद्यमानोऽपि शस्त्रेण द्वेधा भवति न द्रुमः । किमत्र कारणं वाच्यं ? स्फुटीकुरुत पार्थिवाः ! ॥ ५ ॥
अनाक्षिप्तोऽपि पद्मिन्या निःश्वासं विसृजत्यलिः । किमत्र कारणं वाच्यं ? स्फुटीकुरुत पार्थिवाः ! ॥ ६ ॥
दिवापि चक्रवाकानां मिथुनैर्यद् विभज्यते । किमत्र कारणं वाच्यं ? स्फुटीकुरुत पार्थिवाः ! ॥ ७ ॥
सलिलेनापि नापैति कुङ्कुमं यद्वधूमुखात् । किमत्र कारणं वाच्यं ? स्फुटीकुरुत पार्थिवाः ! ॥ ८ ॥
इति प्रत्युत्तरं तत्र राज्ञामप्रतिपेदुषाम् । पपाठ शङ्खभूपालः समस्यास्ता यथान्वयम् ॥ ९ ॥
स हि च्छायामयो वृक्षो निःश्वासो विरहोष्मवान् । मुखं दर्पणसंस्थं च राहुग्रस्तश्च भास्करः ॥ १० ॥
इति पूर्णासु सर्वासु समस्यासु यथा स्वयम् । वृणोति स्म द्रुतं शङ्खं सत्यसन्धा कलावती ॥ ११ ॥
तस्मिंस्तुल्यगुणे युग्मे स्तूयमाने मुदा जनैः । चक्रे हृदि नरेन्द्राणां प्रसरं मत्सरज्वरः ॥ १२ ॥
अन्तर्निविडरोषाग्नेर्बहिर्दर्शितसम्मदाः । ययुर्दशार्णमापृच्छ्य पथि शङ्खं रुरुत्सवः ॥ १३ ॥
विधिं समाप्य वैवाहं पथि कान्तासमन्वितम् । स्वदेशाभिमुखं शङ्खं न्यगृह्णन् वसुधाभुजः ॥ १४ ॥
तत्राजनि महायुद्धं रेणुरुद्धदिवाकरम् । शब्दस्पर्शपरिज्ञेयहस्त्यश्वरथसैनिकम् ॥ १५ ॥
पतद्भिर्वैरिणां विष्वग् विशिखैर्मर्मभेदिभिः । दिदीपे तस्य वीर्याग्निः समिद्भिरिव निर्भरम् ॥ १६ ॥
न तस्य ददृशे किञ्चिद् व्याप्तस्य रिपुसायकैः । शलभैरवकीर्णस्य द्रुमस्येव महीयसः ॥ १७ ॥

ततः संमोहनं नाम्ना महावीर्यं महाबलः । अस्त्रं मुक्त्वा स गान्धर्वं शङ्खः शङ्खमपूरयत् ॥ १८ ॥
तस्मिन् मुक्तेऽरिसैन्यानां नयनानि निरन्तरम् । निद्रा निनाय सङ्कोचं कमलानीव यामिनी ॥ १९ ॥
दर्शयन् तान् शिशुग्राह्यानित्युवाच प्रियां नृपः । त्वमेभिर्मम हस्तस्था युद्धेनानेन वाञ्छ्यसे ॥ २० ॥
सा पत्युर्विजयभ्रान्त्या वहन्त्यस्मितमाननम् । लज्जानिविडिता कान्तं प्रशशंस सखीमुखैः ॥ २१ ॥
जीवितं कृपया त्यक्तं यशो वः संहृतं मया । शराग्रैरलिखद् वर्णानिति राज्ञां स केतुषु ॥ २२ ॥
ततो निर्वाहसामर्थ्यं पुरं प्राप प्रियान्वितः । उपर्युपरि संभूतैरुत्सवैरनयद् दिनान् ॥ २३ ॥
अभवत् परमप्रेम द्वयोरपि परस्परम् । नित्यं शङ्खकलावत्योर्द्वयोर्नयनयोरिव ॥ २४ ॥
निर्व्याजं रममाणायाः शङ्खेन सह रागिणा । गर्भोऽभवत् कलावत्या वपुषः पुष्टिमावहन् ॥ २५ ॥
तस्मिन्नवसरे तस्याः प्रहितः पितृमन्दिरात् । माङ्गल्यमाययौ कर्त्तुमन्तःपुरवरो जनः ॥ २६ ॥
तदह्नि तत्प्रियो राजा गतोऽभूद् वनचर्यया । तत्रैव च विनोदेन निनाय सकलं दिनम् ॥ २७ ॥
दिनशेषे च संप्राप्तः पुरं वनविहारतः । अचिन्त्यदर्शनात् प्रीतिं प्रियायाः कर्त्तुमैहत ॥ २८ ॥
निभृतं निरुपानद्भ्यां चरणाभ्यां समं चरन् । सञ्ज्ञया वारयन् सर्वं प्रविवेश प्रियागृहम् ॥ २९ ॥
तत्पृष्ठिं प्राप्य हास्याय तस्या मीलयितुं दृशौ । पश्यन् जालान्तरे तस्थौ समं वायसमायया ॥ ३० ॥
कृत्वा पितृगृहात् प्राप्तं शृङ्गारं सुखमास्थिता । सख्या संभाष्यमाणासीत् तत्काले सा कलावती ॥ ३१ ॥

यत् किल स्पृहणीयापि त्वमद्य द्यौरिवेन्दुना । अमुना सखि ! केयूरद्वयेनैव विराजसे ॥ ३२ ॥
किमन्यद् मणिमाणिक्यमुक्ताखचितयोर्द्वयोः । तावत्केयूरयोर्मूल्यं न शक्यं कर्तुमेतयोः ॥ ३३ ॥
त्वमाभ्यामतिरागाभ्यां संसक्ताभ्यां सुनिर्भरम् । विभासि पुष्पदन्ताभ्यां गृहीता भुजयोरिव ॥ ३४ ॥
तद् ब्रूहि सखि ! कस्तुभ्यं केयूरद्वयमीदृशम् । प्राहिणोत् परमप्रेमपारायणपरायणः ॥ ३५ ॥
तदित्थमथ पृच्छन्त्यास्तस्या रहसि निर्भरम् । चकार हृदये राजा चिन्तामिति चमत्कृतः ॥ ३६ ॥
अहो न हि मया दत्तं न च दृष्टं मया पुरा । अपूर्वमङ्गदद्वन्द्वमिदमस्याः कुतोऽधुना ॥ ३७ ॥
ममैव संशयं हर्तुं मन्ये पृष्टेयमेतया । किमत्रार्थे समाधत्ते सावधानः शृणोमि तत् ॥ ३८ ॥
इति दत्तावधानस्य रहः शङ्खस्य शृण्वतः । वैदग्ध्येनैव निर्व्याजं व्याजहार कलावती ॥ ३९ ॥
किमात्थ सखि ! केनेदं यत् किल प्रैपि भूषणम् ?। ननु कः प्रेषयेत् स्वल्पः स्वल्पप्रेमापि चेदृशम् ॥ ४० ॥
यस्य चित्तेऽहमुत्कीर्णा यश्च मे हृदि रोपितः । तेनैतत् प्रहितं मह्यं न सामान्येन केनचित् ॥ ४१ ॥
प्राप्य प्राणप्रियस्याद्य प्रसादीकृतमण्डनम् । संप्राप्तमिव सर्वाङ्गमालिङ्गनमिदं मया ॥ ४२ ॥
न तथा महिमोत्कर्षो भर्त्रा दत्तोऽर्बुदोऽपि मे । यथा तत्प्रहिता मह्यं दत्ते गुञ्जापि गौरवम् ॥ ४३ ॥
कुतो मे मन्दभाग्याया भूयस्तद्दर्शनोत्सवः । ब्रुवाणैव सवाक्स्तंभमित्यश्रूणि मुमोच सा ॥ ४४ ॥
तत्तडित्पातसङ्घातदुःसहं दयितावचः । ददाह हृदये राज्ञः सपदि प्रेमपर्वतम् ॥ ४५ ॥

न विवेद प्रियोक्तीनां पारंपर्यं स पार्थिवः । तस्याः पितृगृहात् प्राप्तमुपायनमतर्कयत् ॥ ४६ ॥
धिग् धिग् मलिनशीलायां प्रेमास्यां मम निर्भरम् । बहिर्मुखस्य दुर्बुद्धेर्मुधा रागान्धचेतसः ॥ ४७ ॥
आः पापे ! विकलीभावं कुलटात्वेन बिभ्रती । कलावतीति नाम स्वं वहन्ती नहि लज्जसे ॥ ४८ ॥
भवतु प्रतिकारमेष सर्वं द्रुतमस्याः सदृशं समाचरामि ।
स्थितिलङ्घिनि दुर्जने विलज्जे न मुहूर्त्तं महतां मनोऽनुरागः ॥ ४९ ॥
याभ्यां गर्वमियं बिभर्त्ति भुजयोर्निःपुण्यका पुंश्चली ताभ्यामेव भवत्विमां यदि नहि व्यापादयामि क्षणात् ।
नन्वस्याः सुतरां लघुर्यदि मया दत्तोऽर्बुदोऽप्यस्ति यत् तद् लूनां महतीं ददामि सपदि स्वच्छायया जायते ॥ ५० ॥
इत्युद्दामक्रोधरुद्धः प्रवेशं नैवाकार्षीत् मन्दिरे स प्रियायाः ।
तस्याश्चोक्तं व्यत्ययेनेव मेने स्वादु द्रव्यं शुद्धपित्तज्वरीव ॥ ५१ ॥
व्यावृत्य तद्भुवनतः स्वमवाप्य हर्म्यं दुःकर्मसाधनविधिं रहसि प्रपञ्च्य ।
देवीं कदर्थयितुमुल्वणचित्तवृत्तिः तं तं जनं विनियुजे स निजाननेन ॥ ५२ ॥

इतिश्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे चतुर्दशः सर्गः ॥ १४ ॥

## पञ्चमे स्कन्धे पञ्चदशः सर्गः ।

ततः कलावतीं देवीं देवेन्द्रदयितोपमाम् । मायं सारथिरागत्य बभाषे रोपणाभिधः ॥ १ ॥
देवि ! पर्वतकान्तारे कृतावासः प्रभुः स्वयम् । त्वां दिदृक्षति वेगेन प्रस्थातुं प्रगुणीभव ॥ २ ॥
साप्यविज्ञातवृत्तान्ता द्रुतमुत्थातुमिच्छती । समामाद्य दशासङ्गं विलम्ब्य पुनरुद्ययौ ॥ ३ ॥
समागाद्य पुरं तस्या यान्त्याः पथि पुराद् वहिः । तत्याज सहसा जिह्मः कर्मसाक्षी नभस्तलम् ॥ ४ ॥
रोपणस्य नृपादेशाद् गहने तां जिहासतः । मनः प्रेरयितुं वाहान् शशंसे न पुनः करः ॥ ५ ॥
न द्रष्टुमिव तद् दुःखं तमः कम्बलमालिते । देव्यौ द्यावापृथिव्यौ स्वं सद्यः पिदधतुर्मुखम् ॥ ६ ॥
उत्थ मनसि निःशङ्के विविक्तासु स्थलीषु च । माध्वसादिव तच्चक्षुश्चकम्पे दक्षिणं भृशम् ॥ ७ ॥
सा तेन दुर्निमित्तेन दूयमानमना भृशम् । क्व दूरेऽद्यापि भर्त्तेति पृच्छति स्म मुहुर्मुहुः ॥ ८ ॥
तामिति व्याकुलां दीनां यन्तापि विजितत्रपः । कथञ्चिदुक्तवान् जाड्यजिह्मजर्जरया गिरा ॥ ९ ॥
येषां स्वामिकृते वध्यः पिता भ्राता सुतोऽपि वा । आयुष्मति ! तदस्माकं दग्धं जन्मानुजीविनाम् ॥ १० ॥
गुप्रसीद तदस्मासु पराधीनेषु जन्तुषु । दुर्भरस्योदरस्यार्थे सर्वं कुर्वत्सु सर्वदा ॥ ११ ॥
पूजनीया त्वमस्माकं मनोवचनकर्मभिः । तथापि शृणु मे वाक्यं कृत्वा वज्रमयं मनः ॥ १२ ॥

त्वामिह स्वामिनो वाचा प्रचण्डश्वापदे वने । अहं त्यक्त्वा गमिष्यामि घृणया सह संप्रति ॥ १३ ॥
तस्य चाप्यवगच्छामि न तत् कल्याणि ! कारणम् । त्वयि साध्व्यां सगर्भायां विरुद्धं हृदयं यतः ॥ १४ ॥
इतः शुष्कसरिद् दूरादस्याः कीकसकर्कशम् । तदध्यास्व जितक्रूरनरकप्रस्तरं तटम् ॥ १५ ॥
इहापि त्वां हि जीवन्तीं दुर्दैवं तत् क्षमेत चेत् । त्रातयाप्यपरित्रातुं येनास्माकं त्वमर्पिता ॥ १६ ॥
इति श्रुत्वा शिलापातघातघोरतरं वचः । सहसा शुष्ककण्ठौष्ठी सासीत् साध्वसरुद्धवाक् ॥ १७ ॥
तां च सारथिरुत्तार्य पङ्कसङ्काशविग्रहाम् । मुमोच निम्नगातीरे शून्यस्थाने मृगीमिव ॥ १८ ॥
ततस्तं सत्वरं गन्तुमापृच्छन्तं कृपापरम् । जगाद गुरु गांभीर्यगूढमन्युर्मनस्विनी ॥ १९ ॥
न त्वं पुनरवस्थां मे तात ! शोचितुमर्हसि । यस्याः संभावमाधातुं त्वादृशोऽभूत् कृपापरः ॥ २० ॥
इयता किञ्चन प्राप्तं जीवितव्यफलं मया । यद् मम प्राणनाशेन प्रियस्य प्रीयते मनः ॥ २१ ॥
तद् गच्छ तावदार्य ! त्वं सत्वरं धृतिमुद्वहन् । परलोकविधौ यात्रां यावद् न मम पश्यसि ॥ २२ ॥
इत्युक्तः स ययौ यन्ता मुञ्चन्नश्रूणि निर्भरम् । संभाव्य भावि तत् किञ्चित् तस्या दुःखेन दुःखितः ॥ २३ ॥
ततस्तस्मिन् गते तस्याः पश्यन्त्या निर्जनं जगत् । वक्षो विभेतुमारेभे मन्युर्भयसमन्वितः ॥ २४ ॥
रुरोद मुक्तकण्ठं सा लुठन्ती तटिनीतटे । साक्षिणीमिव कुर्वाणा धरणिं करताडनैः ॥ २५ ॥
हन्त हन्त न दुर्बोधा तवैकस्य गतिर्विधेः । राज्ञामपि गतिं वेत्तुं विद्वांसोऽपि जडाशयाः ॥ २६ ॥

इयमात्मप्रतीतिर्मे विरुद्धाहं न यत्त्वयि । त्वमीदृशोऽपि मे नाथ ! भर्त्ता भूया भवे भवे ॥ २७ ॥
तद् युक्तं यद् मम प्राणाः प्राणेश्वर ! हतास्त्वया । धन्यानां खलु नारीणां भर्तुरर्थे विपत्तयः ॥ २८ ॥
आसन्नमरणाया मे स्मरन्त्याश्चरणौ तव । विरौति खरकारूढा शिवा घोरस्वरा कथम् ? ॥ २९ ॥
राज्ञा त्यक्ता ततो यस्माद् दुःशीलासीत् कलावती । इति मे दुर्यशो दीप्तं कीर्त्तिघ्नं प्रभविष्यति ॥ ३० ॥
कुलपङ्क्तिच्युतानां हि द्वेष्याणामयशस्विनाम् । यत् सत्यं नावकाशोऽस्ति दिवि देवसभास्वपि ॥ ३१ ॥
हा हा हा तात ! हा मातर्जाता वां यज्ञनिर्मम । तया कुलकलङ्कोऽयं कृतो वां निष्कलङ्कयोः ॥ ३२ ॥
अहो कर्षति वां व्रीडा तिरस्कारश्च कान्तजः । इदं स्फुटति मे वक्षः सेयं व्रजति चेतना ॥ ३३ ॥
इति तां करुणक्षीणजर्जरार्त्तकलस्वराम् । चाण्डालीद्वयमागत्य विलपन्तीमतर्जयत् ॥ ३४ ॥
आः पापे ! किं वृथारावैः कर्णौ बधिरयिष्यसि ? । तिष्ठ तिष्ठ न जानासि स्वकर्म स्मर बन्धुकि ! ॥ ३५ ॥
नन्विदं मण्डनस्थाने खण्डनं प्रतिपाद्यते । त्वां कुर्मः सुस्थितां पापे राजापथ्यविधायिनि ॥ ३६ ॥
इति निर्भर्त्सयन्त्यौ ते दृष्ट्वा नर्त्तितकर्त्तिके । सद्यः कण्ठगतप्राणा मूर्छां प्राप कलावती ॥ ३७ ॥
तदा दशार्णराजस्य दुहितुः कंपसंप्लवात् । ससाध्वसरसावेशः शिथिलीकृतवान् वपुः ॥ ३८ ॥
कृतान्तकिङ्कराकारे कात्यायन्यौ च निःकृपे । मातङ्ग्यौ तदवस्थां तां यद् जवादुपसर्पतुः ॥ ३९ ॥
आकेयूरभरन्यासं छित्त्वा निःसन्धिबन्धनम् । नीत्वा ते तद्भुजद्वन्द्वं जग्मतुः शङ्खसन्निधौ ॥ ४० ॥

तद्वेदनाधिकतया प्रतिपन्नसञ्ज्ञा छिन्नं भुजद्वयमतिव्यथया वहन्ती ।
कान्तस्य दारुणतया मरणोन्मुखी सा चक्रन्द मन्दकरुणस्वरकण्ठकुण्ठम् ॥ ४१ ॥

त्यक्ताशायाः कुवलयदृशः सर्वथा जीवितव्ये धर्मो धर्मः शरणमिति च व्याकुलं व्याहरन्त्याः ।
पृथ्वीपीठे कठिनविषमे निःसहं मुक्तगात्र्या दैवात् प्राप्य प्रसवमभवत् तत्क्षणं पुत्रजन्म ॥ ४२ ॥

दृष्ट्वा पूर्णमृगाङ्कमण्डलनिभं पुत्रस्य पुण्यं मुखं तद्वात्सल्यविशेषविस्मृतभुजच्छेदव्यथासंस्तवः ।
तस्मिन्निर्भरभूरिभैरवरवे भूभृद्वने निर्जने माङ्गल्याय पतिव्रता स्मृतवती देवान् गुरून् भक्तितः ॥ ४३ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे पञ्चदशः सर्गः ॥ १५ ॥

## पञ्चमे स्कन्धे षोडशः सर्गः

अथ तं पुत्रमात्मीयं रुदन्तं स्तन्यहेतवे । शशाक नेतुमुत्सङ्गे न कथञ्चित् कलावती ॥ १ ॥
भृशमुल्लाप्यमानोऽपि कलावत्या कलस्वरम् । तत्करस्पर्शमप्राप्य विरराम न बालकः ॥ २ ॥
ततस्तं दूरतः श्रुत्वा रुदन्तं करुणस्वरम् । सहसा सन्निधिं प्रापुः कृपया वनदेवताः ॥ ३ ॥
विदित्वा तत्कलावत्या वृत्तान्तं प्रणिधानतः । ताः स्थलीनामधिष्ठात्र्यः प्रत्यवोचन् परस्परम् ॥ ४ ॥

धिग् धिग् राज्यमिदं राज्ञां चक्षुष्मन्तोऽपि यद्वशात् । अन्धा इव न पश्यन्ति कृत्याकृत्यं महीभुजः ॥ ५ ॥
जनोऽपि प्रमवादूर्ध्वं छिनत्ति कदलीमपि । सगर्भापि हि शङ्खेन हा विध्वस्ता कलावती ॥ ६ ॥
एकस्यैवापराधोऽस्या यः शङ्खं धृतवान् करः । आकेयूरात् करद्वन्द्वं कथं शङ्खेन खण्डितम् ? ॥ ७ ॥
स्त्रीहत्या भ्रूणहत्या वा न तेन गणिता यदि । तत् किं वज्रमयो राजा स प्रेम्णापि न पीडितः ॥ ८ ॥
येनैकदापि दृष्टा स्यात् सोऽपि प्राणैरपि प्रियम् । कर्त्तुमिच्छति नन्वस्याः किं पुनर्यस्य वेश्मनि ॥ ९ ॥
द्विधाभविष्यदेवास्या वक्षो दुःखास्त्रताडितम् । अभविष्यद् न चेत् सद्यः स्यूतं सन्तानतन्तुना ॥ १० ॥
कदर्थितापि सश्रीका दूनापि मृदुभाषिणी । अस्या हि सदृशी नारी न कापि कापि दृश्यते ॥ ११ ॥
शापेन सकलं राष्ट्रं भस्मीकर्त्तुं क्षमा यदि । न क्रुध्यति तथाप्येषा पतिं प्रति पतिव्रता ॥ १२ ॥
इयमस्मद्वने मन्ये त्यक्ता पत्या पतिव्रता । तदिमां पालयिष्यामः संवद्धा हि स्त्रियः स्त्रियाम् ॥ १३ ॥
नूनमस्मत्प्रमादोऽयं यदियं वनसीम्नि नः । जरज्जनङ्गमस्त्रीभ्यां साध्वी प्राप पराभवम् ॥ १४ ॥
इति तासां कृपालूनां जल्पन्तीनां परस्परम् । स्वबाललालनोत्कण्ठाविह्वलं विललाप सा ॥ १५ ॥
पुत्र ! रोदिषि दुःखेन केन केन पदे पदे ? । दुःखं तदेव मौलिक्यं कुक्षौ मे यत्समागतः ॥ १६ ॥
पश्य पुत्र ! न वार्तापि तल्पास्तरणवाससाम् । पाषाणविषमा सेयं सुखशय्या मही तव ॥ १७ ॥
क कथा स्नानकृत्यानां कवोष्णैर्गन्धवारिभिः ? । कृत्येव व्यात्तवक्त्रेयं शुष्का तुङ्गतटी सरित् ॥ १८ ॥

क्रियते येन शुश्रूषा सर्वसाधारणं न मे । तद्भुजद्वन्द्वमप्यस्ति दूरे परिजनः परः ॥ १९ ॥
कथमित्थं व्यवस्थाहं धारयिष्यामि जीवितम् । कृत्ता पतिपरित्यक्ता निराशा निर्जने वने ॥ २० ॥
वृत्तिभ्रंशाद् व्यथा वेगात् श्वापदेभ्योऽथवाधुना । हा हा मयि विपन्नायां कथं बालो भविष्यति ? ॥ २१ ॥
सङ्कल्पितशतैः प्राप्तः सौम्यः सर्वाङ्गसुन्दरः । इयानेव त्वदङ्गस्य वत्स ! मे दर्शनोत्सवः ॥ २२ ॥
किञ्चिद् मयि विपन्नायां वैरं त्यक्त्वा पिता तव । त्वां ज्ञात्वात्र त्रपावेशादनुगृह्णीत वा न वा ॥ २३ ॥
यद् वा मयि सगर्भायां निःप्रेमा निष्कृपश्च यः । स कथं स्वीकरोति त्वां त्रैलोक्या यमसन्निभः ॥ २४ ॥
हा हा अलमलं वत्स ! बाष्पं संवृणु संवृणु । त्वामहं पालयिष्यामि वनराज ! विरम्यताम् ॥ २५ ॥
हन्त सम्यक् मया शीलं यद्यस्ति क्वापि पालितम् । तद् ममास्तु भुजद्वन्द्वं लालयामि सुतं यथा ॥ २६ ॥
इति वात्सल्यवैधुर्यधैर्यगद्गद्या गिरा । वदन्त्यास्तत्क्षणं तस्याः सम्यक् शीलप्रभावतः ॥ २७ ॥
दग्धस्मरमहावृक्षप्ररोहयुगलोपमम् । पूर्वाधिकतरश्रीकं प्रादुरास भुजद्वयम् ॥ २८ ॥ युग्मम् ।

यावद् भुजद्वयसमृद्धिमुदा हृदि स्वं पुत्रं निधाय निविडं परिरभ्य तस्थौ ।
तावद् ददर्श विशदं दिशि देवभर्तुर्बिम्बं जगन्नयनहारि निशाकरस्य ॥ २९ ॥
व्यवहितवृकसिंहव्याघ्रसर्पादिसत्त्वं फलकुसुमसमृद्धं शान्तदावानलं च ।
अपि च सपदि सैव स्वैरझात्कारवारिस्थगितपरिसरासीद् दुस्तरा शुष्कसिन्धुः ॥ ३० ॥

मुदितमुदितमीक्ष्य व्योम्नि चन्द्रं चकोरैरसमरसमयत्वं भेजिरे कैरवाणि ।
रुचिररुचिरवेण क्षिप्यमाणेऽन्धकारे रजनिरजनि रम्या यौवने कन्यकेव ॥ ३१ ॥
इति वनदेवतातिशयनिर्मितरम्यतया मनसि दशार्णराजदुहिता पिहितार्त्तिरया ।
विरचितमज्जना सरिति तीरतरुस्थगिते स्फटिकशिलातले समयमात्रमशेत सुखम् ॥ ३२ ॥
निर्निद्रा पररात्रमात्रसमये पुत्रस्य चिन्तावशात् यावत् पश्यति पद्मपत्रनयना सोत्साहमभ्युत्थिता ।
तावत् तत्र ददर्श विस्मयरसादुत्कीर्णपञ्चालिकावक्षोजश्रुतदुग्धपानतरलं पुत्रं निजं सा सती ॥ ३३ ॥
तां मूर्त्तिमुत्तमतमां वनदेवताया मूर्ध्ना प्रणम्य परमां मुदमुद्वहन्ती ।
आत्मानमित्थमवगम्य भृशं सनाथं न स्वर्णबाहुभगिनी विततान चिन्ताम् ॥ ३४ ॥
यद् ब्रह्मणोऽपि विषमाजनि बाहुमुष्टिर्वृष्टिं विना यदजनिष्ट नदी च पूर्णा ।
धात्रीपदं च विततान यदश्मपुत्री नैतत् त्रयं भुवि परत्र कलावतीतः ॥ ३५ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे षोडशः सर्गः ॥ १६ ॥



## पञ्चमे स्कन्धे सप्तदशः सर्गः ।

इतश्च सारथिः शङ्खं स्वं तत्कृत्यमबोधयत् । तदनन्तरमागत्य मातङ्ग्यौ च निजां कृतिम् ॥ १ ॥
वातायनतलस्थस्य तस्य ते दूरतः स्थिते । दर्शयामासतुर्देव्याश्छिन्नं भुजलताद्वयम् ॥ २ ॥
पश्यन् कृत्तलताप्रायं प्रियायास्तद् भुजद्वयम् । अनिर्णीतरहस्योऽपि चकम्पे कृपया नृपः ॥ ३ ॥
सत्यं सन्तोऽनुतप्यन्ते युक्तं कृत्वापि निग्रहम् । अप्यकृत्यशतं कृत्वा पापिनां न पुनस्त्रपा ॥ ४ ॥
अथ स प्रत्यभिज्ञातुं ताभ्यां केयूरयोर्द्वयोः । ददर्श स्वयमादाय दयार्द्रहृदयोऽपि सन् ॥ ५ ॥
अपश्यद् व्यक्तरूपाणि टङ्कोत्कीर्णानि पार्थिवः । स्वर्णबाहोः प्रियाभ्रातुस्तत्र नामाक्षराणि च ॥ ६ ॥
पपात च स निश्चेष्टो मूर्छां प्राप्य महीतले । शाखीव निम्नगोत्खातो वज्राहत इवाचलः ॥ ७ ॥
अवीजयन् जलार्द्रैस्तं तालवृन्तैस्तटस्थिताः । समाश्वसिहि देवेति व्याहरन्तो मुहुर्मुहुः ॥ ८ ॥
स संज्ञां प्राप्य भूपालः पश्यन् भूयोऽपि तां लिपिम् । पप्रच्छ दिनवृत्तान्तमन्तःपुरनियोगिनः ॥ ९ ॥
व्यजिज्ञपन् ततस्तेऽपि यद् देव ! दिवसोदये । देव्याः पितृगृहात् प्राप्तः कूर्मो नामाद्यकञ्चुकी ॥ १० ॥
धात्री च सप्तला नाम्ना सह दासीशतैस्त्रिभिः । सहस्रेणाश्ववाराणां पत्तिभिश्च समन्विता ॥ ११ ॥
ताभ्यां बन्धुजनादिष्टं वस्तु वाचिकमेव च । सप्रमोदं प्रतीच्छन्त्या देव्या दिनमिदं गतम् ॥ १२ ॥

अयं च वनचर्यायां देवस्य दिवसोऽगमत् । प्रातर्देव्या समं देवस्तद् माङ्गल्यमवाप्स्यते ॥ १३ ॥
इति श्रुत्वा महर्षेण मावहित्थं विसृज्य तान् । आचकर्ष रहः कोशात् कृपाणं पाणिना निजम् ॥ १४ ॥
अयि भोः भव्रतामूल ! शौर्यद्रुमघनाघन ! । जयश्रीवरणाधारधारातीर्थ ! नमोऽस्तु ते ॥ १५ ॥
शृणु त्वमपि जानासि स्वर्णबाहुस्वसा सती । सुता दशार्णराजस्य प्रिया मम कलावती ॥ १६ ॥
इति व्यापारयन् कण्ठे कठोरं खड्गमात्मनः । भूयः करं श्लथीकुर्वन् स सनिर्वेदमुक्तवान् ॥ १७ ॥
अहो निभृतपापस्य मम स्वं हन्तुमिच्छतः । यत् सत्यं मरणोत्कण्ठा खड्गेनापि न पूर्यते ॥ १८ ॥
तिष्ठ तिष्ठ मरे खड्ग ! मा मात्मानं कलङ्कय । नहि प्रच्छन्नपापानां वधशुद्धिस्त्वयापि हि ॥ १९ ॥
तदेव विदितं कृत्वा पृथिव्यां पापमात्मनः । प्रभुमाराधयिष्यामि धूमध्वजमुपर्बुधम् ॥ २० ॥
कः कोऽत्र भो द्रुतं गत्वा प्रसिद्धं क्रियतामिदम् । यथा किल कलावत्या देव्याः कृत्वा वधं मुधा ॥ २१ ॥
द्राक् शङ्खहतकः पापी सोऽयं श्रयति पावकम् । तत् क्षम्यतां जनाः सर्वे विरुद्धं यद् मया कृतम् ॥ २२ ॥
इति तद्वदनाद् वाक्यं श्रुत्वा श्रवणदुस्सहम् । चुक्षुभे सकलो लोकः क्षयक्षुभितवार्धिवत् ॥ २३ ॥
तं साहसरसावेशात् प्रविशन्तं हुताशने । न बन्धुर्वा सखा वापि चक्षमे कोऽपि रक्षितुम् ॥ २४ ॥
स क्रमेणस्थलामुख्यो देव्याः परिजनोऽपि हि । विहाय जीवितश्रद्धां चितानामुन्मुखोऽभवत् ॥ २५ ॥
अहो निमेषमात्रेण किमिदं समुपस्थितम् ? । कोऽयमेकशिलापातः कथं राष्ट्रं भविष्यति ? ॥ २६ ॥

नूनं निरुपमं प्रेम परिणामे न शोभनम् । यतो विघटमानेन द्वयं तेन विनश्यति ॥ २७ ॥
प्रायो देव्याः कलावत्या वैदग्ध्यमधुरा गिरः । इदं राजापि जानाति तत्कोऽयमपरो विधिः ॥ २८ ॥
धिग् धिक् परिजनं मूर्खं धिग् धिक् सारथिमीदृशम् । न किं हि क्रियते भर्त्तुर्विरुद्धं बुद्धिवञ्चितम् ॥ २९ ॥
यद् वा न कस्यचिद् दोषो दैवस्यैकस्य दूषणम् । अभव्यं भव्यलोकेऽपि यस्य लज्जा न कुर्वतः ॥ ३० ॥
इत्थं भृशमनाथानां जनानां जल्पतां शुचा । वसुभूतिः समागत्य मन्त्री राजानमब्रवीत् ॥ ३१ ॥
देव ! प्रसीद बुध्यस्व नीतिदृष्ट्या विलोकय । कृत्यैकमपरिज्ञातमपरं मा पुनः कुरु ॥ ३२ ॥
नूनं सर्वस्वनाशेऽपि दुःखावेशेऽपि दारुणे । कथञ्चिद् नीतिकाराणां प्राणत्यागो न संमतः ॥ ३३ ॥
त्रिवर्गसाधनं राज्यं तद् मृतानां कुतः पुनः । यत्नाद् जीवं ततो रक्षेद् जीवद्भिः सर्वमाप्यते ॥ ३४ ॥
त्वयि स्वर्गं गते स्वामिन् ! कथं देवी निवर्त्तते ? । इदं तु सकलं राष्ट्रं मूलाद् निघ्नन्ति शत्रवः ॥ ३५ ॥
विमुञ्च मरणश्रद्धां धैर्यं भज शुचं त्यज । अद्याप्यापन्नसत्वाया देव्याः प्राप्तौ यतस्व च ॥ ३६ ॥
अन्तरं न किमप्यस्ति जीवन्ती सा भविष्यति । न हि प्राणहरं प्रायः सद्यस्तादृक् कदर्थनम् ॥ ३७ ॥
प्रियाप्राप्तौ कुरु प्रज्ञां मुधा किं मरणेन ते । सहसा जीवितत्यागः पशुधर्मो न पौरुषम् ॥ ३८ ॥
इति सचिववचो विचार्य राजा त्वरिततरं दयिताविलोकनाय ।. ॥ ३९ ॥
पुरजनबलवाहनैः समग्रैर्गिरिगहनानि विगाहितुं प्रतस्थे

रथनरकरिवाजिनां सहस्रैस्तिलतुषतुल्यतयापि वीक्ष्यमाणैः ।
कथमपि न कलावती प्रपन्ना दुरधिगमं खलु वस्तु कार्यकाले ॥ ४० ॥
गिरितरुसरितामपूर्वभावं वहति वने वनदेवताप्रभावात् ।
ममजनि हृदि रोपणादिकानामपि तदिदं न वनं किलेति मोहः ॥ ४१ ॥
क्षितिपतिदुहितुः श्रुतिं जगाम द्रुतमतुलस्तुमुलो बलव्रजानाम् ।
तदपि न हृदयं पुनश्चकम्पे ननु रतिरेव हि भाविभाग्यदूती ॥ ४२ ॥
सेनाग्रतः कलय शङ्ख ! कलावतीयं साक्षादिति त्वरितमेत्य ततः कुतोऽपि ।
आरुह्य दूरमुदयाचलचूलिकायां निर्दिष्टवानिव करप्रकरैः पतङ्गः ॥ ४३ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे सप्तदशः सर्गः ॥ १७ ॥

## पञ्चमे स्कन्धे अष्टादशः सर्गः ।

अथ तत्र जनैः प्रातः पुत्रहंसोपशोभिता । दृष्टा चलत्कराम्भोजा नलिनीव कलावती ॥ १ ॥
जितं जितमहो दिष्ट्या देवी देवीयमग्रतः । अक्षता पुत्रयुक्ता च निषण्णास्ति नदीतटे ॥ २ ॥

किञ्च पाषाणपाञ्चाली पुत्रं धात्रीव पाति यत् । अहो ! आश्चर्यमाश्चर्यं दृश्यतां दृश्यतामिदम् ॥ ३ ॥
यत्पार्श्वे चास्ति सापत्या वानस्पत्यस्य तस्य च । सत्प्रतिज्ञेव हि च्छाया परिवृत्ता न वर्त्तते ॥ ४ ॥
अपूर्वमिव सञ्जातं तदा देव्याः समाश्रयात् । इदमुत्फुल्लवल्लीकं फलस्फीतद्रुमं वनम् ॥ ५ ॥
अस्याः संपर्कतः संप्रत्येषापि नगनिम्नगा । धिनोति धेनुवल्लोकं बत बष्कयणी पुरा ॥ ६ ॥
साश्चर्यमिव जल्पन्तः क्षोणीमिलितमौलयः । प्रणेमुर्निखिला लोकाः सतीतीर्थं यदद्भुतम् ॥ ७ ॥
अच्छत्रचमराटोपं खिन्नं चरणचारिणम् । दृष्ट्वा च पतिमायान्तमभ्युत्तस्थौ कलावती ॥ ८ ॥
आर्यपुत्र ! स्वपुत्रेण स त्वं विजयवान् भव । यदङ्घ्रिभक्तिरक्लिष्टारिष्टतातिर्ममान्वहम् ॥ ९ ॥
इति लज्जानमद् मौलेः साश्रुनेत्रस्य भूभुजः । तां प्रियाणि प्रजल्पन्तीमुवाच सचिवाग्रणीः ॥ १० ॥
मातः कलावति ! युक्तं यदात्थ तत् तथैव तत् । जितं देवेन यस्यासि यशः श्रीस्त्वं शरीरिणी ॥ ११ ॥
साधु साधु सती त्वं चेदित्थं किमपि साध्यते । चतुर्भुजतया जाता यथासि त्वं कलावति ! ॥ १२ ॥
क्वचिद् जलकणोद्गारी खल्वर्कश्चन्द्रचुम्बितः । त्वत्पुत्रमुखचन्द्रेण ग्रावस्त्री दुग्धवर्षिणी ॥ १३ ॥
गृह्णन्ति फलपुष्पाणि स्नान्ति वारिणि निर्मले । इह त्वदाश्रमे रम्ये जनाः कल्याणकाङ्क्षिणः ॥ १४ ॥
किञ्चित् तदाभविष्यत् चेत् तत् क्व राजा क्व वा जनः । न विभ्रस्त्वं महाराजो जनो वा भाग्यवानयम् ॥ १५ ॥
नास्त्येव हृदि ते पत्युर्व्यलीकं तु क्षमस्व च । दशार्णराजपुत्रि ! त्वं देवतासि न मानुषी ॥ १६ ॥

आकल्पमपि तीर्थत्वं नीतं वनमिदं त्वया । तत् प्रसीद पुनर्मातः ! सनाथं नगरं कुरु ॥ १७ ॥
इत्यमात्यगिरामन्ते प्रणम्य वनदेवताम् । आपृच्छ्य तद् वनं भेजे नरयानं कलावती ॥ १८ ॥
नमुत्क्षिप्तध्वजश्रेणिर्विक्षिप्तकुसुमोत्करः । तस्याः पुरप्रवेशोऽभूत् पाणिग्रहणतोऽधिकः ॥ १९ ॥
तदाजनि नयोरैक्यं नीरक्षीरात्मकं तथा । न हंसचञ्चवोऽप्यापुर्यथा तद्भेदवेदिताम् ॥ २० ॥
अन्यदा तत्र संप्राप्तः सुरासुरनरस्तुतः । छिन्नघातिचतुःकर्मा विश्वदर्शी महामुनिः ॥ २१ ॥
सुदर्शनाभिधानं तं भगवन्तं विवन्दिषुः । ययौ भक्तिपरो राजा सान्तःपुरपरिच्छदः ॥ २२ ॥
तत्परीष्टिपरामृष्टदुष्टपातकसञ्चयः । स हृष्टः पृष्टवान् काले कलत्रक्लेशकारणम् ॥ २३ ॥
अथोवाच मुनिर्ज्ञानी राजन् ! जानीहि कारणम् । अस्ति वासवदिग्भागे कल्याणकटकं पुरम् ॥ २४ ॥
तत्र कल्लोलभूपालमहामात्यस्य सात्यकेः । पुत्री विद्युन्मुखी नाम्ना शुकक्रीडारताभवत् ॥ २५ ॥
धत्ते नर्मकरं नाम्ना कीरं करतलेन सा । न विमुञ्चति कुत्रापि विना देवार्चनक्षणम् ॥ २६ ॥
सोऽपि तत्पालनप्रीतः पतत्री तत्परोऽभवत् । परस्परं तयोरासन् रोषतोषादिकेलयः ॥ २७ ॥
आदीश्वरं नमस्कर्तुं तया यान्त्या कचिद् दिने । पक्षी प्रार्थयमाणः सन् स नीतः सममात्मना ॥ २८ ॥
तत्र देवाधिदेवस्य पश्यन् मूर्त्तिं महेशितुः । नित्यं नित्यं नमस्कर्तुं निश्चयं नीतवान् खगः ॥ २९ ॥
प्रायेण खलु कीराणां मर्त्यभाषाभिभाषिणाम् । न मांसभक्षिणीजातिर्भवेद् भावोऽपि भद्रकः ॥ ३० ॥

कृत्वा विद्युन्मुखीवृत्त्या यथादृष्टं स पूजनम् । शुकः सुकृतलोभेन धन्यम्मन्यो मनस्यभूत् ॥ ३१ ॥
परेद्यवि पुनस्तेन पूर्ववत् प्रार्थितापि सा । नतु तं तत्र जग्राह तत्पारिप्लवताभयात् ॥ ३२ ॥
एकाकिन्यपि सा गत्वा नत्वा देवं समाययौ । भोजनावसरे सोऽपि समाकृष्टश्च पञ्जरात् ॥ ३३ ॥
स देवभुवने गच्छन् मुक्त्वा भोजनभाजनम् । समाप्य नियमं भूयः समयेन समाययौ ॥ ३४ ॥
विद्युन्मती तु भव्यापि तं प्राप्य पुनुरागतम् । स्त्रीस्वभावभवं क्षोभं सपदि प्रत्यपद्यत ॥ ३५ ॥
आबालकालतः क्लेशैर्मया लालितपालितः । अहो भ्रमति मां मुक्त्वा सोऽयं संप्रति निर्भयः ॥ ३६ ॥
कदाचिद् यदि कुत्रापि परहस्तं प्रपद्यते । तद् मे हृदयदाहस्य न भिषक् नैव भेषजम् ॥ ३७ ॥
अस्त्येव श्येनमार्जारगृध्रादिभ्यः पराभवः । इत्थं च सञ्चरन् स्वैरं भवेद् वनचरोऽपि वा ॥ ३८ ॥
तद्वरं सर्वथा नाशादर्द्धनाशः स्वयं कृतः । करिष्यामि तथा भूयो यथा याति न कुत्रचित् ॥ ३९ ॥
इति सञ्चिन्त्य सा धृत्वा तस्य दीनस्य पक्षिणः । मा मेति जल्पतः पक्षौ मुख्यौ चिच्छेद खेदतः ॥ ४० ॥
स छिन्नपक्षतिः पक्षी दुःखार्त्तः साश्रुलोचनः । मन्युगद्गदमित्युच्चैरूचे विद्युन्मतीं प्रति ॥ ४१ ॥
न मया समयो भिन्नस्त्वन्मध्ये भोक्तुमास्थितः । कथं निरपराधस्य मम पक्षौ त्वया क्षतौ ? ॥ ४२ ॥
स्वयं पालितपूर्वस्य त्वत्परस्य प्रियस्य च । साधु स्वाधीनदीनस्य शौर्यं तव ममोपरि ॥ ४३ ॥
इत्थं निरनुरोधत्वं यत् त्वया मयि दर्शितम् । तत्पानमशनं भूयश्चेत् कुर्यात् तत् खगो नहि ॥ ४४ ॥

इत्युक्त्वा स दधौ मौनं कृतानशननिश्चयः । सस्मार केवलं चित्ते देवमादीश्वरं तु सः ॥ ४५ ॥
विद्युन्मती च तद्वाक्यैर्दिग्धैरिव हृदि क्षता । अति सानुशया कीरमनुनिन्ये मुहुर्मुहुः ॥ ४६ ॥
रुरोद पुरतस्तस्य निनिन्द स्वं निरुत्सवा । निनाय च तमुत्सङ्गे शशंस च तथा तथा ॥ ४७ ॥
यदा गाढग्रहग्रन्थिर्नाहारं स गृहीतवान् । तदा तस्य पुरश्चक्रे सा प्रतिज्ञां मनस्विनी ॥ ४८ ॥
यद् मम त्वं व्यलीकेन मृत्युं स्वीकृतवान् शुक ! । तद् मे त्वया समं मृत्युरेकैव गतिरावयोः ॥ ४९ ॥
इत्युक्त्वा पक्षिणं सापि त्यक्तपानाशनक्रिया । यथायोग्यक्रमं सर्वं कालकृत्यमचीकरत् ॥ ५० ॥
सा सर्वलक्षणोपेता मन्त्रिपुत्री मनोहरा । वरयोग्या वरारोहा कुमारी सुविचक्षणा ॥ ५१ ॥
तस्यास्तु मरणोत्साहं दधानाया मृगीदृशः । दुःखाकुलेषु पौरेषु विलपत्सु च बन्धुषु ॥ ५२ ॥
सहस्रैरप्युपायानां शतैरपि मनीषिणाम् । नाशक्यत मनो हर्तुं दुर्वारा भवितव्यता ॥ ५३ ॥ युग्मम् ॥
तृतीयदिवसादूर्ध्वं नीत्वा कालगतं शुकम् । सा प्रविश्य चितां वेगाद् वह्निसाद् विदधे वपुः ॥ ५४ ॥
सेयं दशार्णराजस्य पुत्री जाता कलावती । बभूव च शुकः सोऽपि त्वं शङ्खपृथिवीपतिः ॥ ५५ ॥
तत्पक्षच्छेदसंबद्धं फलं दुष्कृतपाकजम् । संप्राप्तमनया त्वत्तस्तथा भुजनिकृन्तनात् ॥ ५६ ॥
इति निगदितत्त्वे ज्ञानसिन्धौ मुनीन्द्रे लिखितमिव पुरस्तात् पूर्वजन्म स्मरन्तौ ।
क्षणमविकृतमूर्छां प्राप्य निद्रामिव द्राक् पुनरधिगतवन्तौ चेतनां दम्पती तौ ॥ ५७ ॥

ऋषिसदसि तदादि स्वीकृतप्राणिरक्षानियमनिरुपमं तौ चारु निर्वाह्य राज्यम्
चरमवयसि दत्त्वा मुख्यपुत्राय लक्ष्मीर्विमलतरतपोभिः प्रापतुः स्वर्गभोगान् ॥ ५८ ॥
इति स्फुटप्रकटितकर्मवैभवं कलावतीचरितमिदं मदाननात् ।
निशम्य सम्यगपि विचार्य चेतसा विदर्भजे ! भज निजदुःखलाघवम् ॥ ५९ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे अष्टादशः सर्गः ॥ १८ ॥

## पञ्चमे स्कन्धे एकोनविंशतितमः सर्गः ।

अनन्तरमनन्ताख्यं मुनिं प्रति मनस्विनी । उवाच वञ्चितक्लेशा दमयन्ती दमान्विता ॥ १ ॥
भगवन् ! भवतो वाक्यैर्दृढदृष्टान्तशालिभिः । दुःखोत्क्षिप्तमपि क्षिप्रं सावष्टम्भं कृतं मनः ॥ २ ॥
तत् प्रयच्छ ममादेशं दिशं दर्शय कामपि । किं करोमि ? क्व गच्छामि ? क्व तिष्ठामि ? स्मरामि किम् ? ॥ ३ ॥
ततोऽवोचद् मुनिर्भैमीं वत्से ! पृच्छसि साधु माम् । शृणु तावदिहैव त्वं तिष्ठ कल्याणि ! संप्रति ॥ ४ ॥
अद्यापि तव पश्यामि चिराद् बन्धुसमागमम् । वर्षा च शिरसि प्राप्ता भावी मार्गोऽपि दुर्गमः ॥ ५ ॥
त्वमिह प्रतिमां शान्तेर्विधेहि सिकतामयीम् । तदाराधनयुक्तिं ते कथयामि शुभे ! यथा ॥ ६ ॥

ततस्तया कृतां मूर्त्तिं मत्रन्यामद्धीकृताम् । समर्पयन् मुनिर्वाग्मी स जगाद महासतीम् ॥ ७ ॥
त्वमिमां प्रतिमां शान्तेराचाम्लव्रततत्परा । तावदाराधयागत्य न यावत् कोऽपि याचते ॥ ८ ॥

शान्तिप्रभावादिह शान्तसत्वे गिरौ वसन्त्यास्तव राजपुत्रि ! ।
न वाङ्मनःकायविकारकारी संपत्स्यते विघ्नकणोऽपि कश्चित् ॥ ९ ॥
तस्येदृशीं चेतसि बद्धमूलां विधाय शिक्षामपनीतदुःखाम् ।
उवाच देवी प्रणिपत्य हृष्टा दिष्ट्या कृतार्था भगवन् ! कृतास्मि ॥ १० ॥
अयं स च त्वं च मुनीन्द्र ! सर्वे क्षमाभृतां मुख्यतमाख्ययोऽपि ।
त्वदाज्ञया तद्विरहे तदत्र स्थास्यामि शान्तिं प्रभुमर्चयन्ती ॥ ११ ॥
इत्युक्तवन्तीं मुनयस्ततस्तां आपृच्छ्य शीघ्रं गगनेन जग्मुः ।
सा तत्र तस्थौ गिरिकन्दरायामुदारशीलाभिहितव्रता च ॥ १२ ॥

इतिश्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे एकोनविंशतितमः सर्गः ॥ १९ ॥

## पञ्चमे स्कन्धे विंशतितमः सर्गः ।

अथ तत्र समारेभे शान्त्याराधनलक्षणम् । नलस्य विरहे देव्या दमयन्त्या महत् तपः ॥ १ ॥
त्रिसन्ध्यं कृतनिर्माल्या वैयावृत्त्यपरायणा । निराशा तु मुनीशस्य सा तद् बिम्बमसेवत ॥ २ ॥
पुष्पगन्धाम्बुनैवेद्यधूपदीपफलाक्षतैः । विदधे विविधा पूजा वनचर्यानुयायिनी ॥ ३ ॥
आचाम्लव्रतयोगेन दुर्बलाङ्गलतापि सा । पुण्योपचयवीर्येण न विवेद परिश्रमम् ॥ ४ ॥
क्रमेण तपसः शक्त्या प्रीताभिः प्रतिवासरम् । विदधे वनदेवीभिः सान्निध्यं दमनस्वसुः ॥ ५ ॥
इत्थं तपः तपस्यन्त्यास्तत्र भीमभुवस्तदा । ययुः पञ्चशतान्यह्नामेकवासरलीलया ॥ ६ ॥
न विद्मः सा कथं तस्थौ तस्मिन्नेकाकिनी वने ? । अचिन्त्यमथवा सर्वं चरित्रं हि महात्मनाम् ॥ ७ ॥
अथ तारापथस्कन्धाद् निपतन्तं पतङ्गवत् । देवी सशिष्यमैक्षिष्ट विवर्णवदनं मुनिम् ॥ ८ ॥
स तया विहितातिथ्यस्तथ्यवादी विदग्धया । कल्याणि ! का कथं चात्र त्वमेकैवेति ? पृष्टवान् ॥ ९ ॥
तथा पतिपरिभ्रष्टां शान्तिभक्तां गुरोर्गिरा । सापि स्वं तत्पुरो भैमी नलपत्नीमचीकथत् ॥ १० ॥
अदर्शयच्च तां मूर्त्तिं तस्मै विस्मितचेतसे । अपृच्छच्च सती तस्य मुखवैवर्ण्यकारणम् ॥ ११ ॥
सोऽप्यभापत वैदर्भी वक्ष्ये वैवर्ण्यकारणम् । इदं पुनरभूद् भव्यं यद् दृष्टासि महासति ! ॥ १२ ॥

मुनेर्वचनाद् दमयन्त्या कृता शान्तिप्रभोराराधना ॥

निङ्गिना त्वदवस्थेयमनागतमियं च मे । भविष्यति च ते भव्ये ! भूयोऽपि नलसङ्गमः ॥ १३ ॥
शृणु नैतद् यथा वेद्मि तदत्र कथयामि ते । चारणश्रमणस्तावदहं कामचरः सदा ॥ १४ ॥
पुराहमेकदा यत्तौ नगरे रथनूपुरे । तत्र विद्याधराधीशो रौहिणेयो बृहद्रथः ॥ १५ ॥
वैरोट्यागोत्रमुख्येन खेचरेन्द्रेण खङ्गिना । तस्याजनिष्ट केशिन्याः कन्यायाः कारणे रणः ॥ १६ ॥
तस्मिन् महारणे घोरे खङ्गी विद्यामदोद्धतः । बृहद्रथबलं चक्रे सर्पास्त्रैरतिविह्वलम् ॥ १७ ॥
रोहन्ति रोहिणेयानां प्रहाराः खलु विद्यया । अनभ्यस्तचरः प्रायस्तेषां तु विषनिग्रहः ॥ १८ ॥
अथ चक्रेश्वरेयाणां खेचराणां प्रभोर्बले । पुत्रं महाबलं नाम्ना गरुत्मद्वरगर्वितम् ॥ १९ ॥
आनीय केशिनीं दत्त्वा कृत्वा जामातरं निजम् । खङ्गिना प्रतिमल्लत्वे सेनान्यं विदधे बुधः ॥ २० ॥ युग्मम् ॥
दृष्टमात्रनिपन्नानि स्ववस्त्राभरणानि सः । तार्क्ष्यदत्तानि बिभ्राणः सर्पास्त्राणि वृथाकरोत् ॥ २१ ॥
महाबलपरित्राणाद् रणे संहृत्य खङ्गिनम् । जग्राह सकलं राज्यं जितकासी बृहद्रथः ॥ २२ ॥
खङ्गिनश्च सुतः पार्श्वो राज्यभ्रष्टः परिभ्रमन् । महाबलवधस्यार्थे विद्योपास्तिं विनिर्ममे ॥ २३ ॥
तस्याराधनराद्धान्तविदग्धस्य महौजसः । एकपुङ्खातिनं देवी नागपाशं ददौ मुदा ॥ २४ ॥
तं च कर्कोटकं नाम्ना पाशं छलबलाधिकम् । विश्रब्धनविहारस्थं स रुरोध महाबलम् ॥ २५ ॥
तदा हि तार्क्ष्यदत्तं तं शृङ्गारं केशिनीकरे । न्यासीकृत्य भ्रमन्नासीत् स्वच्छन्दं वनसीम्नि सः ॥ २६ ॥

तयोस्तत्राभवद् युद्धं मत्सरारुणचक्षुषोः । बबन्ध नागपाशेन पाशमन्त्रमहाबलम् ॥ २७ ॥
जवेनैव ययौ नंष्ट्वा स तद्भटभयेन च । विवरान्वेषिणः सर्पाः नश्यन्ति तत्कथं नहि ॥ २८ ॥
यावद्बिल्वसमुद्गस्थं भृङ्गारं गारुडं निजम् । परिधातुं जवाद् याति प्रियापार्श्वे महाबलः ॥ २९ ॥
तावद् दिवा प्रसुप्तायाः केशिन्या उपधानतः । छलाद् बिल्वसमुद्गं तत् हृत्वा कर्कोटको ययौ ॥ ३० ॥ युग्मम् ॥
ततः कर्कोटकावेशात् सर्वगात्रनियन्त्रितः । आसीत् सपदि निष्पन्दः सकलोऽपि महाबलः ॥ ३१ ॥
तं चित्रलिखितप्रायं निश्चेष्टं काष्ठसन्निभम् । दीर्घं रुरोद पश्यन्ती केशिनी शोकविह्वला ॥ ३२ ॥
अपश्यन्ती च सर्वत्र यत्नाद् बिल्वसमुद्गकम् । न तु लेभे वराकी सा ताडयन्ती शिरः शुचा ॥ ३३ ॥
सर्पापवर्त्तगर्त्तस्थे जामातरि निमज्जति । जानन्ननाथमात्मानं विललाप बृहद्रथः ॥ ३४ ॥
निनिन्द केशिनीं पुत्रीं भूयो भूयः प्रमादिनीम् । स्वकीयानामभाग्यानां व्याचख्यौ दृढतां च सः ॥ ३५ ॥
निशम्य पुत्रदुःखं तत् बलिरप्याकुलः शुचा । तत्रागत्य रुदन् दीर्घं दैवं भृशमर्जयत् ॥ ३६ ॥
त्यक्तपानाशनारम्भमज्ञातरजनीदिनम् । नरेश्वरकुलद्वन्द्वं दुःखाग्नौ निममज्ज तत् ॥ ३७ ॥
तस्मिन् वैरिकृते डिम्बे कस्यचिद् विदुषोऽपि हि । निरुपायतया नासीदिति कर्त्तव्यनिश्चयः ॥ ३८ ॥
अथ तत्रागतं दैवाद् दृष्टिवादविदं मुनिम् । महाबलहितस्यार्थे वृत्तं पप्रच्छतुर्नृपौ ॥ ३९ ॥
स बभाषे ऋषिः श्रीमानयं वीरो महाबलः । भवेदिति हि नोल्लाघः भृङ्गारं गारुडं विना ॥ ४० ॥

दमयन्त्यग्रे चारण-श्रमणेण कथितं निजमुख-वैवर्ण्य-कारणम् ॥

तस्य चाधिगमो भूयः श्रूयतां जायते यथा । विहाय यदि वैताढ्यं याम्यायां याति केशिनी ॥ ४१ ॥
तत्र खेचरलोकस्य यातायातविवर्जिता । सुता च यदि भीमस्य दासीत्वेनोपतिष्ठति ॥ ४२ ॥
सा हि स्वयम्वरे वीरं नलं वृत्वा पतिव्रता । निषधायां समं पत्या सुचिरं विहरिष्यति ॥ ४३ ॥
द्यूतापहृतराज्येन तेन त्यक्ता महावने । गमिष्यति च कष्टेन कुण्डिनं पितृमन्दिरम् ॥ ४४ ॥
तत्र तस्या यदा भूयो भविता नलसङ्गमः । भृङ्गारं गारुडं त च लप्स्यते केशिनी तदा ॥ ४५ ॥
कुर्याच्च केशिनी तत्र यावद् दास्यं दमस्वसुः । तावद् महाबलस्यापि दुःखमल्पं भविष्यति ॥ ४६ ॥
वहन्त्यो हि व्रतं कष्टं पत्युरर्थे पतिव्रताः । योजयन्ति सुखैः कान्तं समाकृष्टैर्बलादिव ॥ ४७ ॥
इति श्रुत्वा हितं पत्युर्बन्धूनापृच्छ्य केशिनी । क्रीडाकिन्नरयुग्मेन सहिता दक्षिणां ययौ ॥ ४८ ॥
सा तद्गीतप्रसन्नेन राज्ञा वनविहारिणा । भीमेनोक्ता ययाचे च दासीत्वं दमनस्वसुः ॥ ४९ ॥
तामनुव्रज्य संप्राप्तैर्भूयोऽपि रथनूपुरे । इति विद्याधरैस्तस्या वार्त्ता च विदिताऽभवत् ॥ ५० ॥
तदित्थं पूर्वसम्बन्धं विचार्य वचनेन मे । वैदर्भि ! विदुषी हि त्वं प्रसन्नं हृदयं कुरु ॥ ५१ ॥
यदि सत्याः सतां वाचः सतीनां सत्वमस्ति चेत् । अमोघाः खेचरेन्द्राणामाशाः सम्यग् दशा यदि ॥ ५२ ॥
यदि ते लक्षणान्यङ्गे यदि सोऽपि कृती नृपः । तद् मिलिष्यति ते भर्त्ता यातायाः कुण्डिने ध्रुवम् ॥ ५३ ॥ युग्मम् ॥
तद् गच्छ कुण्डिनं सौम्ये ! समाप्य नियमं निजम् । समर्पय च मे शान्तां श्रीशान्तेः प्रतिमामिमाम् ॥ ५४ ॥

सा तेनोत्तरचंपायां वाणिज्यार्थं गतेन हि । इभ्यपुत्री महास्नेहादूढा यत्नशतैरभूत् ॥ ७ ॥
तद्रागादार्हतं धर्मं तथा सोऽप्यन्ववर्त्तत । प्रवर्त्तयति हि स्नेहो मनःप्रियमनीषिते ॥ ८ ॥
वैधर्मिकस्त्वमित्युच्चैरनिन्द्यत स बन्धुभिः । अमुच्यत सपत्नीकः पितृभ्यां च पृथग् गृहे ॥ ९ ॥
अश्लीलवचनैः श्वश्रूः सुभद्रां चाभिभाषते । अन्वहं दुर्विनीता च तस्याश्छिद्राणि पश्यति ॥ १० ॥
असतीयमनार्येयमकुलीनेयमित्यपि । नित्यं जुगुप्समानां तां सुभद्रा चानुरुध्यते ॥ ११ ॥
इह स्थितमिवायातमिहोक्तमिह वीक्षितम् । इदं हृतमिदं दत्तमिदं भग्नमिदं कृतम् ॥ १२ ॥
इति तद्वृत्तसंबद्धैर्वृथा कर्णविषैः सुतम् । आदाय च रहः श्वश्रूर्विभिनत्ति दिवानिशम् ॥ १३ ॥ युग्मम् ॥
अन्यदा क्वापि मध्याह्ने तद्गृहद्वारसीमनि । भ्रमन् भिक्षार्थमायासीद् वनवासी महामुनिः ॥ १४ ॥
कारयन्ती च सा तस्य पाणिपात्रस्य पारणम् । इक्षाञ्चक्रे तृणं नेत्रे मुनेर्निःप्रतिकर्मणः ॥ १५ ॥
तत्पीडाकेकरं तस्य भक्तियत्नवती च सा । लिहन्ती जिह्वया नेत्रमपनीतवती तृणम् ॥ १६ ॥
तं च सङ्क्रान्तकं तस्याः पत्युः श्वश्रूरदर्शयत् । अन्यथा हि सतां चित्तमन्यथा कुधियां भ्रमः ॥ १७ ॥
दोषं स्पृष्टकमात्रं तं मत्वा दीर्घायतिं हृदि । ततस्तां सोऽप्यगीतार्थः कटुवाक्यैरभाषत ॥ १८ ॥
दुःशीले ! न ममासि त्वं इति तस्मिन् प्रजल्पति । अन्येऽप्याचुक्रुशुः क्रोधाद् माभूत् कस्यापि लाघवम् ॥ १९ ॥
ततः कुलकलङ्कं च निन्दां प्रवचनस्य च । अवेक्ष्य हृदये खिन्ना सुभद्रा वाक्यमब्रवीत् ॥ २० ॥

धिग् धिग् वो बौद्धगन्धान्धान् युक्तायुक्तमपश्यतः । अर्हत्समयविद्विष्टान् सुधात्यागान् विपाकुलान् ॥ २१ ॥
यथा हि महतां वृत्तं तथा न खलु लौकिकाः । बहिर्मुखतया ते हि पश्यन्त्यखिलमात्मवत् ॥ २२ ॥
का सङ्कल्पमयी चर्चा तीर्थभूतेषु साधुषु । इदं वृत्तमनार्याणां यत् तत्रापि विचारणा ॥ २३ ॥
तीर्थोदकमिव स्पृष्टं साधूनां शुद्धये वपुः । असतामपि हि व्यक्तं तत् कथं न पुनः सताम् ? ॥ २४ ॥
नन्वकारणबन्धूनां परिचर्या तपस्विनाम् । भवस्नेहकृतामातृपितृशुश्रूषणाधिका ॥ २५ ॥
क्वचिद् गुणोऽपि दोषाय दोषोऽपि गुणहेतवे । इत्थमागममार्गाणां वैषम्यं मूर्खदुर्गमम् ॥ २६ ॥
मनोवचनकायानां योगशुद्ध्या सुसाधुषु । न्यासीकृताद् मनोभव्यान् कः कलङ्कयितुं क्षमः ? ॥ २७ ॥
मया तावद् मुनिं स्पृष्ट्वा नेत्रपीडा निवारिता । यादृशी तादृशी वाहं भवेयं तेन कर्मणा ॥ २८ ॥
प्रातरात्मीयशीलस्य शुद्धिं तावद् ददाम्यहम् । पश्चाद् वः कामचारो मे हेयोपादेयताविधौ ॥ २९ ॥
इत्युक्त्वा मौनमास्थाय स्थितां प्रतिमया निशि । ऊचे शासनदेवी तां प्रत्यक्षीभूय दुःखिताम् ॥ ३० ॥
यदर्थं दुन्दुभिः प्रातर्वत्से ! रथ्यासु ताड्यते । तमर्थमुररीकृत्य कर्त्तासि त्वं प्रभावनाम् ॥ ३१ ॥
इत्युक्त्वान्तर्दधे सा च प्रादुरास च भास्करः । चतुर्णां गोपुराणां च कपाटा नान्तरं ददुः ॥ ३२ ॥
सहस्रैरप्युपायानां न तान् वज्रमयानिव । समुद्घाटयितुं केचिद् लक्षशोऽप्यभवन् क्षमाः ॥ ३३ ॥
तेन निःस्वानचक्रेण पुररोधेन सर्वतः । सबालवृद्धमप्यासीद् नगरं तत् समाकुलम् ॥ ३४ ॥

चित्तं चरति सामर्थ्यात् पिहितेष्वपि वस्तुषु । पयोदान्तरितेऽपीन्दौ नन्दन्ति कुमुदाकराः ॥ ६३ ॥
सामान्यक्षत्रियामात्रं विदधाना तु संस्तवम् । रुरोध रभसं तस्या भैमी विनयवृत्तिभिः ॥ ६४ ॥
तां मातुरपरां मूर्त्तिं दृष्ट्वाप्यजनि न श्लथम् । दुःखार्त्तमपि तच्चेतो लज्जारज्जुनियन्त्रितम् ॥ ६५ ॥
आसन्नासनदानेन सस्मितालोकनेन च । दर्शिताद्भुतवात्सल्यात् तां च मातृष्वसावदत् ॥ ६६ ॥
दिष्ट्या त्वमिह कल्याणि ! यद् दृष्टासि विलोचनैः । इयता सफलं मन्ये जीवितं किमतः परम् ॥ ६७ ॥
निमेषेणैव मानुष्यं केवलं तव सूच्यते । तिरस्करोपि पद्माक्षि ! प्रभया तु सुरानपि ॥ ६८ ॥
इत्थमद्भुतसद्भावा का त्वं ? कस्य परिग्रहः ? । इति नन्वनुयोक्तुं त्वामुत्कण्ठा नुदतीव माम् ॥ ६९ ॥
ननु त्वं तनयातुल्या तवेदं पुत्रि ! मन्दिरम् । प्राणैरपि प्रियं कर्तुं तव वाञ्छामि सुन्दरि ! ॥ ७० ॥
यदि नैव स्वतन्त्रासि यदि कार्योन्मुखासि वा । तथापि मम तोषाय किञ्चिदत्र स्थिरीभव ॥ ७१ ॥
यात्राभिमुखचित्तां त्वां वरयानेन सत्वरम् । अहमेव प्रहेष्यामि यथाभिमतसिद्धये ॥ ७२ ॥
एवमुक्तावदद् भैमी देवि ! धन्यासि सर्वथा । यदित्थं मयि निर्व्याजं ममत्वं तव वर्त्तते ॥ ७३ ॥
पतिर्मे निषधावासी क्षत्रियः सुभगो युवा । द्यूतापहृतसर्वस्वः स त्यक्त्वा मां क्वचिद् ययौ ॥ ७४ ॥
तत् संप्रति यियासन्ती कुण्डिनं पितृमन्दिरम् । अहमत्र तवादेशात् स्थितास्मि त्वद्यदृच्छया ॥ ७५ ॥
न मे भोजनसंपर्कं व्यापारं पुरुषेषु वा । कश्चिदर्हति निर्देष्टुं इति स्थातुं पणो मम ॥ ७६ ॥



कुण्डिन ग्रामं गच्छन्ती दमय- ॥१४२॥

ततस्तथेति प्रतिपन्नवत्या मातृष्वसुर्वेश्मनि सा वसन्ती ।
सुनन्दया तत्सुतयार्च्यमाणा निनाय निर्गूढतया दिनानि ॥ ७७ ॥
तत् तत् तस्या नृपकुलकलाकौशलं शीलयन्ती तत् सौभाग्यं तमुपशममप्यन्वहं शोभयन्ती ।
अत्याश्चर्यग्रहिलहृदया तत्र मातृष्वसुः सा पुत्री हस्तात् क्षणमपि न तां भीमपुत्रीं मुमोच ॥ ७८ ॥
प्रियप्रवृत्तिव्यतिपङ्गहेतवे श्रमार्त्तवैदेशिकदानदायिनी ।
निरन्तरं सा विरहव्रतस्थिता नवेन्दुमुद्वीक्ष्य जगाद कर्हिचित् ॥ ७९ ॥
अहो ! दशाया मम वैपरीत्याद् वर्णैरपि प्रापि विपर्ययः किम् ? ।
राकापि कारापदवीं बिभर्त्ति धवस्मृतिर्याति वधस्मृतित्वम् ॥ ८० ॥
तदिति कार्त्तिकतो नवमं गलद् बहलबाष्पतया दधतीव सा ।
सपदि मासममुमासमवैभवामितमुदीर्य दधे दृढतां पुनः ॥ ८१ ॥
एतत् किमप्यनवमं नवमङ्गलाङ्कं चक्रे तदत्र वटगच्छनभोमृगाङ्कः ।
तस्यार्यकर्णनलिनस्य नलायनस्य स्कन्धः प्रपञ्चचतुरोऽजनि पञ्चमोऽयम् ॥ ८२ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे एकविंशतितमः सर्गः ॥ २१ ॥

समाप्तोऽयं पञ्चमः स्कन्धः ।

---

तयोस्तत्राभवद् युद्धं मत्सरारुणचक्षुषोः। बबन्ध नागपाशेन पाशमन्त्रमहाबलम् ॥ २७ ॥
जवेनैव ययौ नंष्टा स तद्भटभयेन च। विवरान्वेषिणः सर्पाः नश्यन्ति तत्कथं नहि ॥ २८ ॥
यावद्बिल्वसमुद्गस्थं भृङ्गारं गारुडं निजम्। परिधातुं जवाद् याति प्रियापार्श्वे महाबलः ॥ २९ ॥
तावद् दिवा प्रसुप्तायाः केशिन्या उपधानतः। छलाद् बिल्वसमुद्गं तत् हृत्वा कर्कोटको ययौ ॥ ३० ॥ युग्मम् ॥
ततः कर्कोटकावेशात् सर्वगात्रनियन्त्रितः। आसीत् सपदि निष्पन्दः सकलोऽपि महाबलः ॥ ३१ ॥
तं चित्रलिखितप्रायं निश्चेष्टं काष्ठसन्निभम्। दीर्घं रुरोद पश्यन्ती केशिनी शोकविह्वला ॥ ३२ ॥
अपश्यन्ती च सर्वत्र यत्नाद् बिल्वसमुद्गकम्। न तु लेभे वराकी सा ताडयन्ती शिरः शुचा ॥ ३३ ॥
सर्पापवर्त्तगर्त्तस्थे जामातरि निमज्जति। जानन्ननाथमात्मानं विललाप बृहद्रथः ॥ ३४ ॥
निनिन्द केशिनीं पुत्रीं भूयो भूयः प्रमादिनीम्। स्वकीयानामभाग्यानां व्याचख्यौ दृढतां च सः ॥ ३५ ॥
निशम्य पुत्रदुःखं तत् बलिरप्याकुलः शुचा। तत्रागत्य रुदन् दीर्घं दैवं भृशमर्जयत् ॥ ३६ ॥
त्यक्तपानाशनारम्भमज्ञातरजनीदिनम्। नरेश्वरकुलद्वन्द्वं दुःखाब्धौ निममज्ज तत् ॥ ३७ ॥
तस्मिन् वैरिकृते डिम्बे कस्यचिद् विदुषोऽपि हि। निरुपायतया नासीदिति कर्त्तव्यनिश्चयः ॥ ३८ ॥
अथ तत्रागतं दैवाद् दृष्टिवादविदं मुनिम्। महाबलहितस्यार्थे वृत्तं पप्रच्छतुर्नृपौ ॥ ३९ ॥
स बभाषे ऋषिः श्रीमानयं वीरो महाबलः। भवेदिति हि नोल्लाघः भृङ्गारं गारुडं विना ॥ ४० ॥



दमयन्त्यग्रे चारण-श्रमणेण कथितं निजमुख-वैवर्ण्य-कारणम् ॥

तस्य चाभिगमो भूयः श्रूयतां जायते यथा । विहाय यदि वैताढ्यं याम्यायां याति केशिनी ॥ ४१ ॥
तत्र खेचरलोकस्य यातायातविवर्जिता । सुता च यदि भीमस्य दासीत्वेनोपतिष्ठति ॥ ४२ ॥
सा हि स्वयम्वरे वीरं नलं वृत्वा पतिव्रता । निषधायां समं पत्या सुचिरं विहरिष्यति ॥ ४३ ॥
द्यूतापहृतराज्येन तेन त्यक्ता महावने । गमिष्यति च कष्टेन कुण्डिनं पितृमन्दिरम् ॥ ४४ ॥
तत्र तस्या यदा भूयो भविता नलसङ्गमः । शृङ्गारं गारुडं त च लप्स्यते केशिनी तदा ॥ ४५ ॥
कुर्याच्च केशिनी तत्र यावद् दास्यं दमस्वसुः । तावद् महाबलस्यापि दुःखमल्पं भविष्यति ॥ ४६ ॥
महान्यो हि व्रतं कष्टं पत्युरर्थे पतिव्रताः । योजयन्ति सुखैः कान्तं समाकृष्टैर्बलादिव ॥ ४७ ॥
इति श्रुत्वा हितं पत्युर्बन्धूनापृच्छ्य केशिनी । क्रीडाकिन्नरयुग्मेन सहिता दक्षिणां ययौ ॥ ४८ ॥
सा तद्गीतप्रसन्नेन गत्वा वनविहारिणा । भीमेनोक्ता ययाचे च दासीत्वं दमनस्वसुः ॥ ४९ ॥
तामनुव्रज्य संप्राप्तैर्भूयोऽपि रथनूपुरे । इति विद्याधरैस्तस्या वार्त्ता च विदिताऽभवत् ॥ ५० ॥
तदित्थं पूर्वसम्बन्धं निवार्य वचनेन मे । वैदर्भि ! विदुषी हि त्वं प्रसन्नं हृदयं कुरु ॥ ५१ ॥
यदि सत्याः सतां वाचः सतीनां सत्यमस्ति चेत् । अमोघाः खेचरेन्द्राणामाशाः सम्यग् दशा यदि ॥ ५२ ॥
यदि ते लक्षणान्यत्र यदि सोऽपि कृती नृपः । तद् मिलिष्यति ते भर्त्ता यातायाः कुण्डिने ध्रुवम् ॥ ५३ ॥ युग्मम् ॥
तद् गच्छ कुण्डिनं सौम्ये ! समाप्य नियमं निजम् । समर्पय च मे शान्तां श्रीशान्तेः प्रतिमामिमाम् ॥ ५४ ॥

मम हि स्वगुरुं नन्तुं रत्नशैलं यियासतः। अत्राजनि गतिभ्रंशस्तीर्थोल्लङ्घनसंभवः ॥ ५५ ॥
त्वया ह्याराध्यमानस्य बिम्बस्यास्य महौजसः। प्रसादादि विना चिह्नं न मे संभावनाभवत् ॥ ५६ ॥
पतितस्तदहं व्योम्नः पक्षिवत् छिन्नपक्षतिः। न शक्नोम्यधुना गन्तुं प्रायश्चित्तं कृतं विना ॥ ५७ ॥
तदिदं मम कल्याणि! मुखवैवर्ण्यकारणम्। प्रसन्नमुखरागोऽस्मि भूयस्त्वद्दर्शनात् पुनः ॥ ५८ ॥
इयं यावद् यथा युक्त्या मूर्त्तिराराधिता त्वया। तावत् तथा मयाराध्या नास्ति मे हितमन्यथा ॥ ५९ ॥
अयं हि भगवान् शान्तिराश्लिष्टो मुक्तिरामया। तत् कदाचिददद्रीचो भवन्ति ननु रामया ॥ ६० ॥
अमुं विभाव्य निःसङ्गं विसरन्तः स्मरं ततः। प्रयतन्ते न विद्वांसो विभवाय भवाय च ॥ ६१ ॥
मुनिमित्युक्तवन्तं तं नत्वात्रोचद् विदर्भजा। गृहाण भगवद्बिम्बं कुरुष्व स्वमनीषितम् ॥ ६२ ॥
कृतमादिष्टमादिष्टं यत् सर्वं गुरुणा पुरा। सांप्रतं सांप्रतं गन्तुं केवलं कुण्डिनं मम ॥ ६३ ॥
संवदन्ति हि ते वाचस्तास्ता विद्याधराश्रयाः। अस्ति सा केशिनी नाम्ना सखी विद्याधरी मम ॥ ६४ ॥
पश्यामि तामहं नित्यं ज्येष्ठां हि भगिनीमिव। मत्पुत्रं पाति निर्दिष्टा साद्य तिष्ठति कुण्डिने ॥ ६५ ॥
शतशः सा मया पृष्टा सेवायाः कारणं पुरा। केवलं समये सर्वमाख्यास्यामीति भाषते ॥ ६६ ॥
कार्यकाले च सा दत्तान् वरान् राज्ञाथवा मया। अत्यर्थं प्रार्थ्यमाणापि न्यासीकृत्यैव तिष्ठति ॥ ६७ ॥
तदत्र कारणं मन्ये भगवंस्तव भाषितम्। अन्यथा भूस्पृशां सेवां कुर्याद् विधाधरी कथम् ॥ ६८ ॥



दमयन्त्यग्रे चारण-श्रमणेण कथितं निजमुख-वैवर्ण्य-कारणम्।

तदभिलषितमिद्धा केशिनी मा सुहृष्टा मम च भवतु भूयः सङ्गमस्तस्य राज्ञः ।
प्रतिपदमपि वाचः मन्तु मन्या मुनीनां परिणमतु समन्ताद् दिव्यसेवाफलं च ॥ ६९ ॥
इति वचननिरामे बिम्बमभ्यर्च्य भक्त्या गिरितरुसरिदाद्यं सर्वमेव प्रणम्य ।
मुनिममृतकराख्यं हृष्टमापृच्छ्य तं च स्वयमथ दमयन्ती कुण्डिनाय प्रतस्थे ॥ ७० ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे विंशः सर्गः ॥ २० ॥

## पञ्चमे स्कन्धे एकविंशः सर्गः ।

कदाचित् पथि सार्थेऽभूत् तस्याः क्वापि पुरो व्रजन् । घृतादिविक्रयाकाङ्क्षी ग्रामीणजरतीजनः ॥ १ ॥
तत्र कापि तया पृष्टा मार्गं कुण्डिनगामिनम् । किं नामा पिहितद्वारा पुरीयं दृश्यते पुरः ? ॥ २ ॥
इतश्च दूरमासन्नं नगरं किञ्चिदस्ति यत् । यत्र कुण्डिनलोकानां नित्यं बहु गतागतम् ॥ ३ ॥
साक्षाद् दक्षिणचम्पाख्या पुरीयं पुत्रि ! कथ्यते । यदत्र पिहितद्वारं तदाकर्णय कारणम् ॥ ४ ॥
इदमुत्तरदिग्द्वारमस्यास्तिष्ठति संवृतम् । त्रिषु द्वारेषु शेषेषु यातायातपरो जनः ॥ ५ ॥
अस्यां हि भिक्षुभक्तस्य सङ्घगुप्ताङ्गजन्मनः । धनदत्तस्य भार्यासीत् सुभद्रा परमार्हती ॥ ६ ॥

सा तेनोत्तरचंपायां वाणिज्यार्थं गतेन हि । इभ्यपुत्री महास्नेहादूढा यत्नशतैरभूत् ॥ ७ ॥
तद्रागादार्हतं धर्मं तथा सोऽप्यन्ववर्त्तत । प्रवर्त्तयति हि स्नेहो मनःप्रियमनीषिते ॥ ८ ॥
वैधर्मिकस्त्वमित्युच्चैरनिन्द्यत स बन्धुभिः । अमुच्यत सपत्नीकः पितृभ्यां च पृथग् गृहे ॥ ९ ॥
अश्लीलवचनैः श्वश्रूः सुभद्रां चाभिभाषते । अन्वहं दुर्विनीता च तस्याश्छिद्राणि पश्यति ॥ १० ॥
असतीयमनार्येयमकुलीनेयमित्यपि । नित्यं जुगुप्समानां तां सुभद्रा चानुरुध्यते ॥ ११ ॥
इह स्थितमिवायातमिहोक्तमिह वीक्षितम् । इदं हृतमिदं दत्तमिदं भग्नमिदं कृतम् ॥ १२ ॥
इति तद्वृत्तसंवर्द्धैर्वृथा कर्णविषैः सुतम् । आदाय च रहः श्वश्रूर्विभिनत्ति दिवानिशम् ॥ १३ ॥ युग्मम् ॥
अन्यदा क्वापि मध्याह्ने तद्गृहद्वारसीमनि । भ्रमन् भिक्षार्थमायासीद् वनवासी महामुनिः ॥ १४ ॥
कारयन्ती च सा तस्य पाणिपात्रस्य पारणम् । इक्षाञ्चक्रे तृणं नेत्रे मुनेर्निःप्रतिकर्मणः ॥ १५ ॥
तत्पीडाकेकरं तस्य भक्तियत्नवती च सा । लिहन्ती जिह्वया नेत्रमपनीतवती तृणम् ॥ १६ ॥
तं च सङ्क्रङ्कं तस्याः पत्युः श्वश्रूरदर्शयत् । अन्यथा हि सतां चित्तमन्यथा कुधियां भ्रमः ॥ १७ ॥
दोषं स्पृष्टकमात्रं तं मत्वा दीर्घायतिं हृदि । ततस्तां सोऽप्यगीतार्थः कटुवाक्यैरभाषत ॥ १८ ॥
दुःशीले ! न ममासि त्वं इति तस्मिन् प्रजल्पति । अन्येऽप्याचुक्रुशुः क्रोधाद् माभूत् कस्यापि लाघवम् ॥ १९ ॥
ततः कुलकलङ्कं च निन्दां प्रवचनस्य च । अवेक्ष्य हृदये खिन्ना सुभद्रा वाक्यमब्रवीत् ॥ २० ॥

धिग् धिग् नो बौद्धगन्धान्धान् युक्तायुक्तमपश्यतः । अर्हत्समयविद्विष्टान् सुधात्यागान् विपाकुलान् ॥ २१ ॥
यथा हि महतां वृत्तं तथा न खलु लौकिकाः । बहिर्मुखतया ते हि पश्यन्त्यखिलमात्मवत् ॥ २२ ॥
का मद्द्रुमयी चर्चा तीर्थभूतेषु साधुषु ? इदं वृत्तमनार्याणां यत् तत्रापि विचारणा ॥ २३ ॥
तीर्थोदकमिव स्पृष्टं साधूनां शुद्धये वपुः । असतामपि हि व्यक्तं तत् कथं न पुनः सताम् ? ॥ २४ ॥
नन्वकारणबन्धूनां परिचर्या तपस्विनाम् । भवस्नेहकृतामातृपितृशुश्रूषणाधिका ॥ २५ ॥
क्वचिद् गुणोऽपि दोषाय दोषोऽपि गुणहेतवे । इत्थमागममार्गाणां वैषम्यं मूर्खदुर्गमम् ॥ २६ ॥
मनोवचनकायानां योगशुद्ध्या सुसाधुषु । न्यासीकृताद् मनोभव्यान् कः कलङ्कयितुं क्षमः ? ॥ २७ ॥
मया तावद् मुनिं स्पृष्ट्वा नेत्रपीडा निवारिता । यादृशी तादृशी वाहं भवेयं तेन कर्मणा ॥ २८ ॥
प्रागात्मीयशीलस्य शुद्धिं तावद् ददाम्यहम् । पश्चाद् वः कामचारो मे हेयोपादेयताविधौ ॥ २९ ॥
इत्युक्त्वा मौनमास्थाय स्थितां प्रतिमया निशि । ऊचे शासनदेवी तां प्रत्यक्षीभूय दुःखिताम् ॥ ३० ॥
यदर्थं दुन्दुभिः प्रातर्वत्से ! रथ्यासु ताड्यते । तमर्थमुररीकृत्य कर्त्तासि त्वं प्रभावनाम् ॥ ३१ ॥
इत्युक्त्वान्तर्दधे सा च प्रादुरास च भास्करः । चतुर्णां गोपुराणां च कपाटा नान्तरं ददुः ॥ ३२ ॥
सहस्रैरप्युपायानां न तान् वज्रमयानिव । समुद्घाटयितुं केचिद् लक्षशोऽप्यभवन् क्षमाः ॥ ३३ ॥
तेन निःस्थाननक्रेण पुररोधेन सर्वतः । सबालवृद्धमप्यासीद् नगरं तत् समाकुलम् ॥ ३४ ॥

तृणकाष्टजलादीनां न प्रवेशः कुतोऽप्यभूत् । गोमहिष्यश्वमुख्याश्च निर्गमं नैव लेभिरे ॥ ३५ ॥
कस्यचिद् वर्द्धते सत्त्वं बन्दिमोक्षं करोति यः । इति राजाज्ञया विष्वक् ततो दध्वान दुन्दुभिः ॥ ३६ ॥
श्वश्रूमुख्येषु सर्वेषु सुभद्राथ हसत्स्वपि । तमर्थमुररीकृत्य चचाल सहिता जनैः ॥ ३७ ॥
यदि मे विमलं शीलं यदि मे शुचि शासनम् । कर्मजालमिवाभिद्यं पुरद्वारं विभिद्यताम् ॥ ३८ ॥
इत्युक्त्वा विदधे त्रीणि द्वाराणि विवृतानि सा । चतुर्थार्थे पुनर्वाक्यमिति स्माह महासती ॥ ३९ ॥
यदि बौद्धेषु कोऽप्यस्ति सती वा सात्त्विकोऽपि वा । स सत्त्वनिकषेऽमुष्मिन् करोतु स्वपरीक्षणम् ॥ ४० ॥
अथ राजादिभिः सर्वैः श्वश्रूमुख्यैश्च बन्धुभिः । सा स्तूयत यथायोग्यं पत्या च स्वीकृता मुदा ॥ ४१ ॥
अथ सत्याः सुभद्रायास्तदिदं मूर्त्तिमद् यशः । यदेतदुत्तरद्वारं चंपायाः पिहितं सदा ॥ ४२ ॥
अस्ति कुण्डिनलोकानामिहापि हि गतागतम् । विशेषात् पञ्चभिः क्रोशैरितः श्रीवर्द्धने पुरे ॥ ४३ ॥
भीमभूपालभार्यायाः कनिष्टा भगिनी यतः । तत्र चन्द्रावतंसस्य राज्ञश्चन्द्रमती प्रिया ॥ ४४ ॥
तदत्र मम यातायाः शीघ्रं च कुण्डिनं प्रति । सार्थः सञ्जायते कोऽपि तत्तीर्णोमार्गसागरः ॥ ४५ ॥
इति श्रुत्वा तदा देवी निदध्यौ हृदये मुदा । नूनं मातृष्वसा सा मे मातुः पार्श्वे कलाभवत् ॥ ४६ ॥
अहो मे भजतः क्षोभमितः प्रभृति हि क्रमौ । स्वस्थानसन्निधौ पन्था वितस्तिर्योजनायते ॥ ४७ ॥
कथं नु प्रियही नाहं बन्धून् द्रक्ष्यामि हीदृशी ? । इति मे कुण्डिनं यान्त्यास्त्रपया न स्फुटं मनः ॥ ४८ ॥

अथवा मन्दभाग्याहं वक्ष्यामि कियतीं ह्रियम् । शासनं प्राणनाथस्य कर्त्तव्यं सर्वथा मया ॥ ४९ ॥
इदं मातृष्वसुस्तावद् मदीयायाः पुर पुरः । न चात्राप्यमुकी साहमित्याचक्षितुमुत्सहे ॥ ५० ॥
अत्र विश्रम्य कस्यापि सामान्यस्य गृहे क्वचित् । सार्थं प्राप्य दिनैः कैश्चिद् यास्यामि पितृमन्दिरम् ॥ ५१ ॥
इत्थं विचिन्तयन्ती सा पुरद्वारललाटिकाम् । प्राप वापीं नवा पीनस्तनस्त्रीजनमण्डिताम् ॥ ५२ ॥
शुशुभे सा तदा वापी गवाक्षस्थितया तया । पूर्वाचलविजृम्भिण्या ज्योत्स्नयेव विभावरी ॥ ५३ ॥
मार्गश्रमश्लथाङ्गी सा यावद् विश्राम्यति क्षणम् । तावत् तच्चरणाङ्गुष्ठं गोधा जग्राह वेगतः ॥ ५४ ॥
व्याप्यमाना सत्सीत्कारं किञ्चिन् हा हेति सा जगौ । अधावन् जलहारिण्यः श्रुत्वा च करुणध्वनिम् ॥ ५५ ॥
तस्याः मातृष्वसुस्तासु जलक्रीडार्थमागताः । दास्यस्तद्रूपविस्मेरा गोधां व्यद्रावयन् द्रुतम् ॥ ५६ ॥
प्रक्षाल्य चरणौ तस्याः प्रमृज्य वसनैर्निजैः । चुचुम्बुस्ता रसावेशाद् निदधुश्चापि मूर्द्धसु ॥ ५७ ॥
एताभिस्तासु देव्यै च चन्द्रवत्यै निवेदितम् । यथा स्त्रीरत्नमप्येकं यद् न दृष्टं न च श्रुतम् ॥ ५८ ॥
विनयाधिक्रमभ्यर्च्य शीघ्रमानीयतामिह । अस्तु नेत्रोत्सवोऽस्माकमिति देवी समादिशत् ॥ ५९ ॥
प्रसीद कुरु नो वाक्यमागच्छ नृपमन्दिरम् । ननु चन्द्रमती देवी प्रीत्या त्वां द्रष्टुमिच्छति ॥ ६० ॥
इत्यमर्थ्यमाणाभिस्ताभिश्च परिवारिता । स्नात्वा शुद्धोदकैर्देवी ययौ मातृष्वसुर्गृहम् ॥ ६१ ॥
अजानत्यपि तां देवीं भागिनेयीं नृपप्रिया । बभूव सहसा हर्षादभ्युत्थातुं समुत्सुका ॥ ६२ ॥

चित्तं चरति सामर्थ्यात् पिहितेष्वपि वस्तुषु । पयोदान्तरितेऽपीन्दौ नन्दन्ति कुमुदाकराः ॥ ६३ ॥
सामान्यक्षत्रियामात्रं विदधाना तु संस्तवम् । रुरोध रभसं तस्या भैमी विनयवृत्तिभिः ॥ ६४ ॥
तां मातुरपरां मूर्त्तिं दृष्ट्वाप्यजनि न श्लथम् । दुःखार्त्तमपि तच्चेतो लज्जारज्जुनियन्त्रितम् ॥ ६५ ॥
आसन्नासनदानेन सस्मितालोकनेन च । दर्शिताद्भुतवात्सल्यात् तां च मातृष्वसावदत् ॥ ६६ ॥
दिष्ट्या त्वमिह कल्याणि ! यद् दृष्टासि विलोचनैः । इयता सफलं मन्ये जीवितं किमतः परम् ॥ ६७ ॥
निमेषेणैव मानुष्यं केवलं तव सूच्यते । तिरस्करोपि पद्माक्षि ! प्रभया तु सुरानपि ॥ ६८ ॥
इत्थमद्भुतसद्भावा का त्वं ? कस्य परिग्रहः ? । इति नन्वनुयोक्तुं त्वामुत्कण्ठा नुदतीव माम् ॥ ६९ ॥
ननु त्वं तनयातुल्या तवेदं पुत्रि ! मन्दिरम् । प्राणैरपि प्रियं कर्त्तुं तव वाञ्छामि सुन्दरि ! ॥ ७० ॥
यदि नैव स्वतन्त्रासि यदि कार्योन्मुखासि वा । तथापि मम तोपाय किञ्चिदत्र स्थिरीभव ॥ ७१ ॥
यात्राभिमुखचित्तां त्वां वरयानेन सत्वरम् । अहमेव प्रहेष्यामि यथाभिमतसिद्धये ॥ ७२ ॥
एवमुक्तावदद् भैमी देवि ! धन्यासि सर्वथा । यदित्थं मयि निर्व्याजं ममत्वं तव वर्त्तते ॥ ७३ ॥
पतिर्मे निषधावासी क्षत्रियः सुभगो युवा । द्यूतापहृतसर्वस्वः स त्यक्त्वा मां क्वचिद् ययौ ॥ ७४ ॥
तत् संप्रति यियासन्ती कुण्डिनं पितृमन्दिरम् । अहमत्र तवादेशात् स्थितास्मि त्वद्यदृच्छया ॥ ७५ ॥
न मे भोजनसंपर्कं व्यापारं पुरुषेषु वा । कश्चिदर्हति निर्देष्टुं इति स्थातुं पणो मम ॥ ७६ ॥

कुण्डिनं प्रति गच्छन्ती दमयन्ती ॥

ततस्तथेति प्रतिपन्नवत्या मातृष्वसुर्वेश्मनि सा वसन्ती ।
सुनन्दया तत्सुतयार्च्यमाणा निनाय निर्गूढतया दिनानि ॥ ७७ ॥
तत्र तत्र तस्या नृपकुलकलाकौशलं शीलयन्ती तत् सौभाग्यं तमुपशममप्यन्वहं शोभयन्ती ।
अत्याश्चर्यग्रहिलहृदया तत्र मातृष्वसुः सा पुत्री हस्तात् क्षणमपि न तां भीमपुत्रीं मुमोच ॥ ७८ ॥
प्रियप्रवृत्तिव्यतिपङ्गहेतवे श्रमार्त्तवैदेशिकदानदायिनी ।
निरन्तरं सा विरहव्रतस्थिता नवेन्दुमुद्वीक्ष्य जगाद कर्हिचित् ॥ ७९ ॥
अहो ! दशाया मम वैपरीत्याद् वर्णैरपि प्रापि विपर्ययः किम् ? ।
राकापि कारापदवीं बिभर्त्ति धवस्मृतिर्याति वधस्मृतित्वम् ॥ ८० ॥
तदिति कार्त्तिकतो नवमं गलद् बहलबाष्पतया दधतीव सा ।
सपदि मासमुमाममवैभवामितमुदीर्य दधे दृढतां पुनः ॥ ८१ ॥
एतत् किमप्यनवमं नवमङ्गलाङ्कं चक्रे तदत्र वटगच्छनभोमृगाङ्कः ।
तस्यार्यकर्णनलिनस्य नलायनस्य स्कन्धः प्रपञ्चचतुरोऽजनि पञ्चमोऽयम् ॥ ८२ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने पञ्चमे स्कन्धे एकविंशतितमः सर्गः ॥ २१ ॥

समाप्तोऽयं पञ्चमः स्कन्धः ।

# षष्ठः स्कन्धः

## षष्ठे सूचानाम्नि स्कन्धे प्रथमः सर्गः ।

अथैवं नलवैदर्भ्योः कलिच्छलविभिन्नयोः । चिरादाकर्ण्य वृत्तान्तममूर्छद् भीमभूपतिः ॥ १ ॥
हा महाराज ! हा वत्से ! किमेतद्वामुपस्थितम् ? । धिग् धिग् दैवमकायज्ञमित्यार्त्तः प्रललाप सः ॥ २ ॥
तदुदन्तोपलम्भाय स क्ष्मां सगिरिसागराम् । चरैर्विचेतुमारेभे भास्करः किरणैरिव ॥ ३ ॥
तयोश्च चिन्तया नित्यं निशि निद्रानिवारितः । स बभौ प्रतिपन्नस्य यामिकत्वं भजन्निव ॥ ४ ॥
हृदि प्रियङ्गुमञ्जर्यास्तनया दुःखनिर्भरे । सुप्तिर्निरवकाशेव न प्राप प्रसरं क्वचित् ॥ ५ ॥
अनुत्सवमताम्बूलमशृङ्गारमसङ्कथम् । दुःखव्रतपरं सर्वं तद्राजकुलमप्यभूत् ॥ ६ ॥
वैदर्भीगर्भसंभूते मिथुने केशिनीसखे । दमयन्तीगतस्नेहस्तदासीत् केवलं स्थितः ॥ ७ ॥
नष्टजन्मैव तद् वृत्तं दमयन्त्या नलस्य च । न कोऽपि प्रकटं चक्रे नवांशकुशलोऽपि हि ॥ ८ ॥
इत्थं व्यतिकरे तस्मिन् गहने चरचक्षुपाम् । नाभवद् नलवैदर्भ्योः कस्यचित् प्राणनिश्चयः ॥ ९ ॥
वन्ध्याद्रिद्रोणकोणेपु निपधस्कन्धभूमिपु । घोपपकणभीमासु सर्वत्र प्रासरन् यशाः ॥ १० ॥

देशभाषादिभेदोक्त्या चित्तार्थग्राहिणोऽपि ते । पश्यन्तोऽपि प्रयत्नेन नलभैम्यौ न लेभिरे ॥ ११ ॥
ततः सुदेवशाण्डिल्यौ नाम्ना वीरौ वचोहरौ । तत्रैवाजग्मतुर्दैवात् वैदर्भी यत्र वर्त्तते ॥ १२ ॥
तत्र श्रीभीमभूभर्त्तुः सभार्याय महीपतेः । तस्मै तौ नलवैदर्भ्योरत्याहितमशंसताम् ॥ १३ ॥
तच्छ्रुत्वा सोऽपि शोकार्त्तः स्वसंबद्धासु भूमिषु । यत्नेन नलवैदर्भ्योरन्वेषणमचीकरत् ॥ १४ ॥
स्वयं सुदेवशाण्डिल्यौ पश्यतः स्म च सर्वतः । तत्र स्त्रियं पुमांसं वा सर्वं युक्त्या तया तया ॥ १५ ॥
स्थापितौ तेन तौ राज्ञा तत्रैवाफाल्गुनोत्सवम् । स दासमपि भीमस्य भृत्यं हि बहु मन्यते ॥ १६ ॥
तदा ताभ्यां सुनन्दायाः कुर्वत्याः पितृमङ्गलम् । ददृशेऽनुचरी भैमी पूर्णपात्रकरा सखी ॥ १७ ॥
प्रत्यभिज्ञाय तौ तस्याः सङ्गृह्य चरणौ जवात् । दत्तार्घाविव बाष्पौघैरिति चक्रन्दतुः शुचा ॥ १८ ॥
यस्यास्तव हि जानन्ति जगन्ति त्रीणि वैभवम् । सा देवि दमयन्ति ! त्वं कथमित्थं व्यवस्थिता ? ॥ १९ ॥
अद्य त्रपाकुलः स्वर्गः पातालं च शुचाकुलम् । सुरासुरगणस्तुल्या यदि त्वं भैमि ! वर्त्तसे ॥ २० ॥
त्वमात्मा भोजवंशस्य त्वं निधिर्नैपधायुषः । उत्साहस्त्वं महर्षीणां लक्ष्मीस्त्वमनुजीविनाम् ॥ २१ ॥
अथवा किं बहूक्तेन के वयं त्वद्गुणस्तुतौ ? । वेत्ति चेत् तव माहात्म्यं स्वयं देवी सरस्वती ॥ २२ ॥
प्रसीद त्यज गूढत्वं चर्येयं तव कीदृशी ? । कृतार्थय शुचार्त्तानां बन्धूनां देवि ! जीवितम् ॥ २३ ॥
भवन्तुत्वन्मुखालोकरसास्वादप्रसेदुषः । अद्य देवस्य भीमस्य निःश्वासानां समाप्तयः ॥ २४ ॥

इति तद्वाक्यमन्त्रेण प्रकाशीभूतमग्रतः । परिवव्रुर्नृपाद्यास्ते सर्वे भैमीमयं निधिम् ॥ २५ ॥
एतैः सर्वैः पृच्छ्यमाना त्रपावनतकन्धरा । सा ददर्श भुवं देवी महिम्ना स्वसखीमिव ॥ २६ ॥
तस्यास्त्रिभुवनख्यातं परीक्षार्थं मलाविलम् । पिप्लुमुद्योतयामास सुनन्दा गन्धिवारिभिः ॥ २७ ॥
इयं सा दमयन्तीति सर्वेभ्योऽपि निरक्षरम् । स एव कथयामास मूकदूत इव स्फुरन् ॥ २८ ॥
अहो चित्रमहो ! देवी दमयन्ती यमीतालम् । ततः कलकलः कोऽपि बभूव भुवनान्तरे ॥ २९ ॥
हा हातिकठिने ! भैमि ! स्नेहनीरैर्न भिद्यसे । इत्यार्यान् यदि यत् कालं इत्थमस्मानमूमुहः ॥ ३० ॥
मूर्त्तिः सुवर्णवर्णा ते वक्षो वज्रमयं पुनः । स्थाने तदीदृशं दुःखं सहमाना न खिद्यसे ॥ ३१ ॥
धिगस्मान् पशुवद् मूढान् धिगस्मान् कूटमानिनः । मातर्ज्ञातिविभूषायां त्वयि दुर्दैवचेष्टितम् । ॥ ३२ ॥
इत्यादि बहु जल्पन्तस्तामालिङ्ग्य नताननाम् । हर्षाश्रुमिश्रितैरस्रैर्मातृष्वस्रादयोऽरुदन् ॥ ३३ ॥
सुवर्णमणिमाणिक्यैर्दुकूलफलचन्दनैः । सर्वे सुदेवशाण्डिल्यौ निर्भरं पिदधुश्च तौ ॥ ३४ ॥
भूयो भूयोऽभवन् भैम्या माङ्गल्यानि सहस्रशः । मुमोच न च तां देवीमङ्काद् मातृष्वसा क्षणम् ॥ ३५ ॥
अधावन् करभैरश्वैश्चरणैश्च सहस्रशः । कुण्डिने तद्विवक्षार्थमहंपूर्विकया जनाः ॥ ३६ ॥
शंसन्तस्ते सुतां लब्धां सभायां भीमभूभुजः । तथा रुक्मैरपूर्यन्त ददुर्दानं यथार्थिनाम् ॥ ३७ ॥
दमो दमनदातौ च स्वसुरानयनोत्सुकाः । प्रापुः श्रीवर्द्धनं वेगादक्षौहिण्या गिरा पितुः ॥ ३८ ॥



भीम-दूताभ्यां शोधिता दमयन्ती ॥

प्रणम्य शिरसा ज्येष्ठां जामिं तां मातृसन्निभाम् । भ्रातरस्ते त्रयो भक्त्या प्रस्थानार्थं व्यजिज्ञपन् ॥ ३९ ॥
ततो मातृष्वसारं तां तत्पतिं नृपतिं च तम् । सुनन्दापरिवारं च गन्तुमापृच्छति स्म सा ॥ ४० ॥
कथञ्चित् तदनुज्ञाता रथमारुह्य भीमजा । तैरनुव्रज्यमाना च प्रतस्थे कुण्डिनं प्रति ॥ ४१ ॥
अक्षोभत्रितयाद्यैस्तं प्रयत्नादपवर्त्य तान् । गत्वाहात् प्राप सोत्कण्ठा भैमी जन्मभुवं निजाम् ॥ ४२ ॥
प्रत्युद्गच्छति तां गति भीमे पितरि संभ्रमात् । यद्यप्रत्युद्गतान्यासन् कुण्डिनौकांसि केवलम् ॥ ४३ ॥
पताकोन्मुखमुख्यं च विस्मरं विनिवार्य सा । प्रस्तुतेनैव वैदर्भी विधिना प्राविशत् पुरम् ॥ ४४ ॥
प्रणम्य कुलदेवीभ्यः पित्रोश्च चरणौ क्रमात् । अभ्युवासेन्द्रसेनस्य हर्म्यं रम्यं विभूतिभिः ॥ ४५ ॥
मातः क्व तात इत्युच्चैः पृच्छन्तं साश्रुलोचना । तत्रेन्द्रसेनमालिङ्ग्य भामिन्यायुक्तमालपत् ॥ ४६ ॥
अथ राजा द्वितीयेऽह्नि सभार्यः प्राप्य तद्गृहम् । पृच्छन् तत् सर्वमामूलात् विज्ञप्यते तनूजया ॥ ४७ ॥
तात तात ! पुरा पुर्यां निषधायां समंततः । धर्मकर्मसु पुष्टेषु सुस्थितासु प्रजासु च ॥ ४८ ॥
इन्द्रसेनस्य संवृत्ते वर्षग्रन्थौ च पञ्चमे । बभूव तत्र जामाता दुर्दैवात् द्यूतकौतुकी ॥ ४९ ॥
इय तावत् समीपेऽस्ति केशिनी तात ! पृच्छ्यताम् । स तु निवारितो राजा मया नानाविधैः क्रमैः ॥ ५० ॥
तत्र द्यूतावर्तिं मत्वा केशिन्या वाक्यतस्ततः । इहैवागमसंयुक्तं प्रैषिकोशबलादिकम् ॥ ५१ ॥
राज्यभ्रष्ट इहायातुं वने राजा मयार्थितः । लिपिं लिखन् पटं छित्त्वा सुप्तां त्यक्त्वा तु मां ययौ ॥ ५२ ॥

तदा च व्यन्तरावेशस्तस्यासीत् कश्चिदद्भुतः । न ज्ञायते ततो राजा विवशः कथमप्यभूत् ॥ ५३ ॥
तदिदं पुरतः क्षौमं सा चेयं वर्णपद्धतिः । ततोऽहं मुनिवाक्येन तपः कृतवती गिरौ ॥ ५४ ॥
क्रमाद् मातृष्वसुर्वेश्म वसन्ती सुखमन्वहम् । निगूढैव स्थिता तात ! लज्जया दैन्यजन्मना ॥ ५५ ॥
इहापि न ममागन्तुं स्पृहासीत् दशयानया । कीदृग्मे जीवितं तात ! वीरसेनसुतं विना ॥ ५६ ॥
संवत्सरस्तु जातोऽयं न च तस्य कथापि हि । विलीनमिव नामापि निःपुत्रस्येव तस्यचित् ॥ ५७ ॥
इति बाष्पौघनिस्यन्दमन्यूत्पीडजडाक्षरम् । निरीक्ष्य रुदतीं पुत्रीं राजा वचनमब्रवीत् ॥ ५८ ॥
वत्से ! विसृज बाष्पौघं प्रिये ! पुत्री निवार्यताम् । पुत्रि ! आवृसु तिष्ठत्सु कीदृशी दीनता तव ॥ ५९ ॥
आर्यावर्त्तः सकाश्मीरः सान्तर्वेदिः सकौशलः । अयं मयेन्द्रसेनाय दौहित्राय निवेदितः ॥ ५० ॥
दमयन्त्यद्य षट्त्रिंशदक्षौहिणीमहार्णवे । कस्य शक्तिः पुरःस्थातुं दमे दिग्विजयोद्यते ॥ ६१ ॥
स चापि पुत्रि ! जामाता दुर्दैवाद् व्यन्तरातुरः । अमुत्रास्तीति विज्ञातुं विलम्बः क इवास्ति मे ॥ ६२ ॥
कियान् पश्यैष भूगोलः प्रेक्षितारस्तु कोटिशः । प्राप्तमेव शृणोपि त्वं न चिरात् तमरिन्दमम् ॥ ६३ ॥
संप्रेषय निजं तस्मै दूतचक्रेण वाचिकम् । स त्वां विज्ञाय जीवन्तीं यथा स्यात् कुण्डिनोन्मुखः ॥ ६४ ॥
प्रतिबन्धो हि भार्यायाः प्रायः पुंसः पशोरपि । विकलोऽपि नलश्चापद् नल एव भविष्यति ॥ ६५ ॥
तस्यापि चेङ्गिताकारकलापूर्वप्रघट्टकान् । त्वं निवेदय दूतेभ्यो यथा जानन्ति तेऽपि तम् ॥ ६६ ॥

अद्य प्रभृति मे यत्नो जामातुः प्राप्तिकारणे । दशदिग्विजयं कर्तुं चरप्रेषणकर्मणि ॥ ६७ ॥

लब्धया हि त्वया पुत्रि ! भर्तुर्न्यमनदीनया । सहस्रगुण एवाद्य मम तद्दर्शनोद्यमः ॥ ६८ ॥

विमृज विमृज दुःखं दीनता कीदृशी ते भुजविजयिनरेन्द्रा भ्रातरो हि त्वदीयाः ।
मुवनवलयवर्त्ती दुर्लभो नास्ति भर्त्ता विरम विरम मोहात् सौमनस्यं भजस्व ॥ ६९ ॥

इति विपुलमतीनामत्युदारद्युतीनामतिललितमतीनामत्युदग्रस्थितीनाम् ।
सततमपरिहीणः क्षत्रियाणां धुरीणः सुमुखि ! भवदधीनस्तावकीनः स भर्त्ता ॥ ७० ॥

प्रतिजनपदमेषा जायते वीरचर्या सनगरगिरिगर्त्तं वीक्ष्यते विश्वमेतत् ।
अयमधिगत एव श्रीनलो वैरसेनिः कुरु मनसि पितुर्मे भाषितं पुत्रि ! सम्यक् ॥ ७१ ॥

इति वचनमुदीर्य धैर्ययुक्तं प्रमुदितमाशु विधाय चित्तमस्याः ।
नरपतिरुदतिष्ठदिष्टधर्मा सपदि यथाविहितक्रियानिमित्तम् ॥ ७२ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने षष्ठे स्कन्धे प्रथमः सर्गः ॥ १ ॥



## षष्ठे स्कन्धे द्वितीयः सर्गः ।

अथाक्षिपटलोद्दिष्टा राजादेशेन कोशतः । लेभिरे भूरि पाथेयं चाराश्चिरनिवृत्तये ॥ १ ॥
गोसहस्रं प्रदास्यामि नलवृत्तान्तवादिने । इति प्रियङ्गुमञ्जर्या देव्या चासीत् प्रतिश्रुतम् ॥ २ ॥
नलसङ्केतसंबद्धाः सरसाः क्षोभकारिणीः । इति गाथाः स्वयं तिस्रो वैदर्भी च शशास तान् ॥ ३ ॥
“ पटं छित्त्वा प्रनष्टोऽसि वने सुप्तां विहाय माम् । हृदयाद् यदि मे यासि तद् वेद्मि तव पौरुषम् ॥ ४ ॥
तव पुत्रे कलत्रे च मित्रे च ममता गता । स्थितो योगीव नीरागस्त्वं देव ! द्यूतदीक्षया ॥ ५ ॥
अदृशीकरणं पूर्वं देवकार्ये त्वया कृतम् । इदानीं ते तदस्त्येकं कार्यं किञ्चित् पुनर्नहि ” ॥ ६ ॥
इत्थं गाथात्रयार्थेन प्रबन्धान् विविधांश्च ते । कृत्वा सर्वेषु लोकेषु जगुर्जङ्गमडिण्डिमाः ॥ ७ ॥
ततः प्रववृते पृथ्व्यां शतधा तद् नलायनम् । उत्कण्ठाकारि सर्वेषामसङ्केतजुषामपि ॥ ८ ॥
अथास्मिन् चारसञ्चारे व्रजन्तौ राजशासनात् । देवी सुदेवशाण्डिल्यौ विशेषज्ञाभ्यभाषत ॥ ९ ॥
तावत् सुदेवशाण्डिल्यौ वृत्तेयं प्रणधिक्रिया । तथापि मम कार्येऽस्मिन् मनो नायाति निश्चयम् ॥ १० ॥
तथाहि विपुले विश्वे पुरुषाणां च कोटिषु । अत्रामुक इति ज्ञातुं स्थानभ्रष्टः क्व शक्यते ? ॥ ११ ॥
संवदन्ति च कुत्रापि नामवर्णगुणा अपि । नामाकारेष्वपि प्रायः साम्यं मुक्ताफलेषु यत् ॥ १२ ॥

कथं नु खलु मूढानामेकमार्गानुगामिनाम् । नृणां बहिर्मुखानां च सुपरिच्छेद्यमन्तरम् ॥ १३ ॥
ततो निःसंशयं ज्ञानं तमेकं पुरुषं प्रति । अहं विद्येव दास्यामि युवयोरप्रमत्तयोः ॥ १४ ॥
न हि मायामयः कुर्वन् नानारूपाणि सर्ववित् । विचरन् सर्वभावेषु प्रमत्तानां न गोचरः ॥ १५ ॥
यत् सत्यं युष्मदीयं मे वैदग्ध्यं प्रतिनिश्चयः । दक्षावनुप्रवेशज्ञौ युवामन्तर्मुखौ यतः ॥ १६ ॥
तदत्र तस्य गान्धर्वीरसेनाङ्गजन्मनः । वीरस्य निषधाभर्तुस्तत्त्वं सम्यक् निगम्यताम् ॥ १७ ॥
न नाश्नाति विना स्नानं दिनकृत्यं न लुम्पति । न कश्चिद् दिवा शेते न जल्पति विना स्मितम् ॥ १८ ॥
कीर्त्या वहति नोत्कर्षं श्रिया न भजते मदम् । शुचा वहति न म्लानिं रुषा त्यजति नाश्रितम् ॥ १९ ॥
तुष्यन्ति क्रियया सन्तः स्विद्यन्ति सुदृशो दृशा । नृत्यन्त्यान्दोलनैः खड्गाः क्षुभ्यन्ति क्ष्वेडया गजाः ॥ २० ॥
अपि तद्गुणलक्षाणां सङ्ख्या कर्तुं न शक्यते । अद्वितीयास्तु सन्त्येके तस्य लोकोत्तरा गुणाः ॥ २१ ॥
सर्वासु हृदयस्तस्य वीथीषु कृतकर्मणः । न तस्य सदृशः सादी सारथिर्वा महीतले ॥ २२ ॥
अन्तरेण तमेनैकं लब्धवद्भिरोर्जिताम् । सूर्यपाकां न जानाति नरो रसवती परः ॥ २३ ॥
आलेख्यलिखितस्यापि तद्रूपस्य न दर्शनात् । वपुस्त्रपुषवत् तस्य स्फुरदुत्कण्टकं भवेत् ॥ २४ ॥
नगमांसमयं प्रेम यस्यासीद् मयि तादृशम् । स ईदृग् विरहे घोरे जीवन् संभाव्यते कथम् ॥ २५ ॥
हा नाथ ! जीवलोकं त्वं शून्यं कृत्वा क्व मे गतः ? । अहमद्यापि जीवामि हताशा जीवितप्रिया ॥ २६ ॥

त्वद्वार्त्ता कथं जाता वृथा वाचः सतामपि । विसंवदति वा सर्वं भागधेयविपर्यये ॥ २७ ॥
यदि जीवन् भवेद् राजा तद्वार्त्ता श्रूयते न किम् ? । न हि व्यवहितस्यापि प्रभा भानोः पिधीयते ॥ २८ ॥
प्रवहणमपि वार्द्धौ याति वातानुवृत्त्या भ्रमणमपि खगस्य व्योम्नि वृक्षानुयायि ।
तदधिकतररूपं प्राणनाथस्य जातं गगनमिदमदेशं निर्निमित्तोदयं च ॥ २९ ॥
इह कथमपि तस्य ज्ञायते दिक् दशा वा कथयतु कतमस्तं नास्ति जीवन् स नूनम् ।
लिपिरियमपि मिथ्या चारणोक्तं मृषा तत् जनयति हि फलाशां कीदृशीं छिन्नवृक्षः ॥ ३० ॥
सुखमास्स्व मुदैव सर्वथा त्यज शाण्डिल्य ! चिरप्रवासिताम् ।
ननु मद्व्यसनस्य कारणे किमिदं वां कदनं निरर्थकम् ॥ ३१ ॥
अप्येकैकं व्रजति हि दिनं वर्षकल्पं विदेशे कार्योद्घातस्तदपि गहनो गूढगर्भानुकारः ।
सर्वस्यापि स्वगृहविषयाः कोटिशः सन्ति चिन्त्या राजादेशः कतिथ समयं राजयक्ष्मेव याप्यः ॥ ३२ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने षष्ठे स्कन्धे द्वितीयः सर्गः ॥ २ ॥

## षष्ठे स्कन्धे तृतीयः सर्गः ।

ततस्तस्या निराशायाः प्रोत्साहनविधित्सया । सहस्रगुणमारम्भं वहन्तौ तावभापताम् ॥ १ ॥
खेदं नौ तस्य राजर्षेर्वीक्षणे किमपेक्षसे ? । ययोर्मुख्यमिदं कार्यं गौणस्वगृहकृत्ययोः ॥ २ ॥
राजादेशादिमं देहं क्षिपावो वारिधावपि । केयं चरणचारैकमात्रसाध्या वसुन्धरा ॥ ३ ॥
यत् तवार्थे नृपादेशात् पुण्यश्लोको विलोक्यते । तदिदं नौ त्रिधा श्लाघ्यं भाग्येन पदमागतम् ॥ ४ ॥
शृणु देवि ! स ते भर्त्ता नापाच्यां किल मन्यते । यद्युदीच्यां प्रतीच्यां वा प्राच्यां वापि यदस्थितः ॥ ५ ॥
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं वा वर्णमाश्रितः । त्यक्त्वा वा रूपमात्मीयं प्राप्तो रूपान्तरं नवम् ॥ ६ ॥
विनश्येष्टते ग्रामगर्त्तागिरिगुहासु वा । हस्त्यश्वरथसंयुक्ते स्वामित्वे वर्त्ततेऽथवा ॥ ७ ॥
यत्र तत्र नयन्नेव तिष्ठन्नेव यथा तथा । येन केनाप्युपायेन तैस्तैर्वा वर्षवासरैः ॥ ८ ॥
तथापि तमसंभाव्य न निवर्त्तावहे ध्रुवम् । स्वदेहमिदमावाभ्यामस्मिन्नर्थे निवेदितम् ॥ ९ ॥
तं च जीवन्तमेव त्वं विद्धि पार्थिवपुङ्गवम् । यस्य लक्षणवद्गात्रं यश्च सत्याः पतिस्तव ॥ १० ॥
पश्य किं न ममारब्धत्रिपुरारिपराभवम् । रतिर्भूयोऽपि हि प्राप भस्मीभूतमपि प्रियम् ॥ ११ ॥
अत्रार्थे न कथामन्यां कथ्यमानां तु चिन्तय । यथासातं तु सन्तानस्तव सन्धीयते पुनः ॥ १२ ॥

धूर्त्तः सिहलकः कान्त्यां नरदत्ता गृहाङ्गणे । द्यूते हारितसर्वस्वस्तन्मूर्त्तिं भङ्क्तुमुद्यतः ॥ १३ ॥
विशूकं पापिनं देवी कितवं तमवोधयत् । स्वयं पञ्चशतद्रव्यमूल्यां गाथां समर्प्य सा ॥ १४ ॥
मूर्खस्तद्विक्रयाकाङ्क्षी स भ्रमन् पत्रिकाकरः । अमुच्यत मृषा सर्वैः स गाथार्थावधीरणम् ॥ १५ ॥
देवदत्तात्मजो विद्वान् तां गाथां मन्मथाभिधः । यथामूल्येन जग्राह गाथा सा चेयमीदृशी ॥ १६ ॥
"यदत्र लिखितं धात्रा न तत्परिणतिर्वृथा । इति मत्वा ध्रुवं धीरा विधुरेऽपि न कातराः" ॥ १७ ॥
स वृथार्थव्ययक्रोधात् पित्रा निर्वासितो गृहात् । पुराद् बहिः सरस्तीरे तस्थौ देशान्तरोन्मुखः ॥ १८ ॥
तत्र नक्तं मृगभ्रान्त्या तं व्याधशरताडितम् । रक्तगन्धेन भारुंडो वार्धिद्वीपे गृहीतवान् ॥ १९ ॥
तत्र मुक्तो दगार्द्रेण लब्धसञ्ज्ञः स पक्षिणा । ददर्श केवलं व्योम वारिधिं च दुरुत्तरम् ॥ २० ॥
स्मरन् गाथार्थसेवैकमेकाकी स वणिग्वरः । नालिकेरादिभिर्वृत्तिं वितन्वन्नयद् दिनान् ॥ २१ ॥
प्रवालमौक्तिकादीनां विष्वक् कूटानकल्पयत् । स्वर्णमिश्रेष्टिकायुग्मान्याख्यागर्भाणि चाकरोत् ॥ २२ ॥
अथ सांयात्रिकेशस्य भृत्याः शाल्वस्य वारिणे । संस्थाप्य जलधौ पोतं तत्र द्वीपे समाययुः ॥ २३ ॥
मर्मज्ञः सोऽपि तैः पृष्टः स्वनिस्तारं विचारयन् । पोतेशघटनापूर्वं वार्याख्यातुममन्यत ॥ २४ ॥
ततः पोतपतिः प्रीत्या तस्य सिद्धप्रयोजनः । कूपे तद्धनलोभान्धस्तं तटस्थमपातयत् ॥ २५ ॥
तस्य सर्वस्वमादाय सांयात्रिकपतौ गते । स कूपपतितोऽप्यन्तर्गाथार्थैकपरोऽभवत् ॥ २६ ॥

ददर्श तस्य कुण्डस्य मध्ये पश्यन् वणिग्वरः । पातालगामिनीं तिर्यग्व्यक्तां सोपानपद्धतिम् ॥ २७ ॥
तया प्रविश्य पातालं प्रपेदे विस्मयाकुलः । भुवं गिरिसरिद्वृक्षक्षेत्रचैत्यादिभूषिताम् ॥ २८ ॥
तत्र भ्रमन् महारम्यमारामाभ्यन्तरस्थितम् । प्रौढं प्रासादमासाद्य वैरोट्यामूर्त्तिमैक्षत ॥ २९ ॥
स्वनिस्ताराभिलाषेण तदाराधनतत्परः । आससाद निशि स्वप्ने स तदादेशमीदृशम् ॥ ३० ॥
तल्लाभिनिविपक्षोत्थगृहादक्षाणि तत्क्षणम् । गृहीत्वा पञ्चरत्नानि प्रातर्मच्चरणाग्रतः ॥ ३१ ॥
व्रणसंरोहिणीं चैव नीत्वा मत्तोरुणोद्गताम् । पुरो गर्भपुरं प्राप्य सुखं वत्स ! प्रपत्स्यसे ॥ ३२ ॥ युग्मम् ॥
इत्यादिष्टः स निर्निद्रः प्रातः सर्वमवाप्य तत् । छित्त्वोरुं व्रणरोहिण्या ययौ रूढव्रणः क्षणात् ॥ ३३ ॥
प्राप गर्भपुरं तत्र नृपक्षिपशुवर्जितम् । विचित्रधनधान्याढ्यमभ्रंलिहगृहव्रजम् ॥ ३४ ॥
अदर्शि भ्रमतानेन दोलापर्यङ्कशायिनी । सौधसप्तमभूमीस्था कन्या कापि मनोरमा ॥ ३५ ॥
स तया विहितातिथ्यः पृच्छंस्तत्त्वमभाषत । आसीद् वेलातटं नाम्ना त्रिदशस्पर्द्धिपत्तनम् ॥ ३६ ॥
तत्र राजा सुकेत्वाख्यः शक्तिमानपि दैवतः । रुद्धो रिपुचमूचक्रैः किंकर्त्तव्यजडोऽभवत् ॥ ३७ ॥
तं कश्चित् प्राग्भवप्रेम्णा ज्ञात्वा देवस्तथागतम् । वार्धिमध्ये सुगुप्ताख्यं पुरं कृत्वा विमुक्तवान् ॥ ३८ ॥
कपाटोपानमार्गेण पातालतलगामिना । चक्रे गर्भपुरं चेदं स राज्ञो हितकाम्यया ॥ ३९ ॥
सुखमेनं निजं राज्यं निःशङ्कं तस्य तस्थुषः । प्राप्तः कुतोऽपि दुर्दैवाद् मांसभक्षी निशाचरः ॥ ४० ॥

भक्ष्यमाणेषु लोकेषु राक्षसेन दुरात्मना । द्रुतं गर्भपुरं राजा प्राप्तो बन्धुजनैः समम् ॥ ४१ ॥
क्रव्यादोऽपि जनं कृत्स्नं व्यापाद्य पुरवासिनम् । कूपसोपानमार्गेण कालादत्राप्युपेतवान् ॥ ४२ ॥
स हत्वा बन्धुभिः सार्द्धं राजानं पितरं मम । ररक्ष केवलं कन्यां मामेकां दारकर्मणा ॥ ४३ ॥
इतो दिनत्रयादूर्ध्वं तस्मिन् मां वोढुमिच्छति । मनसा शरणं देवीं वैरोट्यां स्मृतवत्यहम् ॥ ४४ ॥
सोऽपि स्वप्नप्रसन्ना मे ददौ रक्षोघ्नं वरम् । तच्च सत्यमिवाभाति भीष्मेऽत्र त्वं कुतोऽन्यथा ॥ ४५ ॥
तद् नीत्वा मत्पितुः खड्गमितो गुप्तो भव क्षणम् । मृगया विनिवृत्तोऽयं नूनमायाति राक्षसः ॥ ४६ ॥
तद्विधाराधनध्यानं कुर्वन्नेष निहन्यताम् । न दुर्लभा हि धीराणां जयश्रीश्छलयोधिनाम् ॥ ४७ ॥
तथेति तद्वचः कुर्वन् सोऽपि संप्राप्य तत्क्षणम् । जघान राक्षसं वीरो वैरोट्यावरगर्वितः ॥ ४८ ॥
परिणीय च तां भूयस्ततो निर्गन्तुमुत्सुकः । स सिषेवे वटद्वारं प्रियावित्तसमन्वितः ॥ ४९ ॥
कदाचित् पूर्ववत् कैश्चित् संप्राप्तैः सलिलार्थिभिः । स कृष्ट्वा पोतनाथेन कारितः सह सङ्गमम् ॥ ५० ॥
पोतेशस्तद्वधूलुब्धः क्षिप्त्वा प्रवहणे निजे । रजन्यां जलधेर्मध्ये तं प्रमत्तमपातयत् ॥ ५१ ॥
स पतन् गिलितः शीघ्रं महामत्स्येन वारिधौ । दधौ जठरमध्येऽपि धैर्यं गाथार्थचिन्तया ॥ ५२ ॥
वार्द्धौ तं क्षिप्तमाख्याय सार्थेशेनापि तत्प्रिया । अर्थिता रतिमातीर्थे ययाचे नियमावधि ॥ ५३ ॥
सोऽपि तं वेलया क्षिप्तं दारयद्भिस्तिमिङ्गिलम् । कान्तीशस्यैव कैवर्त्तैः संप्राप्य प्राभृतीकृतः ॥ ५४ ॥

तं मत्स्योदर इत्याख्यां दत्त्वा राजा कुतूहलात् । ललिताकारमालोक्य चकार स्थगिताधरम् ॥ ५५ ॥
ज्ञात्वापि सहवासं स्वमात्मानं निजुगूह सः । यत् किञ्चिदाख्याय जनं पृच्छन्तं विप्रतारयन् ॥ ५६ ॥
अथ प्रथमपोतेशः प्राप्तस्तद्धनसंयुतः । राज्ञा स मानितस्तत्र तिष्ठन् तं वीक्ष्य नीतवान् ॥ ५७ ॥
मत्स्योदरोऽपि कालज्ञो नारेभे सहसैव तम् । सोऽपि भीतोऽस्य जग्राह पारंपर्यं जनाननात् ॥ ५८ ॥
ततस्तत्प्रेरिता मत्ता मातङ्गा गानतत्पराः । नृपवेश्मनि तं शीघ्रमालिङ्ग्य रुरुदुर्यथा ॥ ५९ ॥
अहो महोदरोऽस्माकमयं रुष्टो गतोऽभवत् । दिष्ट्या चिराच्च दृष्टोऽद्य तेनोक्तं वा रुणद्धि नः ॥ ६० ॥
तच्छ्रुत्वा स क्रुधा पृष्टः किमेतदिति भूभुजा । मत्स्योदरोऽवदद् देव ! सर्वं सत्यमिदं ध्रुवम् ॥ ६१ ॥
अहमेषां कनिष्ठोऽस्मि ज्येष्ठाः सर्वेऽपि खल्वमी । केवलं पञ्च रत्नानि ममोरौ निदधे पिता ॥ ६२ ॥
एषां कक्षाशिरःस्कन्धकुकुन्दरकरादिषु । सर्वत्र निदधे तानि तेन नष्टा गतोऽभवत् ॥ ६३ ॥
इत्युक्त्वा दर्शयामास रत्नान्यूरुं विदार्य सः । प्रत्युत्पन्नमतेरन्यः कथं राज्येषु नन्दति ॥ ६५ ॥
इमान् विदार्य दृश्यन्तां रत्नानीति नृपाज्ञया । प्रारब्धास्तेऽप्यभापन्त भ्रातायं सर्वथा न नः ॥ ६६ ॥
पोतेशप्रेरितैरेतद् मिथ्यास्माभिः प्रजल्पितम् । रक्ष रक्ष महाराज ! न मृषा ब्रूमहे पुनः ॥ ६७ ॥
कुपितेन ततो राज्ञा सांयात्रिकपतौ धृते । सर्वं स्ववृत्तमाचख्यौ राज्ञे मत्स्योदरो रहः ॥ ६८ ॥
ज्ञात्वा गत्वापि पृष्टः सन् सार्थवाहोऽथ मर्मवित् । द्रव्याभिज्ञानसंबन्धे प्रत्यपद्यत नोत्तरम् ॥ ६९ ॥

गर्भनामाङ्कितं सर्वं द्रव्यं तस्याथ पार्थिवः । ददौ मत्स्योदरायैव न्यायमूला हि भूभुजः ॥ ७० ॥
मत्स्योदरोऽपि तं राज्ञा वध्यमानममोचयत् । असाधुष्वपि साधुत्वं दर्शयन्ति हि साधवः ॥ ७१ ॥
इत्थं व्रजति काले च प्राप्तः पोतपतिः परः । तत्सन्मुखगतो राजा वार्द्धिद्वीपे स्थितोऽभवत् ॥ ७२ ॥
मत्स्योदरप्रिया तत्र नृपं तिलकमञ्जरी । व्यजिज्ञपद् यथा तेन देव ! बन्दीकृतास्म्यहम् ॥ ७३ ॥
हत्वा मम प्रियं पापी सोऽयं मां हन्तुमुद्यतः । त्यक्ष्याम्यहं ततः प्राणान् तथाप्येष निगृह्यताम् ॥ ७४ ॥
ततो राजावदत् प्राणान् रक्ष रक्ष मनस्विनि ! । कदापि हि भवेद् दैवाद् मुग्धे जीवन् तव प्रियः ॥ ७५ ॥
अश्रद्धेयं तु कान्तस्य विचिन्त्य हृदि जीवितम् । रुरोद मुक्तकण्ठं सा सर्वैराश्वासितापि हि ॥ ७६ ॥

मत्स्योदरो नृपतिना कृतपूर्ववार्त्तस्तां प्रत्ययप्रमुदितां स्वगृहं निनाय ।
तं चाततायिनमपि क्षितिपालदण्डादात्मीयबन्धुमिव पोतपतिं ररक्ष ॥ ७७ ॥

वैरोट्या दत्तरत्नक्षितभुजगविषां जीवयामास राज्ञः पुत्रीं दष्टां कदापि स्वयमवनिभुजा सापि तस्मै प्रदत्ता ।
एवं स स्फीतभाग्यः प्रकटितचरितः शोकसिन्धौ निमग्नं पित्रोरानन्दकन्दव्यतिकरतरलं नन्दयामास चेतः ॥ ७८ ॥

यथा तिलकमञ्जरी निजपतिं तमित्थं पुरा पयोनिधिनिमग्नमप्यधिजगाम भूयोऽपि हि ।
तथा तव विदर्भजे निषधभूभुजः सङ्गमो विदेशमधितस्थुषः कथमपेक्ष्यते दुर्लभः ॥ ७९ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने षष्ठे स्कन्धे तृतीयः सर्गः ॥ ३ ॥

## षष्ठे स्कन्धे चतुर्थः सर्गः ।

इति ताभ्यां कृतोत्साहा वैदर्भी धैर्यनिर्भरम् । सन्मानदानपूर्वेण विधिना विससर्ज तौ ॥ १ ॥
नलस्यान्वेषणं कर्तुं पथि प्रस्थितयोस्तयोः । साहाय्यमिव पृष्ठस्थो बभार मलयानिलः ॥ २ ॥
केऽप्यद्रीन्क्षितिनिवर्त्तन्त केऽपि तस्थुः कचित् सुखम् । कुण्ठप्रज्ञाः परेऽभूवन् चारा ज्ञातुं नलस्थितिम् ॥ ३ ॥
तौ तु ग्रामेषु पल्लीषु पत्तनेषु पुरीषु च । प्रपावापीषु कूपेषु मठेषु सुरसद्मसु ॥ ४ ॥
वनेषु सत्रशालासु प्रतोलीषु सभासु च । राजमार्गेषु गोष्ठेषु गर्त्तागिरिगुहासु च ॥ ५ ॥
ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रान् कारून् जनङ्गमान् । वानप्रस्थांश्च भिक्षूंश्च विविधानितरानपि ॥ ६ ॥
वेषभाषापरावर्त्तैरिङ्गितग्रहणादिभिः । अनुप्रविश्य विश्रम्भं जनयन्तौ यथा तथा ॥ ७ ॥
सायं प्रातर्दिवानक्तं वृष्टिशीतातपेष्वपि । विचिन्वन्तौ नलं दैवादयोध्यां प्रापतुः पुरीम् ॥ ८ ॥ पञ्चभिः कुलकम् ।
तदा च स महीपालः कुब्जरूपधरो नलः । राजमान्यतया तत्र महत्या संपदाभवत् ॥ ९ ॥
वैदर्भीविरहव्याधिविद्धगात्रस्य तस्य च । न यात्यह्नि गते रात्रिर्न च रात्रौ पुनर्दिनम् ॥ १० ॥
स स्वल्पपरिवारेण तस्मिन्नह्नि पुराद् बहिः । कर्त्तुं प्राभातिकं कृत्यं सरोवरमुपाययौ ॥ ११ ॥
गतां सम्भाव्यैगोष्ठं तरुखण्डं खगारवैः । भृङ्गशब्दैः सरः साब्जं मुखरं सर्वमप्यभूत् ॥ १२ ॥

इति व्यतिकरं रम्यं पश्यन् विरहविह्वलः । कार्यकुब्जाकृतिर्दध्यौ निषधानामधीश्वरः ॥ १३ ॥

प्रहरन्ति हन्त हृदयं विदर्भजाविरहाकुलं भृशमिमा ममाधुना ।
बत कीरकेकिकलविङ्ककोकिलाकिकिदीधिकोककुलसङ्कुला भुवः ॥ १४ ॥

कुवलयवनवाताः कूजितं कोकिलानां किशलयशयनीयं कौतुकस्थानकानि ।
इति हि मम समस्तं संप्रति व्यर्थमासीद् विमलमपि कवित्वं सन्निधौ दुर्जनस्य ॥ १५ ॥

तादृक् प्रेम्णि स्वयमपि तथा तत्र सुप्तोज्झिताया दूरे देव्याः पुनरधिगमः संशयो जीवितेऽपि ।
तद्वार्त्तापि क्वचन न पुनर्नाममात्रापि जाता धिग् जीवामि स्फुटति बत मे वज्रतुल्यं न वक्षः ॥ १६ ॥

वपुर्ज्वलति विह्वलं विरहयातना याप्यते न मृत्युरधिगम्यते मरणवासना मूर्छति ।
न वेद्मि गहनामिमां परिणतिं निजस्यात्मनो न कोऽपि हि मया समः क्षितितलेऽस्ति दुःखी नलः ॥ १७ ॥

हा प्रिये ! परिहृतासि सर्वथा भीमजे ! कथमसि व्यवस्थिता ।
इन्द्रसेनजननि ! क्व वर्त्तसे देहि देहि दमयन्ति दर्शनम् ॥ १८ ॥

इति प्रकामं विलपन् स राजा वैदेशिकौ तौ कलयाञ्चकार ।
अभूद् मिथः कार्यवशंवदानां तेषां त्रयाणामनुयोगयोगः ॥ १९ ॥

कौ युवां कुत इहागमनं वां ? कुण्डिनेन्द्रनिलयौ कथकौ स्तः ।

अत्र चित्रफलके किमिदं त्वां साधु पृच्छसि शृणु श्रुतियोग्यम् ॥ २० ॥
यद् वपुः कमठपृष्टिकठोरं यस्य वज्रकठिनं हृदयं च ।
तस्य निर्मलममुत्र चरित्रं भूभुजः कमलकोमलवाचः ॥ २१ ॥
इत्यनेकगुणगौरवगौरः कस्य नाम स कुले किल राजा ।
वीरसेनतनयः सुखवैरी नैषधो ननु दुरोदरवीरः ॥ २२ ॥
तद् विचिन्त्य वचनं चमत्कृतः प्रेयसी चरितलब्धिलालसः ।
आतिथेयसमयाय मायया तौ निनाय निलये नलः स्वयम् ॥ २३ ॥
तादृग्रूपे निखिलजनतादृग्विषे कुब्जकत्वे त्यागं भोगं विनयपरतां वाग्मितां वैभवं च ।
साश्चर्याभ्यां निरुपमतमं तस्य संभाविताभ्यां निन्दापात्रं सपदि विदधे रत्नदूषी कृतान्तः ॥ २४ ॥

इतिश्री माणिक्यदेवसूरिकृते नलायने षष्ठे स्कन्धे चतुर्थः सर्गः ॥ ४ ॥



## षष्ठे स्कन्धे पञ्चमः सर्गः ।

अथ तौ दयितादूतौ कुब्जवेषधरो नलः । प्रसङ्गादिव चित्तस्थं प्राज्ञः प्रष्टुमुपाददे ॥ १ ॥
दिष्ट्या कविवरौ दृष्ट्वा भवन्तौ मम संप्रति । फलं नयनयोर्जातं विश्रामो हृदयस्य च ॥ २ ॥
अहं हि कुब्जको विप्रौ ! विप्रयुक्तोऽस्मि दैवतः । शरीरमपरं राज्ञो नलस्य निषधेशितुः ॥ ३ ॥
नलेन वसता पूर्वं राज्यं द्यूतेन हारितम् । राज्यभ्रष्टस्ततः सोऽहं विदेशपतितोऽधुना ॥ ४ ॥
दमयन्त्या समं देव्या विदेशप्रस्थितस्य च । अत्रास्तीति पुनस्तस्य न हि वार्त्तापि वर्त्तते ॥ ५ ॥
तद् युवां कुण्डिनायातावहं पृच्छामि यत् किल । राजा स विजयी भीमस्तत्पुत्राश्च दमादयः ॥ ६ ॥
अन्यत् किं दमयन्ती सा देवी तत्रास्ति वा न वा । तदा कूबरपार्श्वेऽपि नहि स्थितवती यतः ॥ ७ ॥
यच्च चित्रपटे वृत्तं नलस्यास्तीति जल्पतः । तद् नृपस्यापि किं वार्त्ता विदिता काचिदस्ति वाम् ॥ ८ ॥
तमित्थमथ जल्पन्तं द्विजवर्यौ जजल्पतुः । दीर्घायुर्भव भद्रं ते हृष्टौ स्वस्त्वां विलोक्य च ॥ ९ ॥
आकर्णय सकर्ण ! त्वं यत् पृच्छसि तदुत्तरम् । कुशलं भीमभूभर्त्तुः कुमारा जयिनश्च ते ॥ १० ॥
विरहव्याधिदूनाया रुदितोच्छूनचक्षुषः । देव्या दमस्वसुस्तत्र प्राप्ताया हायनं स्थितम् ॥ ११ ॥
वने सुप्ता परित्यक्ता राज्ञा रात्रौ नलेन यत् । तद् न जानाति सा देवी तं भर्त्तारं क्वचिद् गतम् ॥ १२ ॥

यथा पतिपरित्यक्ता निनाय च दिनानि यत्। अस्त्यत्र चित्रफलके लिखितं निखिलं हि तत् ॥ १३ ॥
मया संश्राव्यमानापि वियोगज्वरजर्जरा। नित्यमित्येव जल्पन्ती सा तिष्ठति दिवानिशम् ॥ १४ ॥
पटं छित्त्वां प्रनष्टोऽसि वने सुप्तां विधाय माम्। हृदयाद् यदि मे यासि तद् वेद्मि तव पौरुषम् ॥ १५ ॥
तव पुत्रे कलत्रे वा मित्रे वा ममता गता। स्थितो योगीव नीरागस्त्वं देव! द्यूतदीक्षया ॥ १६ ॥
अङ्गीकरणं पूर्वं देवकार्यं त्वया कृतम्। इदानीं ते तदस्त्येव कार्यं किञ्चित् पुनर्नहि ॥ १७ ॥
इत्थं नलव्यलीकेन तस्यास्तप्तमहर्निशम्। बभूव तुहिनप्लुष्टपङ्कजप्रमितं वपुः ॥ १८ ॥
तथा पिता तथा माता तथा सर्वे सहोदराः। तदद्य निखिलं राज्यं देव्या दुःखेन दुःखितम् ॥ १९ ॥
न तस्यास्तादृशं दुःखं पुरासीद् निर्जने वने। यथाद्य विवृतद्वारं बन्धुवर्गसमागमे ॥ २० ॥
नारण्यकोपसर्गेभ्यः कथञ्चिदपि जीविता। तामद्य नु वियोगाग्निर्नादग्ध्वा विनिवर्त्तते ॥ २१ ॥
प्रियामनुव्रतां साध्वीं सलज्जां क्लेशहारिणीम्। इत्थं परिहरेत् कश्चित् किं ब्रूमः स पुनर्नलः ॥ २२ ॥
न तेन गणिता प्रीतिः पापशङ्का त्रपा कृपा। ऐश्वर्यबलमालम्ब्य सर्वं चक्रे स केवलम् ॥ २३ ॥
रा...ततो वर भिल्लाः पशवः पक्षिणोऽपि वा। साहचर्यमपि त्यक्तं येन साध्वीं प्रियां प्रति ॥ २४ ॥
अपहस्तितदिक्पालं यत् तस्मिन् प्रेम तादृशम्। वैदर्भ्यास्तस्य हि प्रेम्णा तेन भुक्तमिदं कृतम् ॥ २५ ॥
कथं भवतु साधर्म्यं निम्बस्य च नलस्य च। विपाके मधुरो निम्बः कटुरेव पुनर्नलः ॥ २६ ॥

किमत्र राजशब्देन विश्वातिशयवर्त्तिना । नरनामापि नाप्नोति दारत्यागीस दुर्मतिः ॥ २७ ॥
विहाय सह सत्त्वेन स निःसत्त्वः सधर्मिणीम् । तिष्ठन् कथमपि क्वापि जीवन्नपि मृतोपमः ॥ २८ ॥
किं तस्य जीवितव्येन नष्टनाम्नो दुरात्मनः । दमयन्त्यां विपन्नायां देव्यां विरहवह्निना ॥ २९ ॥
किं दुर्वहमभूत् तस्य कुतो वाप्यभवद् भयम् । यदेवं स परित्यज्य प्रनष्टः परमोपिवत् ॥ ३० ॥
यदि गन्ता भवेत् तत् किं तामापृच्छ्य न गच्छति । इति निर्दिष्टदेशस्थः कथं देवीमतापयत् ॥ ३१ ॥
राजाऽभविष्यद् भूयोऽपि प्राप्तः श्वसुरवेश्मनि । उभयोः प्राणसन्देहस्तेनेत्थं गच्छता कृतः ॥ ३२ ॥
वञ्चयित्वा प्रियां पत्नीं वनेऽपि स्रस्तशायिनीम् । चातुर्यं दर्शितं तेन सामर्थ्यमपि चात्मनः ॥ ३३ ॥
राज्यभ्रष्टस्य चेत् तस्य त्रपा श्वसुरवेश्मनि । न लज्जा तस्य लज्जालोस्तदित्थं त्यजति प्रियाम् ॥ ३४ ॥
दारत्यागमयं तस्य सामर्थ्याख्यं महद् यशः । आवां चित्रपटारूढां स्फुटं सर्वत्र कुर्वहे ॥ ३५ ॥
राज्ञां सभासु सर्वासु धिक्कारकलुषीकृतः । वीरसेनसुतः स्नातु न विद्मः केन वारिणा ॥ ३६ ॥
तदद्य ऋतुपर्णेऽपि तद् वृत्तं चित्रगोचरम् । शृण्वत्यस्मन्मुखोद्गीर्णं शृणोतु स भवानपि ॥ ३७ ॥
यतस्त्वमसि वै साक्षात् कुब्जरूपः परो नलः । सम्बन्धस्योपचारेण राजा राजपुमानपि ॥ ३८ ॥
इति श्रुत्वा कथां ताभ्यां कथ्यमानां प्रियाश्रयाम् । निषधाधिपतिर्भावैर्बहुभिर्व्याकुलोऽभवत् ॥ ३९ ॥
दिष्ट्या जीवति मे कान्ता तिष्ठन्ती मम चिन्तया । तद् दुःखदायिनं दुष्टं धिग् धिग् मां गूढचेष्टितम् ॥ ४० ॥

अहो ! पुनः कथं तस्या दर्शयिष्याम्यहं मुखम् । किं नाम तद् दिनं भावि यत्र सा मे मिलिष्यति ॥ ४१ ॥
नूनं चेत् सुगमा देवी तद्बन्धुभ्यस्त्रपा पुनः । मयि तत्र गते खिन्नाः किं वक्ष्यन्ति दमादयः ? ॥ ४२ ॥
अधुनैव निजं वृत्तं कथयाम्यनयोः पुरः । नष्टराज्योऽथवाद्यापि स्पष्टीभूय करोमि किम् ? ॥ ४३ ॥
यद् गा तदेव मे राज्यं यद् देव्या सह सङ्गमः । केन संभाविता ह्यासीत् जीवन्ती प्राणवल्लभा ॥ ४४ ॥
तद् गत्वा दुःखदीनां तां कान्तां संभावयाम्यहम् । अनित्ये जीवलोकेऽस्मिन् दुर्लभः खलु सङ्गमः ॥ ४५ ॥
तां विहाय वियुक्तोऽहं जीविष्यामि चिरं कियत् । परित्यज्य नदीं नीतो महामत्स्य इव स्थले ॥ ४६ ॥
स्पष्टीभूतस्य मे सर्वं वशवर्त्ति महीतलम् । किमशक्तिर्ममाद्यापि जेतुं सर्वान् महीभुजः ॥ ४७ ॥
ततस्त्यागात् परं वृत्तं तस्याः श्रुत्वाऽनयोर्मुखात् । चिह्नैर्विदितमात्मानं करिष्यामि तदाशये ॥ ४८ ॥

उच्चैस्तरां स्वमथ कुब्जमयोऽपि मेने नीचैस्तरां विहरति स्म तयोः समीपे ।
भूयस्तरां विततराज्य इवाजनिष्ट प्राणेश्वरीकुशलजीवितवार्त्तया सः ॥ ४९ ॥
गायन्तनावसरसीमनि तौ च तेने भूमीभुजः सदसि दर्शनमानपूर्वम् ।
आनापितं तदतुलं नलमीमपुत्र्योश्चित्रस्थितं चरितमुच्चरतः स सम्यक् ॥ ५० ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने षष्ठे स्कन्धे पञ्चमः सर्गः ॥ ५ ॥

---

## षष्ठे स्कन्धे षष्ठः सर्गः ।

ततः प्रववृते तत्र तदपूर्वं नलायनम् । मूर्छन्निव जनो जज्ञे यदाकर्ण्य विलोक्य च ॥ १ ॥
द्यूतहारितसर्वस्व घोरधर्माकुले पथि । यतश्चरणचारेण वैदर्भी नलमन्वगात् ॥ २ ॥
अस्तोकशोकसंतप्तां तटाकतटसंस्थिताम् । यथा च ललितैर्वाक्यैस्तां समाश्वासयन्नलः ॥ ३ ॥
प्रियामेकाकिनीं सुप्तां निशि विश्वस्तशायिनीम् । स खड्गखण्डितक्षौमः परित्यज्य यथा ययौ ॥ ४ ॥
तत् तत् सर्वं सुदेवोक्तं शृण्वन्तश्चित्रगोचरम् । हाहारावमुखाः सर्वे शोषं प्रापुः सभासदः ॥ ५ ॥
भो भो भूपालशार्दूल ! नल ! युक्तमिदं तव । मा मैवमिति तं धर्तुं ऋतुपर्णोऽपि तत्त्वरे ॥ ६ ॥
प्रातर्नलमनालोक्य विलपन्तीं विसंस्थुलाम् । तां वीक्ष्य पतितां भूमौ जनः सर्वोऽप्यभाषत ॥ ७ ॥
निहतः किं न दिक्पालैः किं न वज्रेण ताडितः । किं न कालाहिना दष्टः किं न दग्धो दवाग्निना ॥ ८ ॥
न किं कवलितः पृथ्व्या विपन्नः किं न वा स्वयम् । स्त्रीघातपातकं कृत्वा जिजीव स कथं नलः ॥९॥ युग्मम् ॥
इति लोकापवादाग्निज्वालापटलपीडितः । कर्कोटकविषार्त्तोऽपि नलः कुब्जः सुखं ययौ ॥१०॥
असावजगरेणात्र ग्रस्यते नलवल्लभा । अहो कश्चिदपि त्राता वर्त्तते साहसी नरः ॥ ११ ॥
इति जल्पति शाण्डिल्ये भूत्वा पात्रावतारवत् । निजं विस्मृतकुब्जत्वं जजल्प निषधाधिपः ॥ १२ ॥

मम मर्भुर्नलस्य त्वं व्यलीकेन च यत् पुनः । हा प्राप्तासि कथं देवि ! दमयन्ति ! दशामिमाम् ॥ १३ ॥
त्यज त्यज भयं भीरु ! भृत्ये संनिहिते मयि । अतः परं हि संब्रूहि भूयः किं करवाणि ते ? ॥ १४ ॥
मार्जयामि दृशोर्बाष्पं वपुः प्रक्षालयामि ते । प्रसीद मृदुभिर्वृत्तिं विधेहि विविधैः फलैः ॥ १५ ॥
इति तास्तस्य निःशङ्काः प्रत्यासन्नभ्रमा गिरः । परैरप्रत्यभिज्ञाता विप्राभ्यामभिजज्ञिरे ॥ १६ ॥
किरातकृतवैदर्भीकेशामर्शक्षणे पुनः । शोकेनैव परे रुद्धा ह्रीरोपाभ्यां स केवलम् ॥ १७ ॥
व्यतीतवृत्तचित्रेऽस्मिन् कुब्ज ! कोऽयं भ्रमस्तव ? । इति जग्राह तं राजा विनिर्धूतासिमुद्यतम् ॥ १८ ॥
गिरिगह्वरमध्यस्थां दुस्तरे तपसि स्थिताम् । सहसा स प्रियां प्रेक्ष्य रुरोद सदसि स्थितः ॥ १९ ॥
गृहे मातृप्रमुदास्यं दमयन्त्या दधानया । नलस्य विदधे चित्ते कुब्जत्वं युक्तमात्मनः ॥ २० ॥
पुनः पितृगृहे देवीं सुस्थितां तस्य पश्यतः । इन्द्रसेनगतं प्रेम सहस्रगुणतां दधे ॥ २१ ॥
इत्थं गुदरशाण्डिल्यौ तत्रोद्गीर्णप्रवद्रुकौ । दत्तप्रसाधनौ राजा निन्ये कुब्जः पुनर्गृहम् ॥ २२ ॥
स्वयं स्थालीषु निक्षिप्य भक्ष्यजातं चतुर्विधम् । चक्रे रसवतीं रम्यां सूर्यपाकां तयोः कृते ॥ २३ ॥
न धूमश्यामले दृष्टी न मषीमलिनौ करौ । न श्रमाम्बुजडं गात्रं न फूत्कारक्रमक्रमः ॥ २४ ॥
स्वाग्र्यं सुकुमारत्वं शुचितातिसुगन्धता । विच्छित्तिरविलम्बश्च देशकालादिरूपता ॥ २५ ॥
इत्यलौकिकमुद्दामं सूपकारस्य तस्य तौ । विप्रौ रसवतीकर्म तदपूर्वमपश्यताम् ॥ २६ ॥ युग्मम् ॥

बुभुजाते यथाशक्ति भक्त्या तत्परिवेषिणम् । न सेहे तद्रसज्ञा तु कर्त्तुं तद्रसनिर्णयम् ॥ २७ ॥
ततः सरस्वतीपूजा नैवेद्यास्वादनादिना । नलोऽयमिति निःशङ्कं प्रतीतिरभवत् तयोः ॥ २८ ॥
ऊचतुश्च यथा कुब्ज ! त्वं महात्मा महीतले । नूनं स नलभूपालस्त्वयि जीवति जीवति ॥ २९ ॥
भोजनादमृतास्वादस्तीर्थयात्रा च दर्शनात् । अदारिद्र्यं महादानात् त्वया नौ प्रतिपादितम् ॥ ३० ॥
किं न प्रयोजनं सिद्धमावयोस्तत्र दर्शनात् । केवलं नलभूभर्त्तुर्वार्त्ता लब्धा नहि क्वचित् ॥ ३१ ॥
तदस्तु स्वस्ति ते कुब्ज ! व्रजामो बत साम्प्रतम् । कुण्डिनस्य हि मुक्तस्य बहवो वासरा गताः ॥ ३२ ॥
इतो गताभ्यामावाभ्यां विज्ञप्ता भीमनन्दिनी । अप्राप्तनलवृत्तान्ता न विद्मः किं करिष्यति ॥ ३३ ॥
तयोस्तद् वचनं श्रुत्वा बभाषे कुब्जनैषधः । विप्रौ ! यदि हि गन्तव्यं प्रेपयिष्याम्यहं ततः ॥ ३४ ॥
दिष्ट्या युष्मत्प्रसङ्गेन जीवन्ती भीमजा श्रुता । दिष्ट्या तस्य च भूभर्त्तुर्भीमस्य कुशलं श्रुतम् ॥ ३५ ॥
तत् तस्याः प्रणतिर्वाच्या दमयन्त्याश्च मामकी । सर्वस्वं च शरीरं च देव्या एवैतदिष्यताम् ॥ ३६ ॥
तस्यां हि किल जीवन्त्यां क्वापि राजापि संभवेत् । इन्द्रसेनोऽथवा राज्यं निजं नेतुं भवेत् प्रभुः ॥ ३७ ॥
ममापि भवति स्थानं विदेशपतितस्य च । न विना निषधां क्वापि मुहूर्त्तमपि मे रतिः ॥ ३८ ॥

तद् गच्छतं द्विजवरौ पुनरागमाय कल्याणमस्तु युवयोर्विषमेऽपि मार्गे ।
सर्त्तव्य एष निजदेशमपि प्रपन्नैः स्वल्पोऽपि हि व्यतिकरः कथनं किमन्यत् ॥ ३९ ॥

अयमेव नलः इति दूतयोः प्रतीतिः ॥

इत्युक्त्या तरलतुरङ्गयानदानप्रीतौ तौ विततवितीर्णवित्तवस्त्रौ ।
विप्रेन्द्रौ कृतदयितामनः प्रवेशः स्वं देशं प्रति विससर्ज भूमिपालः ॥ ४० ॥
तत्र निर्गतवति द्विजयुग्मे तिग्मभानुरिव दुःसहदीप्तिः ।
किं किलात्र भवितेति नितान्तं भूभृतां पतिरचिन्तयदन्तः ॥ ४१ ॥
नगरगिरिसरिद्द्रुमौघसर्गं कथमपि मार्गमतीत्य दाक्षिणात्यम् ।
पुनरधिगतकुण्डिनौ द्विजौ तौ नृपतिगृहं प्रतिजग्मतुः क्षणेन ॥ ४२ ॥
तत्रासद्वयविदेशदेशमरसं कुब्जस्य योगं तथा तास्तास्तस्य कथाः स विभ्रमभरस्तत् तत् कलाकौशलम् ।
तत् दानं तमुदन्तमन्यतिकरं भीमस्य राज्ञः पुरो देव्याश्चापि दमस्वसुः क्रमगतं ताभ्यां बभाषे रहः ॥ ४३ ॥
इतिश्रीमाणिक्यदेवसूरिकृते नलायने षष्ठे स्कन्धे षष्ठः सर्गः ॥ ६ ॥

---

## षष्ठे स्कन्धे सप्तमः सर्गः ।

---

तमथाकर्ण्य वृत्तान्तमद्भुतं भीमभूपतिः । इदमेतदिति ज्ञातुं प्राज्ञोऽपि हि न चक्षमे ॥ १ ॥
उवाच दमयन्ती च देवी विस्मितमानसा । पूर्वं न नाम नो राज्ये कुब्जोऽभूत् कोऽपि तादृशः ॥ २ ॥

न च मुक्त्वा नरेन्द्रं तममुष्मिन् पृथिवीतले । कश्चिद् रसवतीं वेत्ति सूर्यपाकां नरः परः ॥ ३ ॥
दारिद्र्यघातकं दानं बलं गजविजित्वरम् । मयि चात्यन्तिकी प्रीतिस्तस्येति किमसंस्तुतम् ॥ ४ ॥
पश्य राजा नलः श्रीमान् पुण्यश्लोकः स धीनिधिः । कथं परगृहे सेव्यं कुर्वाणो घटते क्वचित् ॥ ५ ॥
तत् तादृग् दृग्विषं शोच्यं प्रायः स्वपरविप्रियम् । निर्निमित्तं समुत्पन्नं कुब्जत्वं तस्य वा कुतः ? ॥ ६ ॥
तथा च त्वां परित्यज्य निर्जने यो विनिर्ययौ । स त्वां संभावयन् भूयः कथं गुणिनि गण्यते ? ॥ ७ ॥
तत् सर्वथा च स नलः कुब्जकोऽपि स निश्चितम् । नलेनैव च सा विद्या तस्य दत्ता भविष्यति ॥ ८ ॥
भवन्ति हि नरेन्द्राणां स्वयमक्लेशकारिणाम् । केचिद् विश्वासपात्राणि येषु सर्वं निधीयते ॥ ९ ॥
दानिनो बलवन्तश्च किं न स्युर्नृपसेवकाः । स्वामिभक्ततया प्रीतिस्त्वयि तस्य च नान्यथा ॥ १० ॥
तदित्थं कथमस्माकं योग्यः संभावनाय सः । स्वार्थमेव पुरस्कृत्य महत्त्वं न विमुच्यते ॥ ११ ॥
तद् मुञ्च विभ्रमं वत्से ! माभूद् लोकस्य हास्यता । यदि जीवति रक्तो वा तदायातु नलो नवा ॥ १२ ॥
अत्र तिष्ठ सुखं पुत्रि ! सर्वं राज्यमिदं तव । आनेष्यते नलः सम्यग् यदि स ज्ञास्यते क्वचित् ॥ १३ ॥
इति श्रुत्वा पितुर्वाचं व्याकुलापि नलप्रिया । तथेति शिरसा नत्वा जगाम निजमन्दिरम् ॥ १४ ॥
न जजल्प न सुष्वाप न ममज्ज ववल्ग न । न जहास न चिक्रीड न बभ्राम भ्रमेण सा ॥ १५ ॥
ततः प्रियङ्गुमञ्जर्या मातुः संप्राप्य सन्निधिम् । रुरोद गद्गदं तन्वी बाष्पक्लिन्नपयोधरा ॥ १६ ॥

परिरम्य तया गाढं सा समाश्वासिता सती । जगाद मृदुभिर्वाक्यैर्दुःखदग्धेन चेतसा ॥ १७ ॥
कस्मादहमिह प्राप्ता किं मे पितृगृहेण वा ? । कार्यं किमिन्द्रसेनेन किं पुत्र्या किं सुखेन वा ? ॥ १८ ॥
वरं न गलिताऽरण्ये वरं हिंस्रैर्न भक्षिता । वरं न विहितो मृत्युस्तपसानशनेन वा ॥ १९ ॥
राज्यभ्रष्टस्य मूढस्य छलितस्य वियोगिनः । कुलीनस्य महाबाहोर्बलिनो बहुमानिनः ॥ २० ॥
दूरदेशान्तरस्थस्य गुप्तरूपस्य कारणात् । ज्ञात्वापि निजया बुद्ध्या भर्तुश्चिन्तां करोमि न ॥ २१ ॥ युग्मम् ।
अहमद्यापि जीवामि जल्पामि निरपत्रपा । धिग् धिग् मामसतीं पापां निःसत्त्वां भर्तृवैरिणीम् ॥ २२ ॥
अस्ति नूनं विनीतायां कुब्जरूपेण मे प्रियः । ददानो मयि संदेशान् लज्जाविनयनिर्भरान् ॥ २३ ॥
यदि मे कश्चिदत्र स्यात् पिता माता परोऽपि वा । तत् किमित्थमिदं कार्यं मदीयं खिलतां व्रजेत् ॥ २४ ॥
आकाशात् पतिता माहं धरित्र्या स्वीकृताऽथवा । विलपामि वने शून्ये को मे दुःखेन गृह्यताम् ॥ २५ ॥
कुब्जः परगृहे दास्यं करोति स कथं नलः ? । इत्यमी पूर्वपक्षा मे बन्धूनां कुधियामिव ॥ २६ ॥
अस्मिन् महति संसारे नानाश्चर्यसमाकुले । प्राणिनामत्यसंभाव्यमपि संभाव्यते न किम् ? ॥ २७ ॥
स्वर्गान्निर्जरश्रेष्ठो नरो नहुषः सर्पतां ययौ । कुष्ठी सनत्कुमारोऽभूत् सौदासोऽभूत नराशनः ॥ २८ ॥
गर्दभास्योऽभवद् ब्रह्मा षण्ढश्चासीद् महेश्वरः । इन्द्रः सहस्रनेत्रोऽभूदेकाक्षोऽजनि भार्गवः ॥ २९ ॥

विश्वामित्रवशिष्ठौ च बकाडी समजायताम् । कोऽयं नलस्य कुब्जत्वे मतिमोहो महात्मनाम् ॥ ३० ॥
तारलोचनया चैतत् कथं ज्ञानमभूत् कचित् । राज्यभ्रष्टः पतिर्यद् मे म्लेच्छदास्यं करिष्यति ॥ ३१ ॥
पूर्वं दुर्वाससः शापात् निःस्त्रीकोऽभूद् न वासवः । नासन् कति तथा दुःस्थाः पार्थिवाः सुरथादयः ॥ ३२ ॥
कस्येयं किल कल्लोलसहस्रसंवासवर्द्धिता । श्रान्तापि तनया वार्धेर्दधाति निलये पदम् ॥ ३३ ॥
अद्यापि स तु मे भर्त्ता राज्ञो मित्रतया स्थितः । दाता भोक्ता शुचिः श्रीमान् धर्मात्मा वत्सलो बली ॥ ३४ ॥
तेन कारणगर्भो न विविधव्यङ्ग्यभङ्गिभिः । प्रकाशीकृत एवात्मा न परं लोकवर्त्मना ॥ ३५ ॥
मम जन्मनि तद् वाक्यं सा च स्तम्भेऽक्षरावली । ते ते च शकुनाः स्वप्नास्तास्ताश्च ज्ञानिनां गिरः ॥ ३६ ॥
प्रतीतिमिव कुर्वन्त्यो नित्यं पार्श्वस्थिता इव । कथयन्त्येव मे भर्त्तुर्भरतार्द्धस्य संपदम् ॥ ३७ ॥ युग्मम् ॥
पत्रमुख्यफलोपेतमुत्तुङ्गं कलकोकिलम् । अद्य स्वप्ने समारूढा सहकारमहं किल ॥ ३८ ॥
तत् संप्रति विनीतायां जानन्त्यपि निजप्रियम् । किं करोमि ? क्व गच्छामि ? कस्य वा कथयाम्यहम् ॥ ३९ ॥
इति तां रुदतीं पुत्रीं बाष्पाविलविलोचनाम् । आश्वासयितुमारेभे जननी घननीतिवत् ॥ ४० ॥
वत्से ! बिभृहि गाम्भीर्यं दैन्यं त्यज धृतिं भज । त्वामित्थं वीक्ष्य वक्षो मे दलतीव हि भामिनि ! ॥ ४१ ॥
श्रुत्वापि कुब्जवृत्तान्तं यत्त्वं तातेन वारिता । तदत्र कारणं वत्से ! विदत्यपि न वेत्सि किम् ? ॥ ४२ ॥

ईदृक् सांशयिकं कार्यं बालोऽप्यारभते कथम् ? । किं पुनर्जगतीमुख्या महात्मानो महाभुजाः ॥ ४३ ॥
ममाप्यनुमतं चैतद् वक्तुं कर्त्तुं च सर्वथा । तथापि तत्र वात्सल्याद् मन्त्रोऽयं क्रियते मया ॥ ४४ ॥
सूर्यपाकादभिज्ञानात् कुब्जः किल नलः स चेत् । तत्र तत् प्रेक्षतां दूतो नृपतेः शासनादिव ॥ ४५ ॥
स वक्ष्यति मृषावादी कृतकामन्त्रणोद्यतः । ऋतुपर्णं समासीनं राजानमिति यत् किल ॥ ४६ ॥
विमुक्तनलशोकाया दमयन्त्याः पितुर्गिरा । प्रातः स्वयम्वरः सम्यग् भूयोऽपि हि भविष्यति ॥ ४७ ॥
इति श्रुत्वा स कुब्जोऽपि धाविष्यति नलो यदि । निपतन्ति प्रियार्त्त्या हि व्योम्नः पारापता अपि ॥ ४८ ॥
एकेन्द्रियोऽपि यां यान्तीमनुधावति पारदः । तामन्वेष्टुं समीहन्ते पक्षौ कर्त्तुं हि मानवाः ॥ ४९ ॥
ततोऽश्वहृदयज्ञत्वाद् दूरदेशान्तरादिह । यद् यायास्यति वेगेन तद् नूनं नल एव सः ॥ ५० ॥
तदनु तमिति मातुर्मन्त्रमाकर्ण्य सम्यक् गलितहृदयदुःखा तत्क्षणं राजपुत्री ।
अतिकितवमुदारं चारुवेषं विशेषात् कुरुवकमिति नाम्ना प्रेषयामास दूतम् ॥ ५१ ॥
साकेताधिपतेर्निमन्त्रणमिषादामन्त्रितो नैषधः स्वार्थेनात्र स नैषधेन नृपतिर्नूनं समानेष्यते ।
नामाप्यत्र न न स्वयम्वरविधिर्मिथ्याभियोगाद्भुवौ प्राप्तस्त्वत्र कथं भविष्यति हहा ! मार्गश्वरोनिष्फलः ॥ ५२ ॥
भव्यं भवं जगति मानवमङ्गलब्धा मा कश्चिदस्तु विरही यदहं तथापि ।
एवंविधानि कपटानि करोमि मोहादित्यात्मनैव सुचिरं हृदि सा ललज्ज ॥ ५३ ॥

एतत् किमप्यनवमं नवमङ्गलाङ्कं यद् निर्ममे कितवचक्रशिरोऽवतंसः ।
तस्यार्यकर्णनलिनस्य नलायनस्य स्कन्धो जगाम गुहमस्तकसङ्ख्य एषः ॥ ५४ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने षष्ठे स्कन्धे सप्तमः सर्गः ॥ ७ ॥

समाप्तोऽयं षष्ठः स्कन्धः ।

## सप्तमे स्कन्धे प्रथमः सर्गः ।

ततः प्रहित्य तं दूतं वैदर्भी कूटगर्भितम् । आत्मानं मनसा मेने मनाग् दुर्ललितामिव ॥ १ ॥
सोऽपि संप्राप्य साकेतं कितवः कृत्यविद्वरः । नत्वा धर्मासनासीनं ऋतुपर्णं व्यजिज्ञपत् ॥ २ ॥
स्वामिन् ! भीमनृपः पुत्र्या दमयन्त्याः स्वयम्वरे । आमन्त्रयति हृष्टस्त्वां शीघ्रमागम्यतामिति ॥ ३ ॥
किन्तु गन्तुमितो राजन् ! अद्यैव प्रगुणो भव । प्रातरेव शचीपूजा यतस्तत्र भविष्यति ॥ ४ ॥
प्रहितस्य ममाभूवन् बहवो देव ! वासराः । वर्त्मनि ज्वरवैकल्याद् विलम्बोऽयमभूत् पुनः ॥ ५ ॥
अद्यापि हि समागत्य राजकार्यं मया कृतम् । कालक्षेपापराधं मे वैधुर्यात् क्षन्तुमर्हसि ॥ ६ ॥
मा स्म भूद् विस्मयोऽयं यद् भैमी भूयः पतिम्वरा । या परित्यज्य दिक्पालान् नलं वृतवती किल ॥ ७ ॥

नष्टे मृते पितुर्वाचा कल्याणी नवयौवना । कथं मा स्म करोद् देवी भर्त्तारमितरं किल ॥ ८ ॥

यदि पूर्वपनिर्देशाद् भाग्यहीनो विपद्यते । तत् कथं राजकन्यानां विफलं यातु यौवनम् ॥ ९ ॥

इति नलानुरागावेगरुद्धरोमाञ्चकञ्चुका । बभूव विस्मयौत्सुक्यक्षोभमूढेव सा सभा ॥ १० ॥

अहो ! कालस्य माहात्म्यं हन्त भोः किं न दृश्यते । कष्टं न कश्चिदप्युच्चैर्धिग् धिग् दुर्बोधतां विधेः ॥ ११ ॥

इति जल्पत्सु लोकेषु निम्मगम्भीगते नृपे । मूकेषु वन्दिवृन्देषु गायनेष्वपि मौनिषु ॥ १२ ॥

लीनासु वारनारीषु द्वास्थेषु निभृतेषु च । स्थितेषु कार्यवादेषु दूते वदति निस्तुषम् ॥ १३ ॥

तदप्रेमसंगाख्यमत्यासन्नमरुन्तुदम् । शृण्वन् निरुद्धनिःश्वासनिष्पन्दोऽजनि नैषधः ॥ १४ ॥

विसर्ज्य सभां राजा यियासुः तरलाशयः । कारयन् तस्य दूतस्य सदृशं पारितोषिकम् ॥ १५ ॥

कृच्छ्रेणापि स्वगृहं गत्वा स पृष्टः क्लिष्टचेतसा । उवाच कितवो वाक्यं धुन्वन् कुरुवकः शिरः ॥ १६ ॥

भूत एव न वैदर्भ्या निःसन्देहं स्वयम्वरः । इयता तत्र संप्राप्ताः कोटयः पृथिवीभुजाम् ॥ १७ ॥

यो न याति स निर्भाग्यो यो गच्छति स भाग्यवान् । कथं मुखमपि द्रष्टुं वैदर्भ्या लभ्यते कचित् ॥ १८ ॥

पार्श्वं मनोभवस्येव सत्यद्वारमिवात्मनः । न विद्मः कस्य कण्ठे सा वरमालां निधास्यति ॥ १९ ॥

इति जल्पितवाग्वात्या स मूलोन्मूलितोऽपि सन् । चकम्पे वृक्षवत् कुब्जः स्थैर्याद् यदि पपात न ॥ २० ॥

तस्य चिन्तयतः सम्यग् दमयन्त्या विपर्ययम् । क्रोधशोकस्मरोन्मादकिर्मीरितमभूद् मनः ॥ २१ ॥

दूतमुखात् भीमजायाः स्वयम्वरं ज्ञात्वा चलितः कुब्जः ॥

अद्याप्युदेति घर्मांशुरद्याप्युदयते शशी । अद्यापि वाति वातोऽपि ज्वलत्यद्यापि पावकः ॥ २२ ॥
अद्यापि वारिदो वर्षत्यद्याप्युप्तं प्ररोहति । अद्यापि जलधिः स्थाने स्थिराद्यापि वसुन्धरा ॥ २३ ॥ युग्मम् ॥
तत् कथं नाम विश्वेऽस्मिन् यथास्थानस्थितोऽपि हि । श्रूयते भीमजाताया देव्याश्चित्तविपर्ययः ॥ २४ ॥
सुरासुरसमक्षं मां वृत्वा पूर्वं स्वयम्वरे । इदं संप्रति कुर्वन्त्या भैम्या वज्रमयं वपुः ॥ २५ ॥
कष्टं हृदय ! हा कष्टं यन्मन्मथदवानलः । ददाह सलिलं शीतं गङ्गाया भीमजन्मनः ॥ २६ ॥
अहो ! मृत इति व्यक्तं मां विज्ञाय दुरात्मना । भीमेन श्रेयसे चक्रे सत्राकारः स्वयम्वरः ॥ २७ ॥
नूनं मयि स्थिते तेन काकानामिव भूभुजाम् । विषलिप्तमिदं भक्ष्यं दमयन्तीति कल्पितम् ॥ २८ ॥
श्मश्रुकेसरभाराद्यैरश्रुधाराभिघातिभिः । संप्रत्येव करोम्यद्य मुखाब्जैः पूजनं भुवः ॥ २९ ॥
नृसिंहस्य सटाभारं तक्षकस्य फणामणिम् । प्रियां च मे सत्त्ववतो जीवतः को जिघृक्षति ? ॥ ३० ॥
इति ध्यायन् स भूयोऽपि जगाम नृपमन्दिरम् । अत्यन्तकार्यतप्तानां कुतः शुद्धिं विना रतिः ॥ ३१ ॥
तमुवाच स्वयं राजा वयस्य ! स्वागतं तव । तद् योजय कथञ्चिद् मे भग्नमेकं मनोरथम् ॥ ३२ ॥
ब्रूहि प्रातः पुरे तस्मिन् दमयन्त्याः स्वयम्वरे । एकेनापि रथेनाशु कथं कथय गम्यते ॥ ३३ ॥
अनुगच्छतु सैन्यं नस्तावत्कालान्तरेऽपि हि । स्वयम्वरक्षणे तस्मिन् तत्र गन्तुं मम स्पृहा ॥ ३४ ॥
इह तावत् कथं कापि नलो नाविर्भविष्यति । इति मे कौतुकावेशः स्थातुमत्र ददाति न ॥ ३५ ॥

कुब्जोऽप्युवाच राजेन्द्र ! यदात्थ न तदन्यथा। दमयन्तीकृते मूर्खा मृषा ताम्यन्ति भूभुजः ॥ ३६ ॥
एकाकी कृपणः क्लीवः कुणिः कुब्जोऽथवापि सन् । न दास्यति नलो जीवन् ग्रहीतुं निजवल्लभाम् ॥ ३७ ॥
यस्तदर्थे मृतोऽप्येति भस्मीभूतोऽपि जीवति । परहस्तगतां पत्नीं नलः किं स तितिक्षते ॥ ३८ ॥
ततो यदि नवोत्कण्ठा द्रष्टुमेतत् प्रबन्धकम् । तत् त्वरस्व महीपाल ! कालक्षेपो विमुच्यताम् ॥ ३९ ॥
ममाश्वहृदयज्ञस्य निष्ठितो नलसारथेः । योग्ययुग्ययुगप्राप्त्या किञ्चिद् दूरं न भूतले ॥ ४० ॥
अनभ्युदितगत्यर्के वाद्यमानासु भेरिषु । ममारोप्यरथेन त्वां नेतुं शक्तिः स्वयम्वरे ॥ ४१ ॥
इति श्रुत्वा स्वयं राजा कुब्जं कुर्वन् स्वयं करे । मन्दुरासु दुरासाद्यान् दर्शयामास वाजिनः ॥ ४२ ॥
नानाकेशाः पृथग्वर्णाः सुरक्षितसुशिक्षिताः । न ते रुरुचिरे तस्मै तुरङ्गास्तरुणा अपि ॥ ४३ ॥
किमकुशलभग्नायैरेवरूक्षदवाग्निभिः । अमीभिर्नाथहारिभिर्हरिभिः पशुभिर्भवेत् ॥ ४४ ॥
इति ब्रुवन् स सर्वत्र पश्यन् सर्वान् विशारदः । स्वीचक्रे नैकमप्यश्वं हयानामपि कोटिषु ॥ ४५ ॥
ततो हेषारवैः शून्यां कुर्वन्तौ दूरतोऽपि हि । प्रतिपदे नलः कौचित् सामान्यावेव वाजिनौ ॥ ४६ ॥
साश्चर्यपरिपूर्णस्य ऋतुपर्णस्य पश्यतः । युयोज स रथं ताभ्यां पाणौ प्रवयणं दधत् ॥ ४७ ॥
उभे चामरधारिण्यौ छत्रभृत् स्थगिकाधरः । राजा कुब्ज इति स्वैरं निषेदुस्तत्र पट् रथे ॥ ४८ ॥
मग्ने भानौ जलनिधिजले सान्द्रगन्ध्याङ्गरागं दिङ्नारीषु स्फुटतमतमो लोचकप्रावृतासु ।

पश्यत्युच्चैर्नलविलसितं व्योम्नि नक्षत्रनेत्रैर्मन्दं मन्दं पुरपरिसरं प्राप सस्यन्दनोऽपि ॥ ४९ ॥

निःशङ्करङ्कुषु निरङ्कुशकौशिकेषु निःकूजपक्षिषु निरन्तरपादपेषु ।
निस्तन्द्रचन्द्रकिघनेषु वनेषु तेषां मिष्टा रथोदरजुषामजनिष्ट गोष्ठी ॥ ५० ॥

अद्याप्यस्ति प्रथमरजनीयातमेकं मुहूर्त्तं वर्त्तन्तेऽमी शिरसि बहलाः सान्द्रचन्द्रातपा भूः ।
शीतो वायुः सुरभिरभितो धेनवः पिङ्गलानां यातुः श्रेष्ठं तदिति जगदुस्ते मिथः स्यन्दनस्थाः ॥ ५१ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने सप्तमे स्कन्धे प्रथमः सर्गः ॥ १ ॥



## सप्तमे स्कन्धे द्वितीयः सर्गः ।

अथोवाच नृपः कुब्जं नोदयाश्वान् द्रुतं द्रुतम् । न गम्यं लीलया सार्द्धं योजनानां शतद्वयम् ॥ १ ॥
कुब्जोऽप्युवाच मा राजन् ! विषीद मयि यन्तरि । मम प्रेरयतो वाहानसौ करतलं मही ॥ २ ॥
कियत् तत् कुण्डिनं नाम यत्र यामेन गम्यते । अनास्थ्यमूल एवायं प्रमादः प्रेरणे मम ॥ ३ ॥
तदाश्व ! प्रगुणीभूय पूरयामि रतिं तव । इति स प्राजनोत्क्षेपं मुक्तरश्मिरनोदयत् ॥ ४ ॥
तलो न गिरयो गर्त्ता न कम्पो न च वालुका । न नद्यो न नदोद्देशा न तृणानि न वीरुधः ॥ ५ ॥

न स्थलं न जलं किञ्चिद् न किञ्चिद् विषमं समम् । वातस्थ इव पर्जन्यः स ययौ सर्वथा रथः ॥ ६ ॥ युग्मम् ॥
भ्रमतीह महीचक्रमायान्तीव पुरो दिशः । व्योम विस्तरतीव द्राक् संक्षिप्यन्त इवाद्रयः ॥ ७ ॥
न पोतः स्खलनकारी न बाणा यान्ति दूरतः । न निर्दिष्टगतिर्वायुर्न सुस्थितरलं मनः ॥ ८ ॥
अपूर्वः कश्चिदेतस्य स्यन्दनस्य पुनर्जवः । दृष्टः श्रुतोऽथवास्माभिर्नियन्ता कश्चिदीदृशः ॥ ९ ॥
इति चिन्तयतो राज्ञस्तीव्रवेगापकर्षितम् । पपात सहसा मूर्ध्नश्चिन्तया सह वेष्टनम् ॥ १० ॥
तदर्थं गतिं स्थाने स्मित्वा कुब्जोऽप्यभाषत । योजनैः पञ्चविंशत्या पश्चात् तन्मूर्द्धवेष्टनम् ॥ ११ ॥
गन्त्रिना यदि वाहाः स्युस्ततोऽपि द्विगुणं भवेत् । तद् विमुञ्च तदा क्षेपं विदर्भाः पुरतोऽधुना ॥ १२ ॥
तदुपश्रुत्य राजापि सस्मितं विस्मितोऽवदत् । तवापि वलतः किञ्चिद् दर्शयिष्यामि कौतुकम् ॥ १३ ॥
अहं सर्वपदार्थानां सङ्ख्यां जानामि लीलया । अधुना तत्परीक्षायां कालक्षेपो भवेत् पुनः ॥ १४ ॥
तस्य तद् वचनं श्रुत्वा विद्यार्थी तत् क्षणं नलः । कालक्षेपभयं मुक्त्वा सत्वरोऽभूत् परीक्षितुम् ॥ १५ ॥
ततस्तत्प्रेरितो राजाप्यक्षवृक्षस्य कस्यचित् । एकषष्टिसहस्राणि फलसङ्ख्यां समादिशत् ॥ १६ ॥
रथादुत्तीर्य कुब्जोऽपि पादघातेन पादपम् । ताडयन् पातयामास फलानि सकलान्यपि ॥ १७ ॥
तदा तद्वृक्षमध्याच्च कश्चिद् घोराकृतिर्नरः । प्रादुरास दुरालोक्यो दुर्गन्धो दुर्भगः कृशः ॥ १८ ॥
स पूर्वं दीर्घकायोऽपि क्षणाद्ध्रस्वतरोऽभवत् । स्थित्वा रत्निप्रमाणाङ्गः प्राञ्जलिस्तत्पुरोऽभवत् ॥ १९ ॥

अहो कस्त्वमिति क्रोधात् स पृष्टो वैरसेनिना । कथञ्चिद् विनमद् मूर्द्धा प्रत्युवाचस गद्गदम् ॥ २० ॥
देव ! दीनोऽस्मि मा कोपं कृपापर ! कुरुष्व तत् । पुण्यश्लोक ! सशोकं मां सौम्यदृष्ट्या विलोकय ॥ २१ ॥
येन तेऽपहृतं राज्यं येन द्यूते मतिः कृता । यः प्रियात्यागहेतुस्ते येनेत्थं त्वं विडम्बितः ॥ २२ ॥
स दुरात्मा दुराचारः करालः कलिरस्म्यहम् । समक्षं सर्वदेवानां प्राप्तोऽभूवं भवद्वधे ॥ २३ ॥
त्वदीयं देहमास्थाय तस्थुषापि चिरं मया । दूरेऽस्तु प्राणनाशस्ते न धैर्यमपि नाशितम् ॥ २४ ॥
सत्यमेव सतां धैर्यं दुर्जनैर्न विहन्यते । ज्वलन्नप्यनिशं कुर्यात् किमब्धौ वडवानलः ॥ २५ ॥
राज्यभ्रंशमपि प्राप्य व्यामूढेनापि हि त्वया । न क्वचिद् भाषितं दैन्यं न लुप्तश्च विधिः क्वचित् ॥ २६ ॥
तितिक्षात्यागशीलेन सत्यसन्तोषवृत्तिना । परद्रव्यनिरीहेण वाहिता दिवसास्त्वया ॥ २७ ॥
अनाकाङ्क्षमनीर्ष्यालुमहिंसकमनिन्दकम् । समर्थमपि दुःखेषु नाद्राक्षं त्वामिवापरम् ॥ २८ ॥
यद् दहन्ति न मार्त्तण्डा न क्षुभ्यन्ति यदब्धयः । यच्च शक्त्या तितिक्षन्ते तेनेदं वर्त्तते जगत् ॥ २९ ॥
न शक्तं सर्वथा राजन् ! कर्त्तुं किञ्चिद् मया त्वयि । केवलं देव ! दग्धोऽस्मि वैदर्भीशापवह्निना ॥ ३० ॥
तदित्थं यातनालक्षैः प्रापितः प्राणसंशयम् । एष त्यक्त्वा भवद्गात्रं निर्गतोऽस्मि जिजीविषुः ॥ ३१ ॥
क्षमस्व मे महाराज ! दुर्विनीतस्य दुष्कृतम् । अगोचरचरित्रस्त्वं वीरसेनकुलोद्वह ! ॥ ३२ ॥
नास्ति भग्नप्रतिज्ञस्य दिवि देवेषु मे स्थितिः । तद्बिभीतक एवायं शरणं सर्वथा मम ॥ ३३ ॥



कुब्जरूपात् नलदेहात् निर्गतः कलिः ॥

गः कश्चिदक्षवृक्षस्य छायामस्य श्रयिष्यति । श्रेयस्तस्य हरिष्यामि मुक्त्वा त्वन्नामवादिनः ॥ ३२ ॥
किमन्यद् यत्र कुत्रापि तव नाम भविष्यति । तस्मात् स्थानात् व्रजिष्यामि शार्दूलः पावकादिव ॥ ३५ ॥
इति ब्रुवाण एव द्राक् स तत्रान्तरधीयत । राजास्थे हृदये गाढं तस्थौ मुदितविस्मितः ॥ ३६ ॥
तत्क्षणादेव चोत्पन्नप्रज्ञापौरुषपाटवः । मुक्तभारमिवात्मीयं मेने लघुतरं वपुः ॥ ३७ ॥
तदा स निजहस्ताभ्यामभ्यासरभसा भृशम् । फलानि गणयन् सद्यः प्राप सङ्ख्यां यथोदिताम् ॥ ३८ ॥
तमक्षहृदयं मन्त्रं ऋतुपर्णादयाचत । सोऽप्यश्वहृदयं तस्य पणीकृत्य प्रदत्तवान् ॥ ३९ ॥
मिथः साधितमन्त्रौ तौ सद्यः प्रत्ययविस्मितौ । जवेन प्रापतुः प्रातः कुण्डिनस्यातिसन्निधिम् ॥ ४० ॥

नृपतियुगलमेतत् स्यन्दनस्थं तदुच्चैरतिविरचितचित्रं वीक्ष्य तं विश्वचक्षुः ।
निजरथमधिरुह्य स्वेच्छयेव प्रपेदे भिदुरतमतमिस्राद् दुर्दिनं व्योममार्गम् ॥ ४१ ॥
उत्सवव्यतिकरप्रतिकूलं वीक्ष्य तत्परिसरं तु समन्तात् ।
व्याकुलो भृशमभूदृतुपर्णो वैरसेनिरजनिष्ट च हृष्टः ॥ ४२ ॥
नहि परिसरभूमौ पार्थिवानां निवेशा नगरमपि मृदङ्गध्वानधीरं न तावत् ।
न किमपि रमणीयं नैव किञ्चिद् विरूपं पुरमिदमविकारं वर्त्तते तु प्रकृत्या ॥ ४३ ॥
तदिह सकथमुच्चैरुत्सवो जातपूर्वः कथमथ भविता वा दूरकालान्तरेण ।

कितवजनवचोभिर्विप्रलब्धा वयं वा वत समजनि कोऽयं हास्यकारी प्रयासः ॥ ४४ ॥
किमिह ननु विधेयं दुःपरिच्छेद्यमेतद् जनमितरमिहार्थे लज्जते प्रष्टुकामः ।
किमपरमिह साक्षादागतैर्भूयते वा भवतु सपदि राजद्वारमेवाश्रयावः ॥ ४५ ॥
इति वदति नरेन्द्रे नैषधः कुब्जरूपः स्फुटविघटितकेतुः प्राक्प्रतोलीं प्रविश्य ।
सरभसमुपसर्पन् बोधयामास सद्यः तमतिरथमुपेतं कोशलानामधीशम् ॥ ४६ ॥

इति श्री माणिक्यदेवसूरिकृते नलायने सप्तमे स्कन्धे द्वितीयः सर्गः ॥ २ ॥

## सप्तमे स्कन्धे तृतीयः सर्गः ।

आकर्ण्यैकरथेनैव तमतर्कितमागतम् । किमेतदिति वैदर्भः सहसा विस्मितोऽभवत् ॥ १ ॥
उद्दाममहिमाम्भोधिः स्वभावसरलाशयः । न सम्यक् तमसम्भाव्यं स्त्रीप्रपञ्चं विवेद सः ॥ २ ॥
कथं रिपुभिरुत्क्षिप्तः किं वादिविजयोद्यतः ? । अनामन्त्रित एवायं न महानुपतिष्ठति ॥ ३ ॥
भवतु ज्ञास्यते तावदिति चित्तेऽवधार्य सः । दिदेश तत्प्रवेशाय दमनं सपुरोधसम् ॥ ४ ॥
यथावद् विहितातिथ्यं प्रविशन्तं विशांपतिम् । प्रत्युज्जगाम तं भीमः श्रीमान् मानप्रदः सताम् ॥ ५ ॥

प्रणमन्तं तमाश्लिष्य युक्तिसंपादितासनम् । कुशलप्रश्नपूर्वेण विधिना पर्युपाचरत् ॥ ६ ॥
क्षणाद् भीमनिसृष्टोऽसौ निर्दिष्टं तन्नियोगिभिः । अध्युवास विशामीशः प्रशस्यामुपकारिकाम् ॥ ७ ॥
तं तत्र कृतविश्रामं सावहित्थमकृद्धदम् । समागत्य महामात्यः सप्रणामं व्यजिज्ञपत् ॥ ८ ॥
दिष्ट्या सुचरितार्थाः स्म दिष्ट्या धन्यमिदं दिनम् । सूर्यवंशावतंसस्त्वं नरेन्द्रो यदुपस्थितः ॥ ९ ॥
नात्मनागमनेनाद्य विदर्भाणामधीश्वरः । न केवलं प्रहृष्टोऽभूद् जातः सुकृतवानपि ॥ १० ॥
न कस्य कृत्ये निर्व चित्रमात्रपरिच्छदः । रात्रियात्रानिमित्तोऽयं तव प्रातः समागमः ॥ ११ ॥
न नास्ति दैवदुर्योगदौर्मनस्य कथापि हि । तद् वदत्येव ते लक्ष्मीलताकाननमाननम् ॥ १२ ॥
तत् किञ्चित्पर कार्यं येनासि स्वयमागतः । दूतसाध्येषु कृत्येषु न राज्ञां स्वयमुद्यमः ॥ १३ ॥
तत् समादिश निःशङ्कं सूर्यवंश्याय भूभुजे । अभीष्टातिथये तुभ्यं किमातिथ्यं विधीयताम् ॥ १४ ॥
ततः कुब्जमुखं पश्यन् स नृपः प्रत्युवाच तम् । अहो सर्वं प्रकृत्यापि परायत्तं महात्मनाम् ॥ १५ ॥
अमात्य ! कुरु सन्तोषं न किञ्चिद् न्यूनमस्ति मे । महाराजस्य चैवायं प्रसादो मम मूर्द्धनि ॥ १६ ॥
आधिव्याधिविनिमुक्तोऽहमुत्कण्ठातरलाशयः । प्रणन्तुमेव संप्राप्तः केवलं कुण्डिनेश्वरम् ॥ १७ ॥
इयं विजयतां दिष्ट्या द्वयोर्वा पृथिवीभुजोः । अविसंवादिनी प्रीतिर्धनदेश्वरयोरिव ॥ १८ ॥
नूनमादक्षिणाम्भोधेराहिमाद्रिमियं मही । एकशृङ्खलितेवास्तु गतायातैः परस्परम् ॥ १९ ॥

इत्युक्त्वा लब्धताम्बूलः प्रणम्य स विनिर्ययौ । प्रपेदे तेन वितर्तां प्रीतिं भीमरथोऽपि हि ॥ २० ॥
तं तथागतमाकर्ण्य सकुब्जं नृपमागतम् । दमयन्ती दधौ चित्ते जनन्या सह विस्मयम् ॥ २१ ॥
जामातैव ध्रुवं चाम्ब ! निर्विलम्बमयं तव । दूतोक्तदिवसादूर्ध्वं रात्रिरेवान्तरे गता ॥ २२ ॥
न कश्चिद् वेत्ति तं मुक्त्वा खेचरस्वामिनं विना । तुरङ्गहृदयं मन्त्रं ऋतुपर्णः परोऽपि वा ॥ २३ ॥
वत्से ! वदसि तत् सत्यं प्राप्तो मे दुहितुः पतिः । तथापि कुब्जरूपस्य निर्णयोऽस्य विधीयताम् ॥ २४ ॥
तमद्य हस्तसंप्राप्तमृतुपर्णस्य सेवकम् । प्रविश्य विविधोपायैर्वितर्कयतु केशिनी ॥ २५ ॥
इति ताभ्यां समादिष्टा केशिनी मर्मवेदिनी । ययौ कारणदासी सा तत्र विद्याधराङ्गना ॥ २६ ॥
स्फुरत्पक्ष्मपुटद्वन्द्वं तच्चक्षुर्दक्षिणेतरम् । लोलत्वेऽपि नलप्राप्तौ चकार स्थिरनिश्चयम् ॥ २७ ॥
सहितामिन्द्रसेनेन कराङ्गुलिविलम्बिना । तां ददर्श समायान्तीं साभिप्रायतया नलः ॥ २८ ॥
नूनं सुदेवतः श्रुत्वा सूदं मां सूपपाकिनम् । छद्मस्वयम्वरोदन्तो दमयन्त्या प्रपञ्चितः ॥ २९ ॥
छलितो राजपुत्र्याहं ऋतुपर्णश्च पार्थिवः । ममाश्वहृदयज्ञत्वं प्रियया प्रकटीकृतम् ॥ ३० ॥
ऋतुपर्णो वृथोत्कण्ठो वृथारोषः स्थितोऽस्म्यहम् । तस्या हास्यावुभौ जातौ शाखाभ्रष्टौ कपी इव ॥ ३१ ॥
इयं च प्रहिता देव्या नूनमायाति केशिनी । इन्द्रसेनं च दृष्ट्वा मे जाते वाष्पाकुले दृशौ ॥ ३२ ॥
धिग् वज्रहृदयं घोर दुर्भेद्यं मां नराधमम् । पुत्रदर्शनयोगेऽपि यस्य न स्निग्धता हृदि ॥ ३३ ॥

इति चिन्तयतस्तस्य समुपागत्य केशिनी । ऋतुपर्णप्रणामं द्राक् इन्द्रसेनमकारयत् ॥ ३४ ॥
कस्यायमिति ? तेनोक्ता केशिनी वाक्यमब्रवीत् । राजन् ! पितास्य भूपालः शत्रुकालानलो नलः ॥ ३५ ॥
ऋतुपर्णस्ततः प्रेम्णा बालमालिङ्ग्य निर्भरम् । उत्तार्य निजगात्रेभ्यो भूषणैस्तमभूषयत् ॥ ३६ ॥
अयं हि स्वामिनः सूनुरिति कुब्जोऽपि हि ब्रुवन् । आश्लिष्य वक्षसा बालं दृढं मूर्ध्नि चुचुम्ब च ॥ ३७ ॥
ततः शस्यानि शाकानि दुग्धानि च दधीनि च । ते तेषामेव मुख्याश्च वेसवाराः पृथग्विधाः ॥ ३८ ॥
सत्वरया व्यतिकरा ऋतुपर्णस्य भूभुजः । भीमपौरोगवैस्तत्र प्रगुणीचक्रिरे तदा ॥ ३९ ॥
कः कोऽत्र सूपकारोऽस्तीत्युक्तैस्तैः स्वयमेव सः । दर्शयन् सूदतां कुब्जः पाकाय प्रगुणोऽभवत् ॥ ४० ॥
केशिन्या सञ्ज्ञया शीघ्रं वारिते निखिले जने । जलाग्निसमिधस्तस्मै न तु कश्चिदढौकयत् ॥ ४१ ॥
त्वं हि देव्या सुदेवोक्त्या नलः कुब्ज इति श्रुतः । विदिता तव साप्यत्र सूर्यपाकप्रवीणता ॥ ४२ ॥
कथं न कुरुषे कुब्ज ! तथा रसवतीमिह ? । ननु त्वद्दर्शनोत्कण्ठा चिरादस्माकमप्यभूत् ॥ ४३ ॥
कोशलाधिपते ! प्राप्तप्रसङ्गादिह संप्रति । कथयिष्याम्यहं देव्यास्त्वामप्यत्र समागतम् ॥ ४४ ॥
इति स्वजनसंबन्धबुद्धिपूर्वं विदग्धया । केशिन्याभिहितः कुब्जः प्रारेभे दिव्यसूदताम् ॥ ४५ ॥
स नाकणवरानीतैर्वारिभिर्विहितद्रवः । घर्मांशुरश्मिसङ्क्रान्तकृशानुः पाकमादधे ॥ ४६ ॥
इदं त्वत्पितुरन्यस्य न कस्याप्यभवत् पुरा । इन्द्रसेन ! ततः किञ्चिद् भुङ्क्ष्वेत्यूचेऽथ केशिनी ॥ ४७ ॥

इत्युक्ते पत्रपात्र्यां तत् कुब्जेन परिवेषितम् । अन्नं तत् किञ्चिदादाय देव्याः पार्श्वं जगाम सा ॥ ४८ ॥
पुत्रवात्सल्यमुख्यं तत् कुब्जवृत्तं निवेद्य सा । तदन्नं पुरतो देव्याः सविस्मयमदर्शयत् ॥ ४९ ॥
ततोऽनुभूतपूर्वं तत् भोज्यमास्वाद्य सावदत् । अनेन कर्मणा नूनं सर्वथा नल एव सः ॥ ५० ॥
द्वितीयो यदि मेरुः स्यात् तृतीयः पक्ष एव वा । हव्यवाहश्चतुर्थो वा वेदो वा यदि पञ्चमः ॥ ५१ ॥
षष्ठस्त्रिदशवृक्षो वा ऋतुर्वा यदि सप्तमः । स्वरः स्यादष्टमो यद् वा नवमो वा कुलाचलः ॥ ५२ ॥
रसो वा दशमोऽप्यत्रैकादशो वा दिगीश्वरः । द्वादशो यदि वा रुद्रः सूर्यो वापि त्रयोदशः ॥ ५३ ॥
चतुर्दशो यक्षराजः पूर्वाणि दशपञ्च च । निधिः षोडशसंख्यां का परमा धार्मिकाथवा ॥ ५४ ॥
कला सप्तदशा वा स्यात् सुवर्णकाधिकं च चेत् । अष्टादशविधं भक्षजा वा एकोनविंशति ॥ ५५ ॥
नलवर्जं परः पृथ्व्यां तद् भवेत् सूर्यपाकवित् । वैरसेनिरयं नूनं किमुक्तैर्बहुभिर्मम ॥५६॥ चतुर्भिः कलापकं ।
तमित्युक्तवतीं पुत्रीं माता सोत्साहमब्रवीत् । वत्से ! नलोऽयमित्युच्चैः कुब्जे चेत् तव निश्चयः ॥ ५७ ॥
तदयं त्वत्समीपेऽपि तावदानेष्यतेऽधुना । पश्चाद् यथा तथा वा त्वं तद् व्यक्ति कर्तुमर्हसि ॥ ५८ ॥ युग्मम् ॥

इति पटुतरमुक्त्वा भोजनानन्तरं सा विपुलमतिरनुज्ञां भीमराज्ञो गृहीत्वा ।
नरपतिमुपनेतुं कुब्जरूपं नलं तं विनयनयसुशीलान् सौविदल्लान् दिदेश ॥ ५९ ॥
भर्तुर्नलस्य ननु कुब्जमिमं प्रपन्नं वात्सल्यतः किल दिदृक्षति राजपुत्री ।

नन्वेऽग्रगतामिति च कोशलभर्तुरग्रे विज्ञप्य तं सपदि कञ्चुकिनोऽपि निन्युः ॥ ६० ॥
अपरमपरमस्वरूपधारी वपुरिव चारु निजं नियन्त्रितारिः ।
अविशदविशदारविन्दनेत्रः प्रमदगिता दयितागृहं स वीरः ॥ ६१ ॥
इति श्रीमाणिक्यदेवसूरिकृते नलायने सप्तमे स्कन्धे तृतीय सर्गः ॥ ३ ॥

## सप्तमे स्कन्धे चतुर्थः सर्गः ।

स्वर्णसिंहासनासीनां चलच्चामरवीजिताम् । ददर्श सहसा देवीं दमयन्तीं प्रियां नलः ॥ १ ॥
तां समाकलयन् देवीं नलः प्रबलसंभ्रमः । न सेहे सहसा रोद्धुं प्रेम पारिप्लवङ्गमम् ॥ २ ॥
ददर्श कुब्जमपि तं महाभक्त्या दमस्वसा । स्वयमासनदानादि प्रतिपत्तिं वितन्वती ॥ ३ ॥
आस्तामलमलं देवि ! संभ्रमेण महीयसा । आस्यतामुपविष्टोऽस्मि कच्चिद् गात्रमनामयम् ? ॥ ४ ॥
दिष्ट्याद्य सुप्रभातं मे यद् दृष्टासि विदर्भजे ! । त्वं हि प्राणप्रिया देवि ! नलस्य स्वामिनो मम ॥ ५ ॥
तस्यापि यदि ना गतः संप्राप्ता तादृशी दशा । कः परेषां वराकाणां तद् दैवं प्रति विक्रमः ॥ ६ ॥
त्वयि वैदर्भि ! जीवन्त्यां साक्षाद् राजा स जीवति । त्वदीयो महिमा नूनं मनुष्याणामगोचरः ॥ ७ ॥
श्रुतमेव मया कृत्स्नं त्वदीयं न सविस्तरम् । यथा त्वमसि निस्तीर्णा दुस्तरं कष्टसागरम् ॥ ८ ॥

जजल्प सा चिराद् वाचं साचीकृतविलोचना । मनोहरपदन्यासस्पष्टप्रणयपूर्वकम् ॥ ९ ॥
अद्यापि मम भाग्यानि मन्ये सन्ति कियन्त्यपि । यदेतावदपि प्रेम त्वदीयं मयि वर्त्तते ॥ १० ॥
इत्थं गुप्तशरीरोऽपि दूरस्थोऽपि नरेश्वरः । परिज्ञातो मयासि त्वं समाकृष्टश्च वर्त्तसे ॥ ११ ॥
न संप्रत्यपि सुप्तास्मि न चात्रापि हि तद् वनम् । कुरुष्व गमनोपायं कथं यास्यसि नैषध ! ॥ १२ ॥
अकुलीनां विरूपां वा विप्रियां वापि चेतसि । स्वामिन् ! दासीत्वमात्रेण मामङ्गीकर्त्तुमर्हसि ॥ १३ ॥
कुरुष्व नाथ ! कारुण्यं त्यज काठिन्यमीदृशम् । स्फुटीकुरु निजं रूपं मुञ्च कुब्जत्वमात्मनः ॥ १४ ॥
क्व ते मन्मथजिद्रूपं ! क्व च कुब्जत्वमीदृशम् ? । क्व चान्यगृहभृत्यत्वं ? क्व सम्राट् शतसेव्यता ? ॥ १५ ॥
त्वयि प्रकटरूपेऽद्य सनाथो भूभृतां वरः । स्वयमेवेन्द्रसेनोऽपि कर्त्ता दिग्विजयश्रमम् ॥ १६ ॥
इयं चरणयोर्देव ! प्रणतास्मि त्वदीययोः । प्रसीद पालय स्वामिन् ! विषीदन्तमिमं जनम् ॥ १७ ॥
इति निर्भत्सना पूर्वं प्रेमकारुण्यनिर्भरम् । तां समाकर्ण्य जल्पन्तीं कुब्जः पुनरभाषत ॥ १८ ॥
देवि ! कोऽयं महामोहः कोऽहमित्यवधारय । मयि कुब्जे निजे भृत्ये युक्तमुक्तं न हि त्वया ॥ १९ ॥
क्व सूर्यः क्व च खद्योतः ? क्व मेरुः क्व च सर्षपः ? । क्व शृगालः क्व शार्दूलः ? क्व पयोधिः क्व गोष्पदम् ? ॥ २० ॥
क्व कल्पद्रुः क्व किंपाकः ? क्व लोष्ठः क्व च काञ्चनम् ? । क्व गरुत्मान् क्व मशकः ? क्व दुकूलं क्व कम्बलः ? ॥ २१ ॥
क्व मे दृष्टिविषं रूपं क्व च मूर्त्तः स्मरो नलः ? । मम तस्य च राजर्षेर्वैदर्भि ! महदन्तरम् ॥ २२ ॥ त्रिभिर्विशेषकम्

राज्यभ्रंशेऽपि मोहेऽपि न स्यात् किं कश्चिदीदृशः । न भग्नपतितो वापि हारो विषधरायते ॥ २३ ॥
तद् मुञ्च दुरभिप्रायं प्रसीद भज सौम्यताम् । वैदर्भि ! तव भृत्योऽस्मि मा मयि भ्रान्तिं मा कृथाः ॥ २४ ॥
इति तस्य वचः श्रुत्वा वैदर्भी दम्भगर्भितम् । प्रत्यभाषत पीयूषकल्लोलकलया गिरा ॥ २५ ॥
यदि त्वं कुब्जमात्रोऽसि न नलः परमार्थतः । तत् कुतः सूर्यपाकस्ते क्रियतां किञ्चिदुत्तरम् ॥ २६ ॥
कृष्णः काणः कुणिः कुष्ठी कुब्जो वा भव नैषध ! । यादृशस्तादृशो वापि मया ज्ञातोऽसि सर्वथा ॥ २७ ॥
एष लब्धोऽसि किं भूम्ना न यासि पुरतो मम । ननु सिंह इवात्र त्वं पतितः खड्गपञ्जरे ॥ २८ ॥
प्रसीद कुरु कारुण्यं किं करोषि कदर्थनाम् ? । पुनः प्रकटमात्मानं तनुष्व निषधेश्वर ! ॥ २९ ॥

इति कलिकलिताभिः प्रेमकर्मारिताभिर्विनयविलुलिताभिर्वाग्भिरिन्दीवराक्ष्याः
निषधनृपतिरन्तर्भिद्यमानोऽपि भेजे गिरिरिव दृढभावं सिन्धुवेलानयस्यः ॥ ३० ॥
अविरलकलिकोपक्रीडितव्रीडितस्य प्रचलितपुनरुत्थप्रीतिनीतिक्रमस्य ।
मनसि निषधभर्त्तुर्भाववैचित्र्यरूपं कविभिरपि न सेहे वर्णितुं तत्त्ववृत्त्या ॥ ३१ ॥
निर्व्याजमद्भुतमनर्गलमत्युदारं जानन्नपि प्रणयमात्मनि राजपुत्र्याः ।
पूर्वापराधपरमत्रपया न सेहे मग्नः स दर्शयितुमात्ममुखं सुमुख्याः ॥ ३२ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने सप्तमे स्कन्धे चतुर्थः सर्गः ॥ ४ ॥

---

## सप्तमे स्कन्धे पञ्चमः सर्गः ।

इति देव्याः वचः श्रुत्वा देवराजद्युतिर्नलः । प्रत्युवाच पुनर्वाचं वैचित्र्यचतुरान्तरः ॥ १ ॥
अयं ते विभ्रमो भैमि ! भूमिवाग्देवते ! वृथा । यदश्वहृदयादिभ्यो मयि कुब्जे नलभ्रमः ॥ २ ॥
नन्वहं तस्य राजर्षेर्महद्विश्वासभाजनम् । मयि न्यासीकृतास्तेन प्रीतेन सकलाः कलाः ॥ ३ ॥
दृष्टश्चास्मि त्वया पूर्वं ननु स्मरसि संप्रति । कियती प्राकृती लोके प्रभूणां भवति स्मृतिः ॥ ४ ॥
त्वामत्र सुस्थितां ज्ञात्वा स्वामिभक्तिवशंवदः । अहं देवि ! समायातः तव सेवाविधित्सया ॥ ५ ॥
ऋतुपर्णमनुज्ञाप्य स्वस्वामिन्या मनस्विनि ! । अहं तव करिष्यामि सेवां सर्वाङ्गसुन्दरि ! ॥ ६ ॥
इत्थं वदति राजर्षौ देवी दुर्वारविभ्रमा । विलोक्य केशिनीमुख्याः सखीः साश्रुरभाषत ॥ ७ ॥
यदि च स्वकुटुम्बेन तव नास्ति प्रयोजनम् । कण्ठशोषफलस्तर्हि को विवादस्त्वया सह ? ॥ ८ ॥
एष सम्यग् गृहीतोऽपि हस्ताग्रात् किं वियुज्यसे ? । कुतो वा मन्दभाग्यानां गृहे चिन्तामणिः स्थिरः ॥ ९ ॥
त्वयि वज्रमये राजन्नसत्यं मयि तन्वति । उपायाः सकला जाता मदीयाः सर्वथा वृथा ॥ १० ॥
इयन्तमवधिं यावज्जीवितास्मि त्वदाशया । अधुना जीवितव्येन मम नास्ति प्रयोजनम् ॥ ११ ॥
यदि न त्वं नलो राजा कुब्जोऽसि परमार्थतः । न तद् विद्वन् मदीयेन हत्यापापेन लिप्यसे ॥ १२ ॥

एषा चतुर्विधाहारप्रत्याख्यानं करोम्यहम् । अपि जीवितसत्तायां पर्याप्तोऽयं भवो मम ॥ १३ ॥
इत्युक्त्वा नियमं कर्तुं प्रगुणत्वं बभार सा । चक्रन्द सहसा शोकव्याकुलस्तत्सखीजनः ॥ १४ ॥
तत्र पश्यन् विधुराक्रान्तं बालस्तत्कालमुन्मुखः । इन्द्रसेनः सह स्वस्रा रुरोद करुणस्वरम् ॥ १५ ॥
तत्यजुः शिरसः पुष्पं ताम्बूलं मुखपङ्कजात् । विभूषणानि गात्रेभ्यस्तदा तत्परिचारिकाः ॥ १६ ॥
इति तद् व्याकुलीभूतं दृष्ट्वा राजकुलं द्रुतम् । ऊचे ममाध्वसावेशा केशिनी पेशलोक्तिभिः ॥ १७ ॥
हा हा धिक् ! देवि ! दुर्दैवं किं ब्रूमः किमु कुर्महे । ईदृग् निर्याणभागस्ते किं तवापि तनूदरि ! ॥ १८ ॥
धिक् शीलं धिक् कुलोत्पत्तिं धिग् रूपं धिग् यशो महत् । यदित्थमभिसंप्राप्ता भीमपुत्री विपद्यते ॥ १९ ॥
अद्य लक्ष्म्या जगच्छून्यमद्य भूयः स्मरो मृतः । अद्याशा मन्दभाग्यानां मादृशीनां क्षयं गता ॥ २० ॥
कष्टं भोः ! कष्टमुद्दामं त्रिलोकीविदितं च यत् । दमयन्तीमयं तेजस्तदिदं हा प्रलीयते ॥ २१ ॥
सदाफला सदाच्छाया न कृता यदि वेधसा । किं संसारालवालेऽसौ प्ररूढामृतकन्दली ॥ २२ ॥
जीवितेशः स्फुटं देव्या दमयन्त्या नलो नृपः । प्रथमं प्रियरूपेण यमरूपेण संप्रति ॥ २३ ॥
महाभाग ! भवान् प्राप्तः सह कोशलभूभुजा । सूर्यपाकादिकास्तास्ताः कलाश्च सकलास्त्वयि ॥ २४ ॥
त्वं न नैषध इत्युक्तिं ब्रुवाणैरपि लज्ज्यते । तथापि विकलीभूतैः किं किं नहि वितर्क्यते ॥ २५ ॥
यद्य कश्चिदभिव्यक्तस्तत्त्वमेवाभिगल्लसि । तथापि वाक्यमाकर्ण्य मदीयं सदयो भव ॥ २६ ॥

नल इत्येव यः सम्यक् त्वां प्रसादयितुं मतिः । प्रसीद गर्भदासी ते तद् विलङ्घ्या न केशिनी ॥ २७ ॥
पर्यन्तावसरः सोऽयं न विलम्बः क्षमोऽधुना । इयमद्य भवन्मूला विपत्तिर्भीमजन्मनः ॥ २८ ॥
पश्चादपि प्रियाशोकं हृदयेन करिष्यसि । तद् भज प्रकटीभावं राजासि स नलो यदि ॥ २९ ॥
एवमुक्तः स केशिन्या दयितामृत्युशङ्कितः । निर्व्यलीकमिवात्मानं कर्त्तुं नलतयावदत् ॥ ३० ॥
भर्त्तारमपरं भैमी भूयोऽपि हि भजिष्यति । इति देशान्तरे वार्त्ताप्रकाशोऽभूद् गृहे गृहे ॥ ३१ ॥
किमन्यदिदमाकर्ण्य मनसा विस्मयाकुलः । इह स्वयमयं दैवादयोध्यापतिरागतः ॥ ३२ ॥
इदं मत्कारणेनैव कृतं वा स्वेच्छयानया । इति न ज्ञायते सम्यक् विश्वासः स्त्रीषु कीदृशः ॥ ३३ ॥
एकाकिनी सुरूपा च युवतिर्विगतत्रपा । केन नाक्रम्यते पुंसा कं वा न भजते स्वयम् ॥ ३४ ॥
भजतां ऋतुपर्णं वा कुरुतां वा स्वयम्वरम् । ममानुमतमेतस्याः कामवृत्तिरतः परम् ॥ ३५ ॥
इति भीमभुवा देव्या श्रूयमाणा सबाष्पया । गिरं वदति भूपाले व्योम्नि वागभवद् द्रुतम् ॥ ३६ ॥
राजन् राजन् ! नलममलमिदं युज्यते नैव वक्तुं पुण्यश्लोकस्त्वमसि भुवने सत्त्वदुग्धाम्बुराशिः ।
वैदर्भीयं युवतिषु सतीचक्रचूडामणिश्च त्रैलोक्येऽस्मिन् क इव युवयोर्वेत्ति माहात्म्यपारम् ॥ ३७ ॥
राज्यभ्रंशं विरहविपदं दौर्मनस्यं समन्तादेतत्पापः सकलमकरोत् क्रूरकर्मा कलिर्वाम् ।
युष्मत्पुण्यैः पुनरपि जितः स प्रनष्टो दुरात्मा श्रेयः कालः पुनरुपनवः साम्प्रतं क्षेममस्तु ॥ ३८ ॥

एते व्योम्नि स्थगितवपुषो लोकपाला वदन्ति प्रीतश्च त्वां क्षितिप ! भगवानादिशत्येष शक्रः ।
लोकातीतेऽप्यशिवसमये शीललीलाविशेषैर्दीर्घोत्तीर्णं कनकमिव हि स्वीकुरु स्वं कलत्रम् ॥ ३९ ॥
सुरपतिवचनेन निःकलङ्का मम दयितेति तुतोष भूमिपालः। कलिकृतमिति च प्रियव्यलीकं नृपतिसुतापरिहारजं विषेहे॥४०॥
ततः क्लेशप्राप्तप्रियविरहकालामहतया सखीभिर्वैदर्भ्याश्चरणपतिताभिस्त्वरलितः ।
स्रगं बिल्वद्वन्द्वं तदथ विघटय्य क्षितिपतिर्दधौ वेषं कर्कोटकभुजगदत्तं दृढभुजः ॥ ४१ ॥
राजा राजा स खलु विजयी नैषधो नैषधोऽयं दिष्ट्या दिष्ट्या बत जितमहो मङ्गलं मङ्गलं नः ।
इत्यानन्दव्यतिकरजुषां लोककोलाहलेन व्याप्तं सद्यः सकलमभवद् व्याकुलं राजवेश्म ॥ ४२ ॥
तदनु जय जयेति प्रस्तुतोच्चारपूर्वं सुरभिकुसुमवर्षानन्तरं दत्तहर्षाः ।
जलमुच इव लक्षा दध्वनुर्दुन्दुभीनां दिवि भुवि च समन्ताद् निर्जराणां नृणां च ॥ ४३ ॥
आनन्दाश्रुप्रकररचितस्फारमुक्ताफलौघक्लृप्तातिथ्यः सह सहचरी कोटिभिर्भीमपुत्र्याः
भेजे राजा कनकरचितं रत्नवद् भद्रपीठं देवः साक्षादिव सुरगिरेः शृङ्गमम्भोजिनीशः ॥ ४४ ॥
भर्तुर्वेषं नयनविषयं केशिनी वीक्ष्य रेमे स्वं भर्त्तारं करतलगतं प्राप्य भैमी मुमोद ।
क्रोडीचक्रे पितरमचिरादिन्द्रसेनः सजामिर्नत्वा तस्थौ परिवृतिपरः पार्श्वतो भृत्यवर्गः ॥ ४५ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने सप्तमे स्कन्धे पञ्चमः सर्गः ॥ ५ ॥

## सप्तमे स्कन्धे षष्ठः सर्गः ।

ततश्चरणचारेण तत्र त्वरितमागतः । प्रणिपत्य प्रतीहारपदं भेजे विदर्भराट् ॥ १ ॥
दमो दमनदान्तौ च बद्धरोमाञ्चकञ्चुकाः । त्रयोऽपि हि कुमारास्तं प्रणम्य परिरेभिरे ॥ २ ॥
समागत्य लुठन् भूमौ भीमेनोत्थापितः स्वयम् । ऋतुपर्णनरेन्द्रस्तं प्रणणाम कृताञ्जलिः ॥ ३ ॥
ततो द्रविडचोडादिदेशानां पृथिवीभुजः । मौलिभिर्नमितोत्तंसैर्दूरात्तमुपतस्थिरे ॥ ४ ॥
सामन्तशतसङ्कीर्णं पौरजानपदाकुलम् । आकीर्णमभवत् सर्वं तदङ्गणमुपायनैः ॥ ५ ॥
दधानश्चारुशृङ्गारं गारुत्मतमतन्द्रितः । बभूव भुवनस्यापि नैषधो दृग्विषापहः ॥ ६ ॥
दधार दमनश्छत्रं दमदान्तौ च चामरे । ऋतुपर्णो नृपस्तस्य बभूव स्थगिकाधरः ॥ ७ ॥
अशोभत सभामध्ये स नृपैः परिवारितः । काञ्चनश्रियमातन्वन् मेरुः कल्पद्रुमैरिव ॥ ८ ॥
दातरि त्रातरि स्वीये पितरि भ्रातरीव वा । तस्मिन् चकमिरे पौराः कर्तुं प्राणैरपि प्रियम् ॥ ९ ॥
तस्मै वीराय सर्वाङ्गसमर्पणविधित्सया । महीव दमयन्ती च सोच्छ्वासमवहद् वपुः ॥ १० ॥
अमिलन् तद्गुणाकृष्टास्तस्य सेवाविधित्सया । दिने दिने दिगन्तेभ्यः स्वागतज्ञा महीभुजः ॥ ११ ॥
अप्यल्पपरिवारेण तस्य सेवां वितन्वता । परेभ्योऽधिकसन्मानं लेभे कोशलभूभुजा ॥ १२ ॥

सर्वसाधारणत्वेन तस्य विस्मयकारिणः । उवाह महदाश्चर्यं ऋतुपर्णस्तथापि हि ॥ १३ ॥
पार्थिवैः प्रेरितः सर्वैर्निजभक्त्या च शुद्धया । व्यजिज्ञपत् कदाचित् तं भार्गसूरिरधीश्वरम् ॥ १४ ॥
देव ! दिष्ट्या जगद्भाग्यैर्दृक्सुधादानदायिभिः । हत्वा कलितमःस्तोमं त्वमिन्दुरुदितः पुनः ॥ १५ ॥
समानेष्वपि सर्वेषां त्वत्प्रसादेषु पार्थिव ! । सर्वशेषमिवात्मानं मन्ये सुकृतिनं पुनः ॥ १६ ॥
रसातलं बलिर्नीतो वामनत्वेऽनुरागिणा । त्वयाहं कुब्जरूपेण विश्वस्योपरि दर्शितः ॥ १७ ॥
दत्से यथा तथा वा त्वं भृत्येभ्यो देव ! गौरवम् । सर्वत्र ललिता वृत्तिरचिन्त्यचरितस्य ते ॥ १८ ॥
प्रायः प्राकाम्ययत्नया त्वमित्थं क्रीडसि निर्भरम् । दर्शयन् सर्वभावेषु सर्वत्र त्वमिवात्मनः ॥ १९ ॥
नास्त्येव तव विद्वेषो विरुद्धेष्वपि केषुचित् । स्वतन्त्रैकपात्रेषु स्ववयस्येषु किं पुनः ॥ २० ॥
नूनमज्ञानभावेन न दोषः कोऽपि कस्यचित् । स्वामिन्ननुनयत्येष तथापि त्वामयं जनः ॥ २१ ॥
प्रसीद कुरु वेगेन देव ! दिग्विजयश्रमम् । नृपा विज्ञपयन्ति त्वामहं च त्वत्पुरःसरः ॥ २२ ॥
वहन्तु त्वद्बलाश्वीयखुरक्षुभितपांशुभिः । अकालफाल्गुनक्रीडाविभ्रमं दिक्पुरन्ध्रयः ॥ २३ ॥
सन्तु त्वद्दर्शनानन्दबाष्पनिष्पन्दवृष्टिभिः । आर्यावर्त्तस्य लोकानां प्रदेशा देवमातृकाः ॥ २४ ॥
इति विज्ञापितस्तेन स्तनयित्नुजिता गिरा । गिरिवद् विदधे धीरं प्रतिशब्दं धराधिपः ॥ २५ ॥
अयोध्याधिपते ! सर्वमिदं कर्त्तव्यमेव मे । श्रुतशीलः समागच्छन् केवलं प्रतिपाल्यते ॥ २६ ॥

तस्यागतवतः शीघ्रं सचिवस्य महात्मनः । संपत्स्यते समग्रोऽयं सुहृदो मे मनोरथः ॥ २७ ॥
इत्युक्त्वा स विनीतात्मा विनीताधिपतिं प्रति । प्रविवेश विशामीशश्वशुःशालं दमस्वसुः ॥ २८ ॥
भूरिभूतभवद्भाविवार्त्ताव्यतिकरो तदा । भैमी नलाय वृत्तान्तं केशिन्यास्तमचीकथत् ॥ २९ ॥
तेन श्रुतेन राजर्षिर्विस्मितः स्मितपूर्वकम् । ऊचे परोपकारैकव्यापारपरया धिया ॥ ३० ॥
अहो! मे साध्वभूद् द्यूतं राज्यभ्रंशोऽपि साध्वभूत् । वने ससंभ्रमं भ्राम्यन् साधु दष्टोऽस्मि भोगिना ॥ ३१ ॥
नो चेत् किमन्यथा सर्पविषज्वालाजलाञ्जलिः । अभविष्यदयं दिव्यो वेषः करगतो मम ॥ ३२ ॥ युग्मम् ॥
तदयं दीयते तस्यै भृङ्गारो गारुडो मया । युज्यतां स महाबाहुर्भूयः स्वबलसंपदा ॥ ३३ ॥
इति जल्पन् प्रियां प्राप्य केशिन्याः सन्निधौ नृपः । तं यथावस्थितं वेषं ददौ बिलसमुद्गकम् ॥ ३४ ॥
केशिनी साञ्जलिर्नम्रा शिरसा प्रतिगृह्यताम् । जजल्पाश्रुकणक्लिन्नकण्ठाध्वस्फुरदक्षरम् ॥ ३५ ॥
स्वामी भर्त्ता पिता माता भ्राता वा कोऽपि कस्यचित् । सर्वस्थाने युवामेव केवलं मम भूतले ॥ ३६ ॥
दयितस्य व्यथां हर्त्तुं वैताढ्यं प्रति संप्रति । सत्वरौ चरणौ गन्तुं मनः पुनरिह स्थितम् ॥ ३७ ॥
आश्रितान् पूरयेच्छक्त्या वियुक्तान् योजयेद् मिथः । बद्धान् विमोचयेद् जन्तून् एष धर्मः सनातनः ॥ ३८ ॥
तत् किमत्र बहूक्तेन न मे जिह्वाशतं मुखे । मन एव हि जानाति मदीयं युवयोः कृतम् ॥ ३९ ॥
तदियं याति वैताढ्यं प्रयोक्तुं युवयोर्यशः । विद्याधरपरित्राणात् स्वस्ति वामभयप्रदौ ॥ ४० ॥

ऋ मे मुख्यदासीत्वं न तावत् कश्चिदर्हति । युष्मद्दासेन संसक्ता यावदायाम्यहं पुनः ॥ ४१ ॥
केशिन्यथ स्वयं दत्त्वा दम्पत्योर्विजयाशिषम् । उत्पपात वलद्ग्रीवं पश्यन्ती केशिनी भुवम् ॥ ४२ ॥
क्षणेन प्राप्य वैताढ्यं वेगेन जितवायुना । ददर्श स्वजनान् सर्वान् पितृश्वसुरवर्गयोः ॥ ४३ ॥
सर्वेषां पश्यतां तेषां हर्षाश्रुकणवर्षिणाम् । दत्त्वा गारुत्मतं वेषं निर्विषं विदधे पतिम् ॥ ४४ ॥
विषोपरागनिर्मुक्ते तस्मिन् शीतद्युताविव । उत्सवः कोऽप्यभूदुच्चैरन्तर्नगरमद्भुतः ॥ ४५ ॥
पृच्छ्यमाना च सा पत्या शृङ्गारप्राप्तिविस्तरम् । सर्वेषां शृण्वतां सर्वं यथातथमचीकथत् ॥ ४६ ॥
विद्याधरसुतः श्रीमान् सुकृतज्ञो महाबलः । वीरश्चचाल तत्कालं नलसेवासमुत्सुकः ॥ ४७ ॥
पिता च श्वसुरश्चैव ज्ञातयः स्वस्य चापरे । वीरसेनसुतं द्रष्टुं सौहृदाय प्रतस्थिरे ॥ ४८ ॥

विकसितकनकारविन्दवृन्दद्युतिजितचण्डमरीचिभिर्विमानैः ।
द्रुततरमपि कुण्डिनं प्रपेदे तदथ नभश्चरराजचक्रवालम् ॥ ४९ ॥
विद्याधरेश्वरसमूहमभागमं द्राक् तं केशिनी स्वयमुपेत्य शशंस पूर्वम् ।
उत्कण्ठितः सकलराजकमध्यवर्ती तस्थौ नलोऽपि हि सभाजयितुं सभायाम् ॥ ५० ॥
तत्राययौ सपदि सोऽपि सपत्नहन्ता मन्त्रीश्वरः श्रुतनिधिः श्रुतशीलनामा ।
शक्तित्रयेण कलितो नृपतिर्विरेजे वीरः स तक्षक इव स्वफणात्रयेण ॥ ५१ ॥

प्रातः कुबेरनवमङ्गलयुक् दिनं ते यात्राक्षमं मिथुनराशितिथिप्रपन्नम् ।
इत्थं महागणकदत्तमुहुर्त्तकालः सज्जीबभूव भुवनैकजयाय वीरः ॥ ५२ ॥
एतत् किमप्यनवमं नवमङ्गलाङ्कं यद् निर्ममेऽनुभवसारविधिर्विधिज्ञः ।
तस्यार्यकर्णनलिनस्य नलायनस्य स्कन्धः समाप्त इह सप्तमसङ्ख्ययायम् ॥ ५३ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने सप्तमे स्कन्धे षष्ठः स्कन्धः ॥ ६ ॥

समाप्तोऽयं सप्तमः स्कन्धः ।

# अष्टमः स्कन्धः ।

## अष्टमे स्कन्धे प्रथमः सर्गः ।

श्रूयते स्म ततः सर्वदिक्निकुञ्जोदरम्भरिः । प्रतिध्वनितविन्ध्याद्रिप्रस्थः प्रस्थानडिण्डिमः ॥ १ ॥
तं यात्राभिमुखं वीरं विजयश्रीवधूवरम् । कृतनीराजनं लाजावकीर्णं तुष्टुवुः स्त्रियः ॥ २ ॥
ततस्तत्कालमुत्तालतुरङ्गलहरीमये । तस्य सैन्यमहाम्भोधौ निममज्ज महीतलम् ॥ ३ ॥
चतुरङ्गचलच्चण्डचमूचरणरेणुना । प्रतापेनेव शूरोऽपि रेणुना पिदधे रविः ॥ ४ ॥

नागीरगीम्नि काकुत्स्थः पृष्ठतो भीमनन्दनः । व्योम्नि विद्याधराधीशाः प्रतापः सर्वतोऽप्यभूत् ॥ ५ ॥
दिव्यास्त्रक्रममहागोद्रा पुरापि निषधेश्वरः । किं पुनः सहितः शूरैर्विद्याधरनरेश्वरैः ॥ ६ ॥
यथा कवचितः सिंहः सपक्षः पन्नगो यथा । यथा वायुसखो वह्निर्यथा ज्येष्ठायुतो रविः ॥ ७ ॥
तथा विद्याधराधीशैरधिष्ठितमहाबलम् । असह्यं मेनिरे वीरं वीरसेनसुतं नृपः ॥ ८ ॥ युग्मम् ॥
प्रभुः सप्ततिलक्षाणां दक्षिणापथनायकः । यस्य भीमः स्वयं वेत्री स किं जयति दक्षिणाम् ? ॥ ९ ॥
अतः सिंहलभूपालप्रमुखैः महितो नृपैः । प्रतस्थे पश्चिमां जेतुं स मायामिव संयमी ॥ १० ॥
सेनानीभिरपि प्रायस्तस्य साध्या महीभुजः । चचाल केवलं देशान् विलोकयितुमेव सः ॥ ११ ॥
न भग्ना नगरस्कन्धा न च्छिन्ना वनराजयः । न पातितानि चैत्यानि न लूनाः सस्यसंपदः ॥ १२ ॥
गोकुलानि न नीतानि ज्वालितानि पुराणि न । मूषितः कोऽपि न क्वापि मृतः कोऽपि न कुत्रचित् ॥ १३ ॥
तथापि दुर्गदेशस्था बलिनो मानिनोऽपि हि । निःशेषविश्वविख्याताः क्षितिपालाः क्षतारयः ॥ १४ ॥
सुवर्णैर्मणिभिः क्षौमैः कन्याभिस्तुरगैर्गजैः । तैस्तैरनुपमै रम्यैरनुरूपैरुपायनैः ॥ १५ ॥
मानुगेधाः सशङ्काश्च सान्तःपुरपरिच्छदाः । शान्ताः साञ्जलयः सम्यक् सविशेषं सिषेविरे ॥ १६ ॥ त्रिभिर्विशेषकम् ॥
कर्णद्भिश्च क्रमोपास्ति तस्य सुनृतवादिनः । सत्संसर्गवशादात्मा कृतार्थस्तैरमन्यत ॥ १७ ॥
जित्वा स पश्चिमां प्राप नृपतिर्दिशमुत्तराम् । अतीत्य शैशवावस्थां नरस्तरुणतामिव ॥ १८ ॥

आकर्ण्य तच्चमूभूरिभेरीभाङ्कारनिःस्वनम् । द्रुतमुत्कर्णतां प्रापुः कर्णप्रावरणा अपि ॥ १९ ॥
स्कन्धे कुमारमाधाय तत्सेवार्थं समाययौ । न रोमकम्बलश्चक्रे कम्बलस्य परिग्रहम् ॥ २० ॥
निन्येऽश्वमुखमुख्यानां किन्नराणां न किञ्चन । तेभ्यः स एव तद्गीतः प्रीतः प्रत्युत दत्तवान् ॥ २१ ॥
ततः सोऽनुययौ गङ्गां पूर्वसागरगामिनीम् । अभिषेणयितुं पूर्वां पुरस्ताद् विहितामिव ॥ २२ ॥
अत्र नीतिविदः सर्वे नृपाश्चम्पाधिपादयः । नलं गुरुमिवायातं विनयेनोपतस्थिरे ॥ २३ ॥
इति दिग्विजयं कृत्वा पुरन्दरपराक्रमः । आर्यावर्त्तजनं प्रापदार्यावर्तक्रमेण सः ॥ २४ ॥

जय नृपवर ! वीरसेनसूनो ! जय जनरञ्जन ! मन्मथावतार ! ।
जय जय कलिकालकाल ! नित्यं जय जय दुर्जय ! देव देवदूत ! ॥ २५ ॥
अक्षनिग्रहवशेन लीलया विश्वविश्वविजयं वितन्वतः ।
द्यूतकार ! तव कौतुकवादा कापि वृत्तिरपरैर्न गम्यते ॥ २६ ॥
क्रीडाकुब्जः कौञ्चकर्णान्तकारी पुण्यश्लोको नैषधो देवदूतः ।
भैमीभर्त्ता वैरसेनिः कलिघ्नः स्तम्भोन्माथी केशिनीदुःखहर्त्ता ॥ २७ ॥
श्रेयस्कारी वाजिचित्तैकवेत्ता काकुत्स्थश्रीवर्द्धनो द्यूतकारी ।
सम्राट्मुख्यः सूर्यपाकप्रवीणः कस्याः कीर्त्तेर्नासि पात्रं नल ! त्वं ॥ २८ ॥

जय जय जय शत्रन् मङ्गलं मङ्गलं ते पुनरपि निजदेशे सुप्रवेशस्तवास्तु ।
इति कलकलवृन्दैर्वन्दिनां सूचितोऽभूत् पृथुकटकनिवेशस्तस्य गङ्गातटेषु ॥ २९ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने अष्टमे स्कन्धे प्रथमः सर्गः ॥ १ ॥

---

## अष्टमे स्कन्धे द्वितीयः सर्गः ।

---

तमागतमुपश्रुत्य कृतदिग्विजयं नृपम् । न पुष्करनृपस्यासीत् मनःक्षोभो मनागपि ॥ १ ॥
समर्थोऽपि नलस्तस्मिन् न च दण्डमधारयत् । क्व नु संबधबद्धानां प्रहर्तुं प्रगुणाः कराः ॥ २ ॥
प्रजिघाय ततो दूतं नलस्तस्मै वचोहरम् । परचित्तमहाकूपे स हि प्रथमसङ्क्रमः ॥ ३ ॥
स तच्चकलया वाचा सदाचारविदाम्वरः । अभाषत सभासीनमदीनं पुष्करं प्रति ॥ ४ ॥
दिष्ट्या त्वं वर्द्धसे राजन् ! जयेन विजयेन च । दशदिग्विजयं कृत्वा न च भ्राता समागतः ॥ ५ ॥
अथ भूमिभृतः सर्वान् नले कुर्वति किङ्करान् । वीरसेनकुलं कान्त्या जित्वा मेरुमपि स्थितम् ॥ ६ ॥
सर्वे शिरसि सानन्दं वहन्ति नलशासनम् । अग्रजत्वेन ते पूज्यः स तु राजा विशेषतः ॥ ७ ॥
तस्मिन्निह समायाते जिगीषौ ज्येष्ठबान्धवे । स्वागताचारवन्ध्यस्त्वं किं मूढ इव तिष्ठसि ? ॥ ८ ॥

श्रुतशीलः पुनस्तस्मै देशार्द्धस्य प्रदानतः । गृहीतुं कूलराज्यं तत् निर्दोपमतिरन्वशात् ॥ २३ ॥
ऋतुपर्णस्ततस्तस्मिन् बान्धवे जितकासिनि । द्वयोर्मन्त्रं निराचक्रे निर्व्याजं व्याजहार च ॥ २४ ॥
देव ! आमरिकं युद्धं विभागः कितवे च कः ? । तद्दुरोदरमेवैकं प्रतीकारोऽत्र युज्यते ॥ २५ ॥
अहं ते कथयिष्यामि तत् किञ्चिद् द्यूतमुत्तमम् । पुष्करं येन जित्वा त्वं राज्यं प्रत्याहरिष्यसि ॥ २६ ॥
पूर्वं गर्वाङ्गशालिन्या मालिन्या सह कान्तया । प्राप्तोऽभूवमहं राजन् ! प्रणन्तुं परमेष्ठिनम् ॥ २७ ॥
तदीयभुवनद्वारि रक्तचन्दनचर्चितः । अदृश्यत ज्वलन्नेत्रः क्षेत्रपालो भयङ्करः ॥ २८ ॥
तं रक्तकणवीरस्रक्शृङ्गारस्फारवक्षसम् । कटीतटनटद्वीरवीरघण्टाविराजितम् ॥ २९ ॥
रभसोत्तालवेतालनृत्यन्मृत्युकुशीलवम् । खड्गखेटकखात्कारक्षुभितक्षुद्रखेचरम् ॥ ३० ॥
वीक्ष्य विक्षिप्तचित्ता सा ममासादितसंभ्रमा । सुभ्रूरुवाच सावज्ञं विनिद्रकमलानना ॥ ३१ ॥ त्रिभिर्विशेपकम् ॥
अहो दिगम्बरः खेटशिरोहस्तः श्ववाहनः । क्षेत्रपालः त्रपालस्य घृणासौभाग्यवर्जितः ॥ ३२ ॥
अमावपि हि देवेषु प्राप्नोति गणनापदम् । महावृक्षोऽपि वा याति जात्या किं न द्रुमक्रमम् ॥ ३३ ॥
इति तस्याः प्रजल्पन्त्याः सद्यस्तन्मूर्त्तिमध्यतः । निर्जगाम स्फुटा वाणी सिंहनादसहोदरा ॥ ३४ ॥
आः पापे ! यन्महामोहादुपहासं करोसि मे । तदागामिचतुर्दश्यां करिष्यामि वधं तव ॥ ३५ ॥
दुःश्रवं तद् वचः श्रुत्वा मालिनी महिता मया । प्रसादयितुमारेभे भैरवं भक्तितत्परा ॥ ३६ ॥

रक्ष रक्ष महावीर ! गतास्मि शरणं तव । तवास्मि किङ्करी स्वामिन् ! देहि मे देव ! जीवितम् ॥ ३७ ॥
इति स्तुतिजुषस्तस्यास्त्रासक्षुभितचेतसः । बभूव वचनं भूयो भैरवप्रतिमोद्भवम् ॥ ३८ ॥
न हन्मि शतबद्धानां चणकानां क्रमेण चेत् । एकद्वित्रिचतुर्वृद्ध्या दत्से मुष्टियुतं मम ॥ ३९ ॥
न च तान् गणयेत् कश्चित् देयाश्च स्वयमेव मे । चतुर्यामावधिस्तेषां कालो दानस्य कर्मणि ॥ ४० ॥
सङ्ख्याकालक्रमातीतं यदि किञ्चिद् भविष्यति । तद् न शङ्कां करिष्यामि मारयिष्यामि निश्चितम् ॥ ४१ ॥
स्वीचक्रे सापि तद् वाक्यं भीता जीवितकाङ्क्षिणी । दुष्करेष्वपि कार्येषु कालक्षेपो महान् गुणः ॥ ४२ ॥
ततः प्रणम्य देवेशं विशेषात् परमेष्ठिनम् । प्राप्तः सौधमहं राजन् ! जातस्तद्दुःखदुःखितः ॥ ४३ ॥
कथं किल भवेदेतद् मुष्टिदानं सुदुष्करम् । अहो निरनुरोधित्वं भैरवस्य धिगीदृशम् ॥ ४४ ॥
हा कष्टं मयि नाथेऽपि प्रिया मम विपत्स्यते । इति मूढाय मे वेत्री शशंस मुनिमागतम् ॥ ४५ ॥
स नाम्ना शङ्करः श्रीमानाचार्यः कार्यविद्वरः । कृतातिथ्यो ममापृच्छत् विच्छायत्वस्य कारणम् ॥ ४६ ॥
मयापि कथितं तस्मै निजदुःखं तदुल्बणम् । सोऽप्यवोचदनूचानः कृपणं मां कृपापरः ॥ ४७ ॥
अहं पूर्वधरो राजन् ! प्रणीतं पूर्वसूरिभिः । पूजयाम्यक्षपूज्यं यद् विश्वसङ्ख्याविचक्षणः ॥ ४८ ॥
समानद्रव्यरूपाणां मुष्टिसंस्थानयोग्यया । सङ्ख्या सहृदयैर्ज्ञातुं शक्यते लीलया यतः ॥ ४९ ॥
तमक्षहृदयं मन्त्रं वदतः शृणु मन्मुखात् । इत्युक्त्वा रहसि श्रीमान् सूरिर्मामुपदिष्टवान् ॥ ५० ॥

सापि कान्ता मया दिष्टा तेन मन्त्रेण तत्क्षणम् । मुष्टिदानं कलत्रस्य क्षेत्रपालः सुनिर्ममे ॥ ५१ ॥
क्रमेणा तेन सुप्रीतः कलत्रभैरवोऽभवत् । गणप्रस्तारभङ्गेन गरुत्मानिव पिङ्गले ॥ ५२ ॥
स च मन्त्रस्त्वया नीतः कुण्डिनाध्वनि मन्मुखात् ! कृत्वा तद् विषयं द्यूतं देव ! दिव्यदिवानिशम् ॥ ५३ ॥
मुष्टितत्त्वं जवाद् जानन् राजन् ! स्वस्य परस्य च । केनापि जेष्यसे तत्त्वं सर्वदानविशारदः ॥ ५४ ॥
पुष्करं लीलया जित्वा निःकलङ्केन वर्त्मना । भज दिग्विजयश्रान्तः कुलराज्यं कुलोद्वहम् ॥ ५५ ॥
इति तत्कृतस्थकुलजस्य वाङ्मयं नृपतिर्निपीय परमामृतं रहः ।
उदतिष्ठदष्टकुलशैलपीठिकाकुरलीखलीकृतममल्लपुङ्गवः ॥ ५६ ॥
तस्याज्ञया नवदुरोदरमल्लयुद्धक्रीडारसव्यसनिनः शशिशुभ्रकीर्त्तेः ।
मन्था बभूवुरभितः क्षुभितं सृजन्त श्चित्तं जनस्य रचनागुणगौरवेण ॥ ५७ ॥
सिंहासनस्थितनिरन्तरभूमिपाल व्यालोलमौलिमणितारकितान्तरीक्षा ।
दूरं दुरोदरसभा शुशुभे शुभाभिः संभाविता विततवीतकलाकथाभिः ॥ ५८ ॥
अविरलवरवन्दिवृन्दविघ्नं कविकुलकेलिकलाकलापलिप्तम् ।
सदसदशिवकृत्तदाशु भेजे भुजविजिताखिलो नलो नरेन्द्रः ॥ ५९ ॥
उच्चारुचारुभिरभङ्गुरशीललीलैरामन्त्रितः सपदि वासवदूतदूतैः ।

तत्राययौ युयुसहस्रयुजा रथेन श्रीमान् स पुष्करनृपोऽपि हि पुष्कराक्षः ॥ ६० ॥
त्वं देव ! धूर्त्तः कितवाधिराजः प्रस्तूयसे पुष्कर ! पार्थिवोऽपि ।
द्रष्टुं द्वयोर्द्यूतमतिस्पृहा नस्तत्रेत्यवोचन्नृतुपर्णमुख्याः ॥ ६१ ॥
इतिश्रीमाणिक्यदेवसूरिकृते नलायने अष्टमे स्कन्धे द्वितीयः सर्गः ॥ २ ॥

## अष्टमे स्कन्धे तृतीयः सर्गः ।

ततः प्रववृते तत्र द्यूतमक्षमयं महत् । एकद्वित्रिचतुर्मुख्यैश्चतुर्भिर्दायकैः समम् ॥ १ ॥
स्वदायको जयं कुर्यात् हानिकृत्परदायकः । हानिर्जयोऽपि वा भूयादुपढौकनसङ्ख्यया ॥ २ ॥
आकृष्टिमुष्टिसङ्ख्यायाश्चतुर्भिर्भागमाहरेत् । शेषे न दायकव्यक्तिरेकद्वित्रिचतुर्मयी ॥ ३ ॥
नन्द्येकेन द्विको द्वाभ्यां त्रिकस्त्रिभिरुदाहृतः । चतुर्भिर्जायते पूर्णो दायकव्यक्तिरीदृशी ॥ ४ ॥
यत् किञ्चिद् लभ्यते वस्तु तद् विद्यादक्षसङ्ख्यया । शतलक्षगुणं वापि तद् भूयो भापितं भवेत् ॥ ५ ॥
तत्र द्वित्रिचतुर्वर्जे द्यूतकारो न वर्त्तते । उपर्युपरि दिव्यन्ति बहवोऽपि हि तद् गताः ॥ ६ ॥
तेन द्यूतेन रम्येण रेमाते नलकूबरौ । साक्षिणामिव सर्वेषां पश्यतां पृथिवीभुजाम् ॥ ७ ॥

पुनरपि द्यूत-क्रीडनम् ॥

जानन्नपि नलो मुष्टिं क्रीडारसविवृद्धये । परदायकमारेभे किञ्चिदप्यन्तरान्तरा ॥ ८ ॥
जयः पराजयश्चासीद् यावदल्पोऽभवत् पणः । महाद्यूतभरे लेभे स्वदायं नैव कूबरः ॥ ९ ॥
ततः पराजयक्षोभात् प्रभूतमुपढौकयन् । क्षेमेणापि नलेनोचे मुष्टिः संक्षिप्यतामिति ॥ १० ॥
दीयमानेऽमुना तस्मिन् कुम्भ्याश्वपरायणान् । दशैव क्रौञ्चकर्णारिर्दमनादीनवारयत् ॥ ११ ॥
हस्त्यश्वरथदुर्गाणि ग्रामाकरपुराणि च । हेलया हारयामास नले पुष्करपार्थिवः ॥ १२ ॥
मुद्रया सहिते कोशे कोष्ठागारे च हारिते । अपि शृङ्गारमात्मीयमुपढौकयति स्म सः ॥ १३ ॥
किमत्र बहुना राज्ञा नलेन स तथा जितः । यथा तेन पुरा राजा नल एव जितोऽभवत् ॥ १४ ॥
केन हि स्वीकृतं द्रव्यं कस्य द्यूतं वशंवदम् । कस्मिन् पण्याङ्गना रक्ता कं लक्ष्मीर्न विमुञ्चति ॥ १५ ॥
यस्मिन् पुत्रः कलत्रं च नामाकर्णं च हार्यते । न हि द्यूतस्य तस्यास्ति तुलया व्यसनं परम् ॥ १६ ॥
अस्ति पापात्मकं सौख्यं व्यसनेष्वपि केषुचित् । हानौ निःशेषसौख्यानां द्यूतमेकं व्यवस्थितम् ॥ १७ ॥
अकारानिलयं वन्द्यं प्रजागरसमुत्सवम् । विभवभ्रंशमस्तेनं अपर्जु करकर्पणम् ॥ १८ ॥
व्यामोहमसुरापाणं विषयत्यागमव्रतम् । वितनोति मनुष्याणां दुरन्तं हि दुरोदरम् ॥ १९ ॥ युग्मम् ॥
जितसर्वमनिर्गम्य कितवस्य कुतः सुखम् । न स्वस्था स्यादसृक् पीतमवान्त्वा जलसर्पिणी ॥ २० ॥
प्रविवेश समं सर्वैः पार्थिवैर्निषधो नृपः । उत्तुङ्गतोरणस्तम्भां राजधानीं निजां नलः ॥ २१ ॥

पुण्यपुण्यजनाकीर्णा सकर्णहृदयङ्गमा । विमानैर्व्योम्नि सञ्जाता जङ्गमेवापरा पुरी ॥ २२ ॥
अयं गुरुः पिता माता भर्त्ता मित्रं च भूपतिः । यद् वा सर्वस्वमस्माकं वीरसेनसुतो नलः ॥ २३ ॥
इत्यानन्दस्खलत्कण्ठैः प्रवदद्भिः परस्परम् । दृश्यमानः पुरीलोकैः प्राप राजपथं नृपः ॥ २४ ॥ युग्मम् ॥
अस्तूयत स सानन्दं बन्दिवृन्दैरमन्दधीः । उत्तंसितभुजस्तम्भैरम्भोजासनसन्निभः ॥ २५ ॥
जय द्विजनिषेवित ! द्विजनिरस्तमुक्ताफलद्विरेफसुमनःस्रजां द्विरसनाधिनाथोपम ! ।
द्विपाधिपसमभ्रम ! द्विजपतिस्वरूपानन ! द्विषत्कटककाननक्षयदवानल ! त्वं नल ! ॥ २६ ॥
अर्कतप्ततरुमूलवारिभिर्लङ्घनेन गिरिकन्दरीजुषाम् । निह्नुतस्तनुषु सर्ववैरिणां वैरसेनिभिषजा मदज्वरः ॥ २७ ॥

अलिरिव कमलिन्यां नर्मदायामिवेभः स्मर इव ललनायां धिष्ण्यपङ्क्त्यामिवेन्दुः ।
रस इव कवितायां मन्त्रशक्त्यामिवार्थः प्रविश निजनगर्यां सुप्रवेशस्तवास्तु ॥ २८ ॥
इत्थं पठद्विविधमागधवर्णनाढ्यं प्रीतः प्रविश्य कुलराजगृहं स राजा ।
आस्थानसीमनि सुवर्णमयेऽधितस्थौ सिंहासने समदसिंहसमानसत्त्वः ॥ २९ ॥
तत्र प्रणीतघनरत्नसुवर्णवर्षाहर्षाकुलाः सकलभूमिभुजः प्रणेमुः ।
तं स्वोचितेन विधिना भुवनाधिनाथं तत्प्रीणिताः प्रकृतयोऽपि यथाक्रमेण ॥ ३० ॥
ननृतुरननृताभिर्भङ्गिभिर्वारवध्वो जगदुरगदमुख्यं मङ्गलं गोत्रवृद्धाः ।



निजां राजधानीं प्राप्तो नलः ॥

सपदि भरतभर्त्तुस्तस्य राज्याभिषेके जहृषुरपि पितॄणां देवतानां च सङ्घाः ॥ ३१ ॥

इतिश्री माणिक्यदेवसूरिकृते नलायने अष्टमे स्कन्धे तृतीयः सर्गः ॥ ३ ॥

## अष्टमे स्कन्धे चतुर्थः सर्गः ।

ततः प्रववृते पृथ्व्यामखण्डं नलशासनम् । अखिलक्ष्माभृतां मूर्द्धनि रवेरिव महन्महः ॥ १ ॥
तांश्च विद्याधराधीशान् वैताढ्याचलवासिनः । स विश्वविजयी राजा विससर्ज कथञ्चन ॥ २ ॥
महाबलस्तु तत्रैव तस्थौ तद्भक्तिवाञ्छया । भीमजादेशवर्त्तिन्या केशिन्या सह सर्वदा ॥ ३ ॥
निर्जितः पुष्करो राजा निर्ययौ न निजालयात् । तस्मिन् स वैकृतं पूर्वं तस्मिन् मनसि लज्जितः ॥ ४ ॥
ईदृशे क्रौञ्चकर्णारिर्देवी च दमनस्वसा । अभिगम्य गृहं संभावयामासतुराशु तम् ॥ ५ ॥
वत्स ! किं हृदये दुःखं दधासि बहुधा मुधा । त्वयि ह्येवंविधे बन्धौ मम सौस्थ्येन को गुणः ? ॥ ६ ॥
अहं च त्वं च मेदिन्यां वीरसेनसुतावुभौ । एकस्त्वं देवरो देव्या दमयन्त्या ममानुजः ॥ ७ ॥
व्यवसायः समग्रोऽयं कुटुम्बस्य कृते नृणाम् । तदेव यस्य नात्मीयं तस्य क्लेशो निरर्थकः ॥ ८ ॥
येषां कुलजने दुःस्थे परेषु धनपोषणम् । बहिःसारा हि ते लोका विशालाः फलसन्निभाः ॥ ९ ॥

धन्याः स्वदोषवक्तारो धन्याः स्वगुणलज्जिताः । धन्याः स्वकार्यनिश्चिन्ता धन्याः स्वजातिपोषकाः ॥ १० ॥
तद् विमुञ्च मनःखेदमावाभ्यां सांप्रतं जितम् । विभिन्नं सूतवङ्खूयः कुटुम्बं मिलितं हि नः ॥ ११ ॥
इत्युक्त्वा गाढमालिङ्ग्य समाघ्राय च मूर्द्धनि । अर्द्धराज्यधरं चक्रे पुष्करं कलिनाशनः ॥ १२ ॥
त्रिखण्डभरतैश्वर्यं तस्यैवं कुर्वतः सतः । जज्ञे नहुषनाभागमुख्यानां जर्जरं यशः ॥ १३ ॥
पुण्यहानिकृतः स्वर्गात् पुण्यक्षेत्रे महीतले । तस्य सौराज्यतः पुंसां सविशेषस्पृहाभवत् ॥ १४ ॥
श्रुतशीलमहामात्यं कृत्वा राज्यधुरन्धरम् । सिषेवे केवलं नित्यं धर्मकामौ स पार्थिवः ॥ १५ ॥
कदाचिदपि केशिन्या विरहोद्वेगवर्णनैः । कदाचिदृतुपर्णेन समं कुब्जत्ववार्त्तया ॥ १६ ॥
इत्थमन्यैरपि क्रीडाविनोदैर्नन्दयन् जगत् । समयं गमयामास सदासुखमयं नलः ॥ १७ ॥ युग्मम् ॥
अन्यदा सहितो देव्या कल्याणिकमहोत्सवे । ययौ तमोपहे तीर्थे प्रणन्तुं परमेष्ठिनम् ॥ १८ ॥
तत्र तद्भुवनं दृष्ट्वा कुर्वन् चरणचारिताम् । भेजे वैनयिकं वेषं सावधानेन चेतसा ॥ १९ ॥
ततो धर्मद्रुमस्यास्य दृढभक्त्यावनीपतिः । प्रदक्षिणक्रमव्याजादालवालमचीकरत् ॥ २० ॥
सालङ्कारैश्च शब्दार्थैः स्तुत्वा स परमेष्ठिनम् । तद्भक्तौ विदधे भूमिं सकलां दृष्टिगोचराम् ॥ २१ ॥
सहर्षेण महर्षीणां कृत्वा चरणपूजनम् । कृतार्थां नृपतिर्मेने मनसा निजसंपदम् ॥ २२ ॥
इत्थमक्लिष्टमष्टाहमाराध्य परमेष्ठिनम् । सभार्यो निषधः स्कन्धात् सम्राडवततार सः ॥ २३ ॥



पुष्कराय राज्यार्द्धं ददाति नलः ॥

तस्यानलस्थलीसीम्नि वहतः सह सेनया । ससससिर्नभोमार्गमुल्लङ्घ्य जलधिं ययौ ॥ २४ ॥
ततः प्रादोषिकध्वान्तं सान्द्रं कर्तुमिवोद्यताः । रभसा धूतधूलीकाः प्रचण्डा मरुतो ववुः ॥ २५ ॥
पिण्डीकृत्य दिशः सर्वाः सरेणौ वाति मारुते । एकवर्णं जगच्चक्रे रुद्धदृष्टिपथं तमः ॥ २६ ॥
अनुचरीचविज्ञाना दिग्मूढा रुद्धवर्त्मपथा । अवलम्ब्य ययौ सेना सा सकामेव कामिनी ॥ २७ ॥
तस्थौ न तत्क्षणं खिन्नः सेनया सह पार्थिवः । भूपालाः कालवेत्तारो विशेषेण च तादृशः ॥ २८ ॥
अत्रान्तरे रजःक्लेशान् विरते पृतनारवे । लिखितेष्विव सर्वेषु सीदत्सु नृगजादिषु ॥ २९ ॥
गहने तत्र कान्तारे निषधस्कन्धसन्निधौ । भूरिभ्रमरझङ्कारं शुश्राव कलिनाशनः ॥ ३० ॥
किमत्र कमलं पुष्पं ? करटी कीचकोऽपि वा ? । तिष्ठतीति महान् तस्य हृदये संशयोऽभवत् ॥ ३१ ॥
ततस्तद् वीक्षितुं राजा कौतुकोत्तरलाशयः । ऊचे जवनिकामध्ये नरयानस्थितां प्रियाम् ॥ ३२ ॥
प्रकटीभव वैदर्भि ! प्रतिसीरामपावृणु । त्वद्भालतिलकज्योत्स्ना तिमिरं हर्तुमर्हतु ॥ ३३ ॥
एवमुक्त्वा प्रकाशाभूत् सहसा दमनस्वसा । जज्ञे च गहने कस्मिन् प्रदेशे जर्जरं तमः ॥ ३४ ॥
शीर्णे तमः पुरःस्थित्या विविक्ते विहिते जनैः । ददतुर्भृङ्गझङ्कारानुसारं प्रति तौ दृशः ॥ ३५ ॥
तत्राद्भुतागमसमाधिसमृद्धिमुद्रानिस्पन्दमीशमिव लेप्यमयं मुनीन्द्रम् ।
तौ पश्यतः स करिराजकपोलकापसङ्क्रान्तदानमिलितालिकुलाद्यमानम् ॥ ३६ ॥

तं वीक्ष्य विक्षिप्तमना मुनीन्द्रं महीमहेन्द्रः सहितः सुदत्या ।
अहो ! तपः कष्टमहो दृढत्वमहो ! मुमुक्षेति भृशं शशंस ॥ ३७ ॥
पार्श्वस्थया च परिचारिकयेव देव्या सज्जीकृतोपकरणः करणं तदीयम् ।
भक्त्या स्वयं च समवाहयदाशु यत्नादुत्कीलितभ्रमरकण्टककोटिभागः ॥ ३८ ॥
मुनिवरवरिवस्यावश्यवृत्तिं वितन्वन् नृपतिरपि तदानीमात्मना सौख्यमाप ।
स च सपदि समन्ताच्चण्डवातः शशाम प्रकटितरुचिरुच्चैरिन्दुरप्युज्जगाम ॥ ३९ ॥
दृढतरमपि जित्वा दुष्टसत्त्वोपसर्गं स्वयमपि मुनिसिंहः संहृतध्यानमुद्रः ।
पदमिव मुदितायां भव्यसत्त्वे विधातुं प्रशमपुलकिताभ्यां लोचनाभ्यामपश्यत् ॥ ४० ॥
अनुस्मृतानव मङ्गलमस्तु ते जय मुनीश ! निशाकरनिर्मल ! ।
अभिननन्द तमिन्दुमुखः स्वयं नृपतिरित्थमुतथ्यसमानधीः ॥ ४१ ॥
एतत् किमप्यनवमङ्गलमङ्गलाङ्कं यत् कौतुकैकरसिकः सुकविश्चकार ।
तस्यार्यकर्णनलिनस्य नलायनस्य स्कन्धो महाभरतयाभवदष्टमोऽयम् ॥ ४२ ॥

इति श्री माणिक्यदेवसूरिकृते नलायने अष्टमे स्कन्धे चतुर्थः सर्गः ॥ ४ ॥

समाप्तोऽयं अष्टमः स्कन्धः ।

# नवमः स्कन्धः ।

## नवमे स्कन्धे प्रथमः सर्गः ।

अथ नत्वा सपत्नीके नृपतौ पुरतः स्थिते । उवाच विशदां वाचं वाचंयमशिरोमणिः ॥ १ ॥
राजन् ! स्वभावभव्यस्य भवतो धर्मदेशनाः । दीयमाना विराजन्ते कर्पूरे पुष्पवासवत् ॥ २ ॥
राज्यं विभवसंपूर्णं भार्या भक्तिपरायणा । धर्मश्रद्धाचितं चेतश्चिन्त्यते किमतः परम् ॥ ३ ॥
राजन् ! दमनकस्याहं सतीर्थ्यस्तथ्यवाग् मुनिः । अर्थानुगामिना नाम्ना विश्रुतः श्रुतसागरः ॥ ४ ॥
तत् किमत्र बहूक्तेन ममाशीर्युवयोरियम् । त्वमिवान्योऽपि सर्वोऽस्तु नृपतिर्धर्मतत्परः ॥ ५ ॥
तमेवं वादिनं विद्वान् शत्रुकालानलो नलः । व्याजहार हरन् चित्तं साञ्जलिर्जलजाननः ॥ ६ ॥
भगवन् ! धन्य एवास्मि सर्वथापि जितं मया । यमेवमनुरुध्यन्ते निर्ममास्त्वादृशा अपि ॥ ७ ॥
कलिर्जितः प्रिया प्राप्ता साधिता भरतावनी । करोति न तथा हर्षं यथा युष्मत्कृपा मयि ॥ ८ ॥
भगवन् ! सर्वसामान्ये मानुष्येऽपि हि तिष्ठति । अलौकिकमिदं देव्या ललाटतिलकं कुतः ? ॥ ९ ॥
कथं च विरहो देव्याः कञ्चित् कालमभूद् मम ? । त्रिखण्डभरतैश्वर्यं कथं वाधिगतं मया ? ॥ १० ॥

इति पृच्छन्तमुर्वीशं समुवाच महामुनिः । शृणु ते कथयिष्यामि सर्वमेतद् यथातथम् ॥ ११ ॥
परमावधिभेदेन केवलज्ञानरूपिणा । मम नाविदितं किञ्चिद् लोकालोकेऽपि वर्त्तते ॥ १२ ॥
पुराभूद् मम्मणो राजा नाम्ना भुवमधीश्वरः । प्रचण्डचरितः श्रीमान् वीरो वीरमतीप्रियः ॥ १३ ॥
केवलं बलवान् दाता युवा धीरोद्धतश्च सः । अनार्यदेशजातत्वात् सम्यग् धर्मं विवेद न ॥ १४ ॥
कदापि स हयारूढः कण्ठार्पितशरासनः । पापर्द्धिरसिकः स्वैरं बभ्राम वनभूमिषु ॥ १५ ॥
इत्युग्रमृगयाभूतग्रहव्यग्रे महीपतौ । अवदत् तीर्थयात्रार्थी सार्थोऽष्टापदवर्त्मनि ॥ १६ ॥
तत्र चित्रपरीधाना नानायानस्थिता नराः । अभूवन् बहवो भव्याः स्तोतव्या राजवन्दिनाम् ॥ १७ ॥
तान् दानदायिनो मुक्त्वा तेषां मध्ये स्थितं मुनिम् । अनीतितटिनीग्राहः स जग्राह महामुनिम् ॥ १८ ॥
न कश्चिदपि तत्रासीत् तस्य रक्षाक्षमो जनः । शक्तिरुक्ता समानेषु को बली बलवत्तरे ? ॥ १९ ॥
बलाद् निर्वास्य तं सार्थं सामर्थ्येन महीभुजा । चिरं स ददृशे क्रुद्धदृशा विषदृशाकृतिः ॥ २० ॥
तस्य पश्यन् महीशय्या विरूक्षपरुषं वपुः । अहो ! बीभत्स इत्युक्त्वा मुमोच नृपतिः शुनः ॥ २१ ॥
स दन्तैः सारमेयाणां वज्रसारमयैरिव । मुनिं विभेत्तुमारेभे कुठारैरिव पादपम् ॥ २२ ॥
स वज्रर्षभनाराचदृढसंहननो मुनिः । विषेहे तद् यथा वेगं शान्तिशीतेन चेतसा ॥ २३ ॥
शापे हतिं हतौ मृत्युं मृत्यौ संयमरक्षणम् । गणयन्तस्तितिक्षन्ते लाभमेव हि साधकाः ॥ २४ ॥



श्रुतसागरेण दत्ता धर्मदेशना ॥

सोऽपि मुक्त्वा शुनस्तस्मिन् मुनौ मनुजवन्दिते । राजा तरुतलामन्नमध्यास्त पटमण्डपम् ॥ २५ ॥
तदा तत्र प्रिया तस्य राज्ञी वीरमती स्वयम् । अनेकलक्ष्यहस्ताभिः समं मेरीभिराययौ ॥ २६ ॥
ततो भूभुजि भुञ्जाने खञ्जनाक्षी निषेदुषी । ददर्श तदवस्थं तं मुनिं नयनयोः पुरः ॥ २७ ॥
तं वीक्ष्य मङ्क्षु मुषितेव विभिन्नचित्ता सा शीघ्रमुत्थितवती शुनकानपास्य ।
गाढं शुशोच सुचिरं शुचिशीललीलाकीलालमालितसमस्ततनुं मुनिं तम् ॥ २८ ॥
केयं मनुष्यमृगया धिगहो प्रमादं हा दैव ! कोऽयमतिदुष्टमतिप्रपञ्चः ।
कल्पद्रुमः परशुभिः शकलीकृतोऽयं चिन्तामणिर्विदलितः कठिनोपलेन ॥ २९ ॥
शापं कदापि कुपितस्तव चेददास्यत् तत् का गतिः समभविष्यदिह क्षणेन ? ।
एहि क्षमापरममुं भगवन्तमन्तर्वन्दस्व विश्वजनवन्द्यमनिन्द्यकीर्त्तिम् ॥ ३० ॥
इति हिमगिरिराजा बोधितो वीरमत्या तमनु मुनिवरेन्द्रं भूयसा भक्तियुक्तः ।
मषणगणकृतानां तस्य दन्तव्रणानां रुजमुरुमपहर्त्तुं सप्रयत्नो बभूव ॥ ३१ ॥

इति श्री माणिक्यदेवसूरिकृते नलायने नवमे स्कन्धे प्रथमः सर्गः ॥ १ ॥



## नवमे स्कन्धे द्वितीयः सर्गः ।

अथ नत्वा नृपं शान्तं विदधे लब्धिलीलया । निजनिष्ठीवनेनैव यथावस्थं वपुर्मुनेः ॥ १ ॥
तमालोक्य तदाश्चर्यं विस्मितो मनसा नृपः । शुशोच मूढमात्मानं मम्मणः स्वेन कर्मणा ॥ २ ॥
ऊचे स विलपन्नुच्चैर्निर्मोहेन महात्मना । मा विषीद महाराज ! निराबाधोऽस्मि पश्य माम् ॥ ३ ॥
यत् पुनस्त्वादृशो राजा फलं मानुष्यशाखिनः । सम्यग् धर्मं न जानाति केवलं तद् दुनोति माम् ॥ ४ ॥
धर्मावाप्तिर्महर्षिभ्यः सर्वेषामपि जायते । कष्टं स्वकर्मणानेन मत्तः पापं त्वयार्जितम् ॥ ५ ॥
अन्तःपुरं पुरं चापि किं राज्ञां स्वपदैः कृतम् । विनापराधं तत् तेषां बाधामाधाय का गतिः ? ॥ ६ ॥
दन्तैस्तृणानि गृह्णन्तं न घ्नन्ति रिपुमप्यहो ! । तृणाशिनः कथं जीवा हन्यन्ते विविधायुधैः ॥ ७ ॥
अराजकमहो विश्वं ही नो निःशरणं जगत् । दुर्बलो बलिभिः कस्मात् हन्यते बालिशैः पशुः ॥ ८ ॥
कलावतीप्रभृतिभिर्मित्रानन्दादिभिस्तथा । अल्पया हिंसया प्राप्तं दुःखं सागरदुस्तरम् ॥ ९ ॥
कपालपुटके भिक्षां कुर्वन् दीनो दिगम्बरः । चिरं ब्रह्मशिरच्छेदहत्यया नटितो हरः ॥ १० ॥
किं न सन्त्यन्यभक्ष्याणि कथं वार्तैर्न जीव्यते ? । जीवद्रोहेण विषयान् गृह्णतो जीवितेन किम् ? ॥ ११ ॥
लब्ध्वा मानुष्यकं रम्यं दुर्लभं भवकोटिभिः । न यस्य विषयत्यागो नौ निषण्णः स मज्जति ॥ १२ ॥



धर्मदेशनान्तरे नलस्य पूर्वभवकथनम् ॥

इत्येवमादिभिर्वाक्यैर्व्यक्तनाम्नो महामुनेः । मम्मणो मोहमुत्सृज्य सम्यग् धर्ममन्यत ॥ १३ ॥
प्रतिपद्य ममार्योऽपि गृहिधर्मं स शुद्धधीः । प्रणम्य चरणौ पश्चात् कृताञ्जलिरभापत ॥ १४ ॥
क्षमस्व भगवन्नेषु दुर्बुद्धिषु दुरात्मसु । अनार्यदेशजातेषु मादृशेषु कुजन्तुषु ॥ १५ ॥
तद् ब्रूहि भगवन् ! कुत्र यात्रां कुर्वन् वनान्तरात् । चिरं खिलीकृतोऽसि त्वं मयका मूढबुद्धिना ॥ १६ ॥
मुनिरप्युक्तवान् वाक्यं महाभाग ! निशम्यताम् । गिरिमष्टापदं नाम्ना जानामि विदितं भुवि ॥ १७ ॥
तस्यास्ति शिखरे रम्ये भरतेश्वरकारितम् । चैत्यं सिंहनिषद्याख्यं मूर्त्तिभिर्युक्तमर्हताम् ॥ १८ ॥
अशक्यः स मनुष्याणामारोढुं सांप्रतं गिरिः । प्रत्येकं योजनोच्छ्रायैः सोपानैः सहितोऽष्टभिः ॥ १९ ॥
नृणामैदंयुगीनानां केवलं कालयोगतः । तत्तटस्पर्शमात्रेण तीर्थयात्राफलं भवेत् ॥ २० ॥
यः पुनर्वन्दते गत्वा प्रतिमाः श्रीमदर्हताम् । अन्तर्भवाष्टकं सम्यक् स प्राप्नोति परं पदम् ॥ २१ ॥
तच्च शासनदेवीनां विरलस्य हि कस्यचित् । आराधनप्रसन्नानां सान्निध्येनोपपद्यते ॥ २२ ॥
तदहं गन्तुमिच्छामि राजन् ! तं पर्वतं प्रति । न प्रारब्धमनिर्वाह्य सन्तुष्यति हि मानसम् ॥ २३ ॥
एष यात्रान्तरायोऽपि सफलो मेऽभवत् पुनः । यत् तव प्रतिबोधेन महान् धर्मो मयार्जितः ॥ २४ ॥
इत्युक्त्वा तीर्थयात्रार्थं ज्ञात्वा जिगमिषुं मुनिम् । पुरः सार्थविलम्बार्थं स प्रैषीद् निजमानुषान् ॥ २५ ॥
स्वयं च तमनुव्रज्य महाभक्त्या महीपतिः । सार्थेन सह संयोज्य नत्वा च विनिवृत्तवान् ॥ २६ ॥

तदादि सहितो देव्या गीतार्थान् परिशीलयन् । मम्मणो धर्मकर्माणि चक्रे चक्रधरोपमः ॥२७॥

देवीव वीचिभिरभीक्ष्णमनुव्रतादि धर्माम्भसां हि मितवान्मनसाङ्गभागा ।
अष्टापदाद्रिशिखरस्थितचैत्यमूर्वी सुश्रद्धधे किमपि वीरमती प्रणन्तुम् ॥२८॥

विज्ञाय च व्यतिकरं हृदि सा तदर्थसामर्थ्यवाहनसहायवतामसाध्यम् ।
सान्निध्यतः किमपि शासनदेवतायाः पूर्णं मनीषितमियेष निजं विधातुम् ॥२९॥

तदा तदाराधनसाधनाय तदीयमूर्त्तिं विधिवद् विधाय ।
अपूजयत् प्राज्यसमाधिबन्धा हिमाद्रिभूपालचमूस्त्रिसन्ध्यम् ॥३०॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने नवमे स्कन्धे द्वितीयः सर्गः ॥ २ ॥

---

## नवमे स्कन्धे तृतीयः सर्गः ।

---

इति तस्या वितन्वत्याः प्रीतां शासनदेवताम् । कुशस्रस्तरशायिन्या दिनानि कतिचिद् ययुः ॥ १ ॥
सा जागरणमष्टम्यां पूर्णिमायां च कुर्वती । निनाय कलगीताढ्यैरात्रीरारात्रिकादिभिः ॥ २ ॥

महम्यशः कुमारीणां वस्त्रालङ्करणैः समम् । महर्षिदानमुख्यानि भक्तपानानि सा ददौ ॥ ३ ॥
स्वयं निखण्डितक्लेशा पद्मागोनामखण्डधीः । चक्रे मासोपवासानां प्रयता पञ्चविंशतिम् ॥ ४ ॥
ततस्तनपसा तेन प्रीता प्रत्यक्षतां गता । उवाच विशदं वाक्यं स्वय शासनदेवता ॥ ५ ॥
वत्से ! कमलपत्रेण लोहभारः समुद्धृतः । तपसः क्षमतां नीतं वपुर्यदिदमीदृशम् ॥ ६ ॥
वशीकृतास्मि साहं ते तन्वङ्गि ! तपसामुना । चन्दनद्रुमकन्दल्याः सौरभ्येणेव पन्नगी ॥ ७ ॥
इदं ते पूर्यते शीघ्रं कमलाक्षि ! मनीषितम् । कृतं कालविलम्बेन सज्जीभव कृशोदरि ! ॥ ८ ॥
इति तां प्रगुणीभूतां शंसन्ती शासनामरी । विमाने स्वयमारोप्य निनायाष्टापदे गिरौ ॥ ९ ॥
तमष्टयोजनोच्छ्रायमष्टदिग्भागविश्रुतम् । सा वन्दते स्म साष्टाङ्गमष्टापदमहागिरिम् ॥ १० ॥
नूनं स भरतो राजा मनुष्य इति नेष्यते । दिव्यं यस्येदमद्यापि कीर्त्तनं भुवि वर्त्तते ॥ ११ ॥
इत्यन्तश्चिन्तयन्ती सा प्रासादे तत्र सुन्दरे । प्रविवेश विशालाक्षी देव्याः सान्निध्ययोगतः ॥ १२ ॥
दिग्दशाश्चतुर्भेदविभक्तान् भक्तितत्परा । स्तम्भस्थितान् ववन्दे सा चतुर्विंशतिमर्हतः ॥ १३ ॥
तेषां च विधिवत् पुष्पैः पूजां विदधती सती । सफलं सा निजं मेने जीवितव्यं च जन्म च ॥ १४ ॥
प्रत्येकमपि मूर्त्तीनां नानारत्नमयानि सा । तिलकानि ललाटेषु रचयामास भाविनी ॥ १५ ॥
स्थिता च जानुयुग्मेन मुक्ताशुक्तिकमुद्रया । ततः स्तुतिमिमां चक्रे महार्थां मोहवर्जिताम् ॥ १६ ॥

नमः परेभ्योऽपि परापरेभ्योऽपि नमो नमः । परापरपरेभ्योऽपि सर्वविद्भ्यो नमो नमः ॥ १७ ॥
इति नत्वा च नुत्वा च मासं पूर्णमनोरथा । अमुच्यत द्रुतं देव्या समानीय स्वमन्दिरे ॥ १८ ॥
सापि तत्र विचित्राङ्गी देवयात्रासमाश्रयम् । शशंस सकलं वृत्तं प्रीता प्रातः पतिं प्रति ॥ १९ ॥

अजनि तदनु रम्यं देवयात्रागमार्थं जनपदजनभोज्यं वर्षमेकं महीयः ।
अविरलकलगीतिस्फीतिमन्तः समन्तादनिशमपि नितान्तं दध्वनुर्वाद्यभेदाः ॥ २० ॥

धर्मप्रतीतिप्रतिपन्नचित्तौ जायापती तौ धनदत्तवित्तौ ।
वर्षाणि शेषाण्यपि पुण्यकृत्यैरुल्लङ्घयामासतुरप्रमत्तौ ॥ २१ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने नवमे स्कन्धे तृतीयः सर्गः ॥ ३ ॥

## नवमे स्कन्धे चतुर्थः सर्गः ।

भूयो भवे तृतीयेऽस्मिन् नगरे पोतानाभिधे । तौ धन्यो धूसरी चेति दम्पती समजायताम् ॥ १ ॥
पाशुपाल्यसमृद्धौ तौ भद्रकौ च स्वभावतः । अभूतां परमप्रेमप्रतिबद्धौ परस्परम् ॥ २ ॥
न कोऽपि व्यथितो वाचा न किञ्चित् कस्यचिद् हृतम् । न कापि खण्डितं शीलं ताभ्यामात्मीयजन्मनि ॥ ३ ॥

धर्मदेशनान्तरे नलस्य पूर्वभवकथनम् ॥

क्षुधितस्य क्षुधा भग्ना तृषितस्य तृषा हृता । श्रान्तस्य च श्रमश्छिन्नः स्वशक्त्या प्रतिवासरम् ॥ ४ ॥
अन्यदा प्रथमप्रावृट्समये समुपागते । सजीवधनमात्मीयं द्रष्टुं धन्यो बहिर्ययौ ॥ ५ ॥
वर्णाविगवगम्यैर्दूराहूय नामभिः । अलालयद् यथौचित्यं स धेनुमहिषीर्निजाः ॥ ६ ॥
तदा च कश्चिदप्येकः कायोत्सर्गस्थितो मुनिः । तत्र त्रपापरित्राणमात्रवस्त्रावृतोऽभवत् ॥ ७ ॥
स वृष्टिमकलक्लिष्टशरीरस्य महामुनेः । तस्य मूर्द्धनि धन्यः स्वं तत्र च्छत्रमधारयत् ॥ ८ ॥
मुनिस्तस्येत्थमासन्ध्यमवन्ध्यपरिचर्यया । वायुवृष्टिव्यथावेगं निस्ततार सुदुस्तरम् ॥ ९ ॥
अपृच्छच्च मुनिं धन्यो नत्वा मधुरया गिरा । कुतः क्व गन्तुकामोऽसि ? कथ्यतां भगवन्निति ॥ १० ॥
मुनिरप्यूचिवान् पाण्ड्यदेशात् लङ्कापुरीं प्रति । नतये गुरुपादानां एष गच्छन् किलाभवम् ॥ ११ ॥
इमं तु सांप्रतं वीक्ष्य वर्षासमयमागतम् । इहैव स्थातुकामोऽस्मि जन्तुबाहुल्यतो भुवः ॥ १२ ॥
इदमाकर्ण्य धन्योऽपि तं नेतुं निजमन्दिरे । ददौ महिषमारोढुं पङ्कसङ्करशङ्कया ॥ १३ ॥
योग्यं न यानमस्माकमित्युक्त्वा श्रमणाग्रणीः । पद्भ्यामेव पुरस्यान्तः समं तेन समाययौ ॥ १४ ॥
तत्र पीयूषतुल्येन पयसा भक्तितत्परः । अकारयद् मुनिं धन्यः पारणं पुण्यकारणम् ॥ १५ ॥
सोऽपि तस्मै सभार्याय कुर्वन् धर्मानुशासनम् । प्रतिपाल्य मुनिः कल्पं जगाम गुरुसन्निधौ ॥ १६ ॥
तदादि धर्मसंपत्त्या धूसरीधन्ययोस्तयोः । वहतोश्चारु गार्हस्थ्यं जज्ञे परिणतं वयः ॥ १७ ॥

सर्वसङ्गपरित्यागं प्रान्तकाले विधाय तौ । महाव्रतधरौ धीरौ शरीरं विससर्जतुः ॥ १८ ॥
ततः सततसौख्याढ्ये स्वर्गे साधर्म्यवाहिनि । उभौ हैमवते क्षेत्रे जातौ मिथुनधर्मिणौ ॥ १९ ॥
यत्र हेममयी भूमिः पक्षिणो मधुरस्वराः । अच्छशीतानि तोयानि वायवोऽतिसुखावहाः ॥ २० ॥
पर्यन्ते युग्ममेवैकं तदपत्यं प्रजायते । एकोनाशीत्यहः पश्चात् तद् मुक्ता यान्ति ते दिवम् ॥ २१ ॥
वस्त्रपात्रनिकेतस्रक्शय्याभोज्यासनादिकम् । तेषां कल्पद्रुमा एव सर्वं यच्छन्ति वाञ्छितम् ॥ २२ ॥
इति वर्षमयीं चर्यां संपूर्णामनुभूय तौ । महेन्द्रत्रिदिवेऽभूतां देवौ दाम्पत्यशालिनौ ॥ २३ ॥
क्षीरडिण्डीरनामानौ वहन्तौ तैजसं वपुः । परस्परमपि प्रेम प्रकामं भजतः स्म तौ ॥ २४ ॥
तत्र पल्याधिकं स्थित्वा सागरोपमसप्तकम् । च्युत्वा च नलभैम्याख्यौ सञ्जातौ दम्पती युवाम् ॥ २५ ॥
तदित्थं यत् त्वया पूर्वं मुनिः सार्थाद् वियोजितः । तवापि प्रियया साकं तद्वियोग इहाभवत् ॥ २६ ॥
क्षमितः स त्वया तर्हि नाभविष्यद् मुनिर्यदि । व्यरमिष्यत् तदद्यापि तव किं विरहानलः ? ॥ २७ ॥
यच्च धन्यभवे दध्रे छत्रं मुनिवरोपरि । एकच्छत्रमिदं राज्यं तव राजन् ! ततोऽभवत् ॥ २८ ॥
यदर्हद्बिम्बभालेषु तिलकानि ततान च । सञ्जाता तेन देवीयं भास्वत्तिलकलाञ्छिता ॥ २९ ॥
यच्च पञ्चभवान् यावद् दाम्पत्यमजनिष्ट वाम् । तद्भवान्तरसंस्काराद् युवयोः प्रीतिरद्भुता ॥ ३० ॥
तद् वाक्यमिति शृण्वन्तावन्तश्चिन्तापरायणौ । उपपन्नवपुःकम्पौ दम्पती तौ मुमूर्च्छतुः ॥ ३१ ॥

प्रतिबिम्बमिवादर्शे स्वप्ने वीक्ष्य भवान्तरान् । मूर्च्छानिद्रां परित्यज्य पुनः स्वस्थौ बभूवतुः ॥ ३२ ॥

अनुभवरमणीयं ज्ञानिनस्तस्य वाक्यं, त्रिभुवनजनलीलासाक्षिणः संस्तुवन्तौ ।
तदधिकपरिचर्यावर्ययातीत्य रात्रिं, दिवसवदनसीम्नि स्वं गृहं प्रापतुस्तौ ॥ ३३ ॥

पुष्पावचायजलकेलिकलाविलासैर्दोलाधिरोहशशिवर्णनसंश्रयोगैः ।
सङ्गीतकैश्च समयं गमयाम्बभूव तत् सर्वथा मिथुनमन्यथितार्थधर्मैः ॥ ३४ ॥

विरहजानवमं गललग्नया हृदयदुःखचयान् सुतनु ! त्वया ।
इति पर परिरभ्य सुनिर्भरं रहसि भीमसुतामवदद् नलः ॥ ३५ ॥

एतत् किमप्यनवमं नवमङ्गलाङ्कं यत् पञ्चनाटककविर्वितताान नव्यम् ।
तस्यार्यकर्णनलिनस्य नलायनस्य स्कन्धो जगाम नवमो रमणीय एषः ॥ ३६ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने नवमे स्कन्धे चतुर्थः स्कन्धः ॥ ४ ॥

समाप्तोऽयं नवम. स्कन्धः ।



# दशमः स्कन्धः

## दशमे स्कन्धे प्रथमः सर्गः ।

तयोर्निबिडसंसारक्रीडासरणिसारणिः । अनवस्थितसन्ताना न कापि तुष्टिमाययौ ॥ १ ॥
सुरूपं प्रियकान्तत्वं साम्राज्यं रोगहीनता । इत्यमी हेतवः सर्वे स्मराग्निसमिधः स्मृताः ॥ २ ॥
सातिरेकाणि वर्षाणां लक्षणि नवतिर्ययुः । नित्यं नवनवस्तस्य तथापि मदनोत्सवः ॥ ३ ॥
सौन्दर्यविजितेन्द्रस्य साधर्मिकतया तनोः । आनुगुण्यमिव प्राप नैषधस्य मनोभवः ॥ ४ ॥
तमन्यदा सभासीनं प्रतिहारनिवेदितः । ऊचे कुशीलवाचार्यः कश्चित् प्रेक्षाणकक्षणे ॥ ५ ॥
वहवोऽपि त्वया दृष्टाः पृथिव्यां देव ! नर्त्तकाः । पुनर्नर्त्तकमेकं मे नृत्यन्तमवधारय ॥ ६ ॥
इति प्रश्नावितं तेन क्षिप्त्वा जवनिकां जवात् । प्रविवेश भ्रमन् रङ्गमण्डपे ग्रामशूकरः ॥ ७ ॥
धीरमञ्जीरझात्कारं हारकेयूरमालिनम् । सुकण्टमुकुटाटोपं वल्गत्कनककुण्डलम् ॥ ८ ॥
विचित्रकरणोपेतैरङ्गहारैर्मनोहरैः । नृत्यन्तं वीक्ष्य तं भेजे विस्मयं सकला सभा ॥ युग्मम् ॥ ९ ॥
तालमानलयैस्तस्य घण्टालीनादिभिः शुभैः । चित्रचित्रतरैश्चित्तं चकृपे विदुषामपि ॥ १० ॥

नैषधोऽपि विशेषतः स्तुवन् शिक्षासमर्थताम् । प्रसन्नस्तदुपाध्यायं हेमलक्षैरयोजयत् ॥ ११ ॥
तं च नृत्यस्य विरतौ प्रस्विन्नं ग्रामशूकरम् । चन्दनागरुकर्पूरैर्लिप्तगात्रमकारयत् ॥ १२ ॥
तथा सुगन्धिलिप्तोऽपि राज्ञः पश्यत एव सः । स्नानप्रणालकुल्याया विश्रं पङ्कमगाहत ॥ १३ ॥
अहो ! कष्टमहो ! कष्टं कलावानयमीदृशः । इदं च कुत्सितं कर्म किमप्येतस्य दृश्यते ॥ १४ ॥
इत्युक्त्वा वैरसेनिस्तं पुनः पूतमकारयत् । लुलोठ तत्क्षणं गत्वा स भूयस्तत्र कर्दमे ॥ १५ ॥
ततस्तं कुत्सितासक्तं निःशूकं ग्रामशूकरम् । निनिन्द निर्भरं राजा कुर्वन् मुखविकूणिकाम् ॥ १६ ॥
तदानीं तदुपाध्यायः स्मित्वा साक्षेपमब्रवीत् । राजन् ! जनाः स्वभावेन परदोषैकदर्शिनः ॥ १७ ॥
तथाहि त्वमिमं पङ्के हसमि ग्रामशूकरम् । किन्तु निन्दसि नात्मानं मग्नं मदनकर्दमे ॥ १८ ॥
इत्युक्त्वान्तर्दधे शीघ्रं सह प्रेक्षणकेन सः । अश्रूयत च सुव्यक्ता व्योम्नि वागशरीरिणी ॥ १९ ॥
वीरसेनः पिताहं ते त्वां बोधयितुमागतः । त्यज वत्स ! महामोहं भज निर्वाणपद्धतिम् ॥ २० ॥
तदाकर्ण्य नलो राजा सहसैव चमत्कृतः । सुप्तोत्थित इवाकाले निनिन्द स्वं प्रमादिनम् ॥ २१ ॥
अहो ! मम विमूढस्य विषयान्धस्य दुर्धियः । यदेव कृत्यमात्मीयं तदेव किल विस्मृतम् ॥ २२ ॥
अनादिभवसंस्कारः कारणं तत्र मन्यते । भूयो भूयोऽनुभूतेषु विषयेष्वेव यद् भ्रमः ॥ २३ ॥
अहो ! मोहबलं यातां निर्वृत्तिर्यत् प्रवृत्तितः । अनित्यं जीवितं मत्वा यद् जना विषयार्थिनः ॥ २४ ॥

कष्टं वैदग्ध्यमप्यत्र मत्तानां मोहवृत्तये । न तथा पशवो दक्षा मनुष्या मैथुने यथा ॥ २५ ॥
सन्ध्यादिवारात्रिघटीसमेते जनायुरम्भःपरिशोषणाय ।
आदित्यचन्द्रौ वृषभौ बलिष्ठौ कालारघट्टे परिवर्त्तयेताम् ॥ २६ ॥
यौवनं जलतरङ्गचञ्चलं जीवितं जलदजालसन्निभम् ।
सङ्गमाः कपटनाटकोपमा हन्त दुस्तरतरो भवोदधिः ॥ २७ ॥
निगृह्य केशेषु निपात्य दन्तान् बाधिर्यमाधाय विधाय चान्ध्यम् ।
कामान् बलादेव जरा हिनस्ति स्वेनैव नो मुञ्चति पूर्वमेव ॥ २८ ॥
तारुण्यरत्नं पतितं क्व तद् मे हतोऽस्मि हा दैव! कथं करोमि ?
इतीव नम्रः किल मन्दमन्दं पश्यन् प्रयाति स्थविरो वराकः ॥ २९ ॥
करौ शिरो वापि मुहुर्धुनानं मृत्योर्भयात् कम्पितसर्वगात्रम् ।
निषेधचेष्टाविधुरोऽपि वृद्धं गृह्णाति हा हन्त ततः कृतान्तः ॥ ३० ॥
अतः परित्यज्य जवेन राज्यं तपोवने यामि विनीतमोहः ।
न पूर्वजैर्मे जरठस्वभावे सौधेषु पर्यङ्कयुतैः प्रसुप्तम् ॥ ३१ ॥
पूर्वकर्मनिपुणा दिवानिशं भीमजापि तपसेऽनुशास्ति माम् ।

दुर्गरस्य हि ममैव केवलं दुस्त्यजो विषयवासनाभरः ॥ ३२ ॥
इति मनसि तदीये चारुचारित्ररत्नग्रहणमतिरतीव स्थैर्यभावं गता च ।
मुनिरपि हि सुदामा नाम धाम श्रुतीनां वनभुवि वनपालस्याननेन श्रुतश्च ॥ ३३ ॥

इति माणिक्यदेवसूरिकृते नलायने दशमे स्कन्धे प्रथमः सर्गः ॥ १ ॥



## दशमे स्कन्धे द्वितीयः सर्गः ।



अथ श्रुत्वा भवश्रान्ति शान्तिमान् मुनिसेवया । पवित्रयितुमात्मानं ययौ भैम्या समं नलः ॥ १ ॥
नत्वा स विधिवत्तस्य मुनिकेसरिणः पुरः । विवेश विवशीकुर्वन् महामोहामतङ्गजम् ॥ २ ॥
तस्य मुक्तिलतामूलं वैराग्यं वाक्यवृष्टिभिः । सिषेच हृदयवापव्यापकं मुनिवारिदः ॥ ३ ॥
राजन् ! विश्वैकवीराणां पथि प्रस्थितवानसि । यद् विनिर्जित्य बाह्यारीनन्तरङ्गान् जिगीषसि ॥ ४ ॥
लीलया दुर्जया ह्येते विनिर्जितसुरासुराः । अनात्मवत्तया पुंसां सकृदुद्यममात्रतः ॥ ५ ॥
क्षणिकं खलु वैराग्यं रागान्धमनसां नृणाम् । तद् दुःखं मोहगर्भं च सञ्जातमपि निष्फलम् ॥ ६ ॥
ज्ञानगर्भं तु वैराग्यं यत् किञ्चिदविनश्वरम् । तत्कार्यैकरमत्रैकं क्वापि कुत्रापि कस्यचित् ॥ ७ ॥

न कथञ्चिद् विरज्यन्ते जन्तवः सिद्धसाध्वसाः । मधुबिन्दुनरप्रायाः प्रायः कृपणवृत्तयः ॥ ८ ॥
धर्मादग्निर्ज्वलति जलदो वर्त्तते वाति वातः। चन्द्रादित्यौ भृशमुदयतः सागरः पाति सीमाम् ।
त्राता दाता शरणमचलो धर्म एकः किमन्यत् । निर्धर्माणां नरककुहरक्रोडवासः सदैव ॥ ९ ॥
ज्ञात्वापि धर्मं मुनिभिः प्रणीतं क्रियापरो शुक्तिमुपैति नान्यः ।
मासाहसप्रायगिरो वराका हस्तस्थदीपाः प्रपतन्ति कूपे ॥ १० ॥
प्रपित्सुना मुक्तिपदं भवाब्धेः सदैव भव्येन गुरुर्निषेव्यः ।
दवाग्निरुद्धेऽध्वनि पङ्गुमन्धः स्कन्धेन धत्ते नहि निर्गमाय ॥ ११ ॥
इति निरुपमरम्यैर्निर्मलैः सूरिभर्तुर्वचनरसतरङ्गैर्धौतमिथ्यात्वपङ्कः ।
सपदि सपरिवारो वैरसेनिर्विरक्तः कृतमतिरुदतिष्ठद् विष्टपव्यापिकीर्त्तिः ॥ १२ ॥
इति श्रीमाणिक्यदेवसूरिकृते नलायने दशमे स्कन्धे द्वितीयः सर्गः ॥ २ ॥

## दशमे स्कन्धे तृतीयः सर्गः ।

अथ प्राप्य पुरं श्रीमान् मनीषी निषधेश्वरः । राज्याभिषेकसंस्कारमिन्द्रसेनस्य निर्ममे ॥ १ ॥
नलं दीक्षोन्मुखं ज्ञात्वा तत्सुतं च पदस्थितम् । समहर्षविषादानां जनानां काप्यभूद् दशा ॥ २ ॥

इन्द्रसेनस्य राज्याभिषेकः ॥

यथा पाणिग्रहारम्भो यथा दिग्विजयोद्यमः । तथा तस्याभवत् कोऽपि संयमग्रहणोत्सवः ॥ ३ ॥
अर्चयन् सर्वचैत्यानि प्रयच्छन् दानमर्थिनाम् । अन्वितः स पुरीलोकैर्निर्ययौ नगराद् बहिः ॥ ४ ॥
अनुज्ञाप्य जनं सर्वं तत्र विश्लेषकातरम् । प्रविवेश महारण्यं सभार्यो भूभुजां वरः ॥ ५ ॥
श्रुतशीलो महामन्त्री बाहुकश्च महाबलः । महाबलो महाबाहुः केशिनी च कुशाग्रधीः ॥ ६ ॥
ऋतुपर्णश्च भूपालः पुष्कराद्याश्च पार्थिवाः । तदा विहाय गार्हस्थ्यं वनवासं प्रपेदिरे ॥ ७ ॥ युग्मम् ॥
मध्ये गीतार्थसार्थानां तत्त्वं ज्ञात्वा गुरोर्मुखात् । महाव्रतधरो धीरः स चकार महत् तपः ॥ ८ ॥
अथ क्रमादनातङ्कमकलङ्कमसङ्करम् । अनागाधमनाबाधमनूर्मिपरिवारितम् ॥ ९ ॥
असंहननसंस्थानमलिङ्गमगुणत्रयम् । विवेश विशदं राजा सद्यः स ब्रह्मसागरम् ॥ १० ॥ युग्मम् ॥
तपस्तपस्यतस्तस्य तथ्यमित्थं तपोवने । स्वराज्यहरणाशङ्की शक्रोऽपि हृदि चुक्षुभे ॥ ११ ॥
ततस्तस्य तपोविघ्नं कर्त्तुं कीर्त्तिपयोनिधेः । आययुर्वासवादिष्टा भुवमप्सरसो दिवः ॥ १२ ॥
न सेहिरे समाधिस्थैर्मुनिभिर्निर्भरैरपि । बलात् पुलकदायिन्यो मलयाचलवीचयः ॥ १३ ॥
चक्रे कर्णकुरङ्गाणां बन्धनं गुणबन्धुरा । देवगानमयी काचिद् वागुरा दूरविस्तृता ॥ १४ ॥
तथापि हि तमक्षोभ्यं राजर्षिमपकर्षितुम् । न कथञ्चित् सुरस्त्रीणां स्वीचक्रे साहसं मम ॥ १५ ॥
ततः किमपि केशिन्या सम्यक् साम्यं दधानया । बभूव छद्मवैदर्भी रम्भा मेनकया सह ॥ १६ ॥
ददर्श क्रियमाणां तां नलः कलविलापिनीम् । घोरराक्षसवेषेण चित्रं चित्ररथेन खे ॥ १७ ॥

महाराज ! महाराज ! परित्रायस्व मामितः । क्रौञ्चकर्णानुजेनाहं नीये किर्मीरमालिना ॥ १८ ॥
अरण्येऽपि हृता पूर्वं न त्वत्पादप्रसादतः । पश्यतोऽपि तवेदानीं हाहा ! हरति राक्षसः ॥ १९ ॥
क्व तत् ते सहजं तेजः ? क्व तद् दिव्यास्त्रवैभवम् ? । त्रातुमार्त्तां प्रियां साध्वीं प्रसीद सदयो भव ॥ २० ॥
प्रियापहरणेऽप्युच्चैरुदासीनं नरेश्वरम् । धिग् धिक् कुर्वन्ति हन्त त्वां पश्य पश्य दिवौकसः ॥ २१ ॥
माभूत् तव मयि स्नेहो माभूद् द्वेषोऽपि विद्विषि । तथाप्यार्त्तपरित्राणं विधातुं न विरुध्यसे ॥ २२ ॥
तव राजन् ! विरोधेन ह्रियमाणा विरोधिना । कमन्यमधुना याचे शरणं त्वयि तिष्ठति ॥ २३ ॥
इति शृण्वन् तदाक्रन्दान् अट्टहासांश्च रक्षसः । आशु चुक्षोभ राजर्षिर्विस्मृतात्मलयो नलः ॥ २४ ॥
उत्पाद्य निकटस्थं द्राक् द्रुमं स नरकुञ्जरः । बभाषे भीमदोस्तम्भः साभिमानमिदं वचः ॥ २५ ॥
माभीर्भीमोद्भवे ! माभी रेरे तिष्ठ निशाचर ! । दुरात्मन् ! मामनिर्जित्य चौरवत् किं पलायसे ? ॥ २६ ॥
इति राजर्षिणाक्षिप्तः स मायामयराक्षसः । विहाय छद्मवैदर्भीं युद्धायाभिमुखोऽभवत् ॥ २७ ॥
द्वयोः प्रववृते युद्धं प्रकम्पितधराधवम् । क्ष्वेडानादभुजास्फोटबधिरीकृतदिग्मुखम् ॥ २८ ॥
परस्परप्रहाराणां तौ प्रशंसापरौ मिथः । युयुधाते चिरं योधावुत्तरोत्तरविक्रमम् ॥ २९ ॥
ततो राजर्षिणा रोषात् मुष्ट्या मूर्द्धनि ताडितः । पलायते स्म साक्रन्दं स पलादः पुलाकया ॥ ३० ॥
उत्फुल्लवदनाम्भोजा सस्मितं विस्मितेव सा । द्राक् छद्मदमयन्ती तमालिलिङ्ग च निर्भरम् ॥ ३१ ॥



नलस्य दीक्षा, श्रुत-शीलादीनां वनवासश्च।

तदङ्गपालिसंभूतपुलकः शुशुभे मुनिः । अकालजलवृष्ट्येव कदम्बः स्फुटकोरकः ॥ ३२ ॥
ततो विकृतिमात्मीयां संवृण्वन् स्मृतसंयमः । स देवेन कृतां मायां विवेद च निनिन्द च ॥ ३३ ॥
जगादन्तर्दधे रम्भा संभ्रमेण मुनीशितुः । कितवः कृतकर्त्तव्यो न ह्युपायेन तिष्ठति ॥ ३४ ॥
मुनीन्द्रोऽपि तदात्मीयं शीलदर्पणलाञ्छनम् । ततश्च सुतरां तीक्ष्णैस्तपःशाणैरनेकशः ॥ ३५ ॥
रूपं ममापि च तथैव विकृत्य कृत्यैः शक्राज्ञया यदमरैश्छलितो नरेन्द्रः ।
नैनास्म्यहं तदुपसर्गनिमित्तभूता मत्वेति भीमतनयापि तपस्ततान ॥ ३६ ॥
नानाशनैरनशनैर्ग्लपिताङ्गयष्टिः स्वाध्यायसंयमसमाधिषु बद्धकक्षः ।
श्रीमान् मुनिः क्षपितकर्मनलोऽमलोऽपि भाग्यैरभूदुपरि सर्वमहामुनीनाम् ॥ ३७ ॥
तस्मिन् गते नृपऋषौ अवनान्तरेण सम्यक् समाधिपरिणामपरायणे च ।
साध्वीशिरोमणिरसद्व्ययगुणैकभूमिर्भीमोद्भवापि समपद्यत कालधर्मम् ॥ ३८ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने दशमे स्कन्धे तृतीयः सर्गः ॥ ३ ॥

# दशमे स्कन्धे चतुर्थः सर्गः।

अथ सत्कर्मसम्बन्धान् भोक्तुं भोगफलात्मनः। पुण्यश्लोकः स राजर्षिरासीदुत्तरदिक्पतिः ॥ १ ॥
सार्द्धषोडशवर्षीयः पुरुषाकृतिमुद्वहन्। उत्तस्थौ रत्नपर्यङ्कात् स विक्षिप्तोत्तरच्छदः ॥ २ ॥
ततो जय जयेत्युच्चैर्नन्द नन्देति चोच्चकैः। भद्रं भद्रमिति व्यक्तं व्याजह्रुस्त्रिदिवौकसः ॥ ३ ॥
चमरालङ्कृतां बिभ्रद् गदामुद्दामविग्रहः। प्राप देशप्ररोहस्य स श्रियं वटशाखिनः ॥ ४ ॥
कमपि प्रियमुद्दाममपुष्यत् पुष्यकं तदा। स्वामिनाधिष्ठितं तेन विरिञ्चिनेव वारिजम् ॥ ५ ॥
पुरातनतनूपत्न्या तस्यैव दयितास्थितौ। भीमोद्भवापि सा देवी तत्रैव समजायत ॥ ६ ॥
महाबलः समं पत्न्या ऋतुपर्णः स पुष्करः। तस्यैव भृत्यभावेन समजायत तत्क्षणम् ॥ ७ ॥
जानतामवधिज्ञानात् तेषां प्राग्भवमात्मनः। जज्ञेऽनुस्यूतसन्धाना सर्वेषां प्रेमशृङ्खला ॥ ८ ॥
धनाधिपतिमुत्पन्नं नूतनं तमवेक्षितुम्। उत्कण्ठिताः समाजग्मुस्तत्र शक्राद्यः सुराः ॥ ९ ॥
तस्याभिषेकसंस्कारं कर्त्तुं प्रगुणपाणयः। तिष्ठन्ति स्म महेन्द्राद्या महता संभ्रमेण ते ॥ १० ॥
ततः परमया भक्त्या ललाटघटिताञ्जलिः। प्रणम्य वेत्रपाणिस्तं वज्रिवीर्यं व्यजिज्ञपत् ॥ ११ ॥
दिष्ट्या देव ! यदेतेषां सर्वेषामनुजीविनाम्। भागधेयैस्त्वमस्माकमुत्पन्नोऽसि धनेश्वरः ॥ १२ ॥

तिष्ठत्स्वपि हि सर्वेषु देवेषु वरुणादिषु । कुबेर ! तव तुल्या श्रीः कस्येह किल वर्त्तते ॥ १३ ॥
क्रीडावनानि वनकल्पमहीरुहाणां चिन्तामणिस्थलभुवो भवतः समस्ताः ।
त्वं कामधेनुनिकटव्रजकोटिनाथस्त्वत्सन्निभो न विभवेन भवेऽस्ति कश्चित् ॥ १४ ॥
इति प्रतीहारगिरं निशम्य सुरः प्रयोगाय सुमङ्गलाय ।
सज्जीभवन्नर्हदुपास्ति पूर्वं सुशाश्वतं चैत्यगृहं विवेश ॥ १५ ॥
तत्र प्रणम्य भगवन्तमनन्तमन्तःसन्तापसन्ततिहरं परमेष्ठिनं सः ।
अभ्यर्च्य तत् तदुपचारभरैश्च भक्त्या चक्रे विचारचतुरः स्तुतिमित्थमर्थ्याम् ॥ १६ ॥
परमया रमया परिशीलितं शमितया मितया विजितक्रुधः ।
त्रिभवदं भवदङ्घ्रिसरोरुहं सुकृतिनः कृतिनः परिचिन्वते ॥ १७ ॥
तव पादपद्मयुगमत्र मतां शरणं विधाय चिरमत्रसताम् ।
विषयार्णवेऽपि न भयं पततां वियतीव पक्षियुगलं पतताम् ॥ १८ ॥
त्वं दर्शनादपि ददासि समीहितार्थान् त्वच्चिन्तनादपि विनश्यति विघ्नवर्गः ।
यत्नेन नाथ ! विहिता तव पर्युपास्तिर्भव्यात्मनां बहु भवभ्रमणं रुणद्धि ॥ १९ ॥
अपाराय साराय शश्वद् नमस्ते प्रकृष्टाय शिष्टाय दिष्ट्या नमस्ते ।

अनन्ताय नित्याय नित्यं नमस्ते नमस्ते नमस्ते नमस्ते नमस्ते ॥ २० ॥
स्तवनमवनतः स तथ्यमित्थं नवनवमङ्गलकारि चारु कृत्वा ।
अभदजभिजनाभिधानधन्यं धनदपदं त्रिदशेश्वराभिषिक्तः ॥ २१ ॥
एतत् किमप्यनवमं नवमङ्गलाङ्कं साहित्यसारविदुषा कविना कृतं यत् ।
तस्यार्यकर्णनलिनस्य नलायनस्य स्कन्धो जगाम दशमः शमसंभृतोऽयम् ॥ २२ ॥
उत्पत्तिदौत्यवरविड्वरशीलसूचासंयोगराज्यभवनिर्वहणाभिधेयाः ।
स्कन्धा भवन्ति दश यस्य नलायनस्य पूर्णं तदेतदधुना धनदप्रसादात् ॥ २३ ॥

इति श्रीमाणिक्यदेवसूरिकृते नलायने दशमे स्कन्धे चतुर्थः सर्गः ॥ ४ ॥

समाप्तं चेदं नलायनं १ कुबेरपुराणं २ शुकपाठ ३ इत्यपरनामकम् ।

संपूर्णोऽयं ग्रन्थः ।

# शुद्धिपत्रकम् ।

| अशुद्धम् | शुद्धम् | पृष्ठे | श्लोकः |
|---|---|---|---|
| –मीक्षते | –मीक्ष्यते | १६ | १ |
| उत्यादि वादिनौ | उत्पादिवादिनौ | १९ | ७ |
| देवाकर्णयसं प्रति | देवाकर्णय संप्रति | १९ | २१ |
| –मस्मागि– | –मस्माभि– | २२ | २० |
| ीर शून्या | वीरशून्या | ३२ | १० |
| यदामूर्ग– | यदा मूर्ग– | ३७ | ३५ |
| आगार्गनं | अगार्गनं | ४२ | २४ |
| –र्म धुरैरपि | –र्मधुरैरपि | ४६ | १२ |
| कुठार हताऽपि | कुठारहताऽपि | ४८ | २६ |
| मुहुर्मुहुर्न | मुहुर्मुहुर्न | ४८ | २६ |
| तं मुञ्चेद् | मुञ्चेद् | ५० | १२ |
| –के सराढ्यैं· | –केसराढ्यैः | ५२ | १६ |
| तद्वाष्प– | तद्वाष्प | ५२ | १६ |
| किं तव | किं न तव | ५२ | १८ |
| उच्छन्नलः | उच्छृन्नलः | ५२ | २० |
| समस्ताः । कस्य | समस्ताः कस्य | ५२ | २१ |
| –मभ्यर्थसे | मभ्यर्थ्यसे | ५३ | १२ |
| नपैधः | नैपधः | ५७ | २५ |
| नपैधोऽपि | नैपधोऽपि | ६४ | ३२ |
| –गुज्जित– | –गुञ्जित– | ७६ | २९ |

| | | | |
|---|---|---|---|
| विटैघर्टय– | विटैर्घटय– | ७६ | ३१ |
| किं | किं | ८० | ९३ |
| सामान्त | सामन्त | ८२ | २४ |
| दुखं | दुःखं | ८२ | ३२ |
| सद यं | सदयं | ८२ | ३९ |
| कथा | कृथा | ८३ | ४९ |
| चैन्द्रं | चेन्द्रं | ८३ | ६५ |
| त्यक्त्वाचाज्ञामपि | त्यक्त्वा चाज्ञामपि | ८४ | ७३ |
| वहुविधांः | वहुविधां | ८४ | ७३ |
| –मब्रबीत् | –मब्रवीत् | ८४ | २ |
| तथुस्ष– | तस्थुष– | ८९ | १६ |
| पुनुरागतम् | पुनरागतम् | १३५ | २५ |
| दैवमकायज्ञ– | दैवमकार्यज्ञ– | १४३ | २ |
| भवन्तुत्व– | भवन्तु त्व– | १४३ | २४ |
| दारत्यागीस | दारत्यागी स | १५३ | २७ |
| प्रत्युवाचस | प्रत्युवाच स | १६१ | २० |
| निजगात्रेम्यो | निजगात्रेभ्यो | १६४ | ३६ |
| लोकापाला | लोकपाला | १६८ | ३९ |
| –मुहुर्त्त– | –मुहूर्त्त– | १७० | ५२ |
| सृजन्त श्चित्तं | सृजन्तश्चित्तं | १७४ | ५७ |
| भूमिपाल ञ्यालोल | भूमिपालञ्यालोल | १७४ | ५८ |
| तृष्णाशिनः | तृणाशिनः | १७९ | ७ |
| पोतानाभिधे | पोतनाभिधे | १८१ | १ |
| महामोहा– | महामोह– | १८५ | २ |



# श्रीयशोविजयग्रन्थमालायां विक्रेयपुस्तकानि ।

| | |
|---|---|
| प्रमाणनयतत्त्वालोकालङ्कारः | १-८-० |
| हैमलिङ्गानुशासनम् .. | १-०-० |
| सिद्धहैमशब्दानुशासनम्(लघुवृत्ति) | ५-०-० |
| गुर्वावली ... . . | ०-८-० |
| रत्नाकरावतारिका( द्वि. पं. परिच्छेदात्मक ) ... | १-०-० |
| सिद्धहैमसूत्रपाठमूलम् | ०-६-० |
| जैनस्तोत्रसंग्रहः द्वितीयो भागः | ०-१२-० |
| [illegible]प्रकरणम् .... | ०-८-० |
| क्रियारत्नसमुच्चयम् .... | २-०-० |
| सिद्धहैमसूत्रपाठस्य अकाराद्यनुक्रमणिका . .. | ०-४-० |
| कविकल्पद्रुमः.... ... | ०-४-० |
| सन्मतिव्याख्यासहितः . प्रथमो विभागः ... | १-०-० |
| जगद्गुरुकाव्यम् . | १-०-० |
| शालिभद्रचरित्रम् .... | ७-०-० |
| पर्वकथासङ्ग्रहः . | ०-६-० |
| षड्दर्शनसमुच्चयः . | ०-४-० |
| शीलदूतम् ... .... | ०-४-० |
| निर्भयभीमव्यायोगः .... | १-०-० |
| शान्तिनाथमहाकाव्यम् .... | ३-०-० |
| रत्नाकरावतारिका .... | ६-०-० |
| विजयप्रशस्तिमहाकाव्यम् ... | ८-०-० |
| गुरुगुणरत्नाकरकाव्यम् .... | ०-८-० |
| उपदेशतरङ्गिणी .... | ३-०-० |
| मल्लिनाथमहाकाव्यम् .... | ७-०-० |
| अन्ययोगव्यवच्छेदद्वात्रिंशिका सटीका .... | ११-४-० |
| पार्श्वनाथचरित्रम् .... | ५-०-० |
| हैमविभ्रमम् .... .... | १-०-० |
| शब्दरत्नाकरकोषः .... | ५-०-० |
| नेमीनाथमहाकाव्यम् | २-०-० |
| विशेषावश्यकभाष्यम्(सटीकम्) | ५०-०-० |

